श्रीमद्वाग्भटविरचितं

# अष्टाङ्गहृदयम् ।

( मूलमात्रम् )

भिषग्वर–नवरे इत्युपाह्वकृष्णशास्त्रीति
सुप्रसिद्धविद्वद्वरेण परिशोधितम् ।

तच्च

"काव्यतीर्थ" इत्युपाधिधारिणा आचार्येत्युपाह्व-
रामात्मज-नारायणशर्मणा पाठान्तरैः
पारिभाषिकशब्दकोषेण चालङ्कृत्य
संस्कृतम् ।

षष्ठं संस्करणम् ।

शाकः १८५४, सन १९३२.

मूल्यं १॥। पादोनरूप्यकद्वयम् ।

मुम्बय्याम्

निर्णयसागरमुद्रणालयाधिपतिना स्वीयाङ्क-
नालये मुद्रयित्वा प्रकाशितम् ।

---



---

Published by Pandurang Jawaji, and Printed
by Ramchandra Yesu Shedge at
the Nirnaya-sagar Press,
26-28, Kolbhat Lane,
Bombay.

# प्रथमसंस्करणस्य प्रस्तावः ।

अस्त्येतद्वर्णनीयतरं भुवि यदार्याङ्ग्लभौमोभयवैद्यशास्त्रपारंगमः कुंटे इत्युपनामकोऽण्णामोरेश्वरशर्माऽष्टांगहृदयस्य प्रकाशनं कृत्वा जगदुपर्युपकरोति स्मेति । आधुनिकानां पण्डितानामस्मत्प्राचीनार्यवैद्यके रुचिः संपद्यते तस्य बह्वंशेन यशोऽस्य महाशयस्य परोपकारनिरतांतःकरणपूर्वकमहाप्रयत्नस्यैवेति कथने न काप्यतिशयोक्तिर्भवितुमर्हति ।

संप्रत्यन्योऽस्माकं महानाशांकुरः यदार्यवैद्यकं पूर्ववत्प्रचाराचारविचारचर्चार्हं भवेदिति । प्राचीनोपलब्धग्रंथेष्वन्वर्थतयाष्टांगहृदयं हृदयमिवायुर्वेदशरीरस्य चालकपालकलालकमेवेत्यत्र संशयो नास्त्येवेति । तस्मात्तन्महाप्रयासेन विकसितं शुद्धं हृद्यं च विधातुं तद्धारकैरत्यावश्यकत्वेन यतनीयमिति मे बुद्धिः सार्थपर्यवसायिनी भवेत् । अलमधिकेन वचनेन । मूलमात्रकरणस्य हेतुर्यत्प्रचारकर्मणि सुलभता स्यादिति संक्षेपतो वर्णयामि । निर्णयसागरमुद्रणालयाधिपतिना त्विदं सत्कार्यं यथा पूरितं यत्तत्र किमपि न्यूनं न विद्यते,

यथाऽक्षराणि सुसूक्ष्माण्यपि स्पष्टानि, पत्राणि मृदून्यपि चिरजीवीनि, मुद्रणोपयोगिनीतराण्यपि कार्याणि सम्यक्तया पर्यालोच्येदं पुस्तकं प्रकाशतां नीतम् । अस्मिन्पुस्तके स्थलविशेषेऽर्थस्य विशदीकरणार्थं किंचिद्दिग्दर्शनमावश्यकं ज्ञात्वा तदर्थं क्षेपकश्लोकमुद्रणमपि कृतमस्ति तथा चाष्टांगहृदयस्यापि हृदयरक्षणीयो य उचितो भागस्तज्ज्ञानार्थं स्थले स्थले चावतरणचिह्नानि कृत्वा तन्मुखहृदयैकीकरणसूचनं कृतमस्ति । तेन व्याशास्महे यदवतरणांतर्गताः श्लोका आयुर्वेदाब्धिपारं तारयेयुरिति स्वहृदयमिव समवायिसंबंधतयाऽन्येभ्यो दर्शयितुं पठनतत्परः समर्थयिष्यतीति । अस्योपयोगार्हेणा भवच्चेत्तर्ह्यायुर्वेदस्यान्येऽपि ग्रंथा एतद्रीत्या मुद्रापयितुं शक्या भूयासुरिति सर्वेषां परमेश्वरं प्रार्थये । अस्तु अलमतिविस्तरेणेति शम् ।

नवरे-इत्युपाह्वः कृष्णशास्त्री.

# षष्ठसंस्करणस्य प्रास्ताविकम्.

पुरा किलाखिलजगत्प्रलयसमयानुगुणमेकार्णवीभूते ज-
गति सुचिरं विश्राम्यतो भोगिभोगतल्पशयानस्य पुनर्जग-
त्सिसृक्षोर्भगवतो नाभ्यम्बुरुहादुद्भूते सहस्रपत्राम्बुजे स्वयं
स्वयम्भूः प्रादुर्बभूव. व्यलोकयच्च चेतस्ततोऽम्बुकल्लोलमा-
लाभ्यासमाकुलमपूर्वकमलाधिष्ठितं च केवलमात्मानम्. परं
चकित इव स स्वीयप्रादुर्भावमूलनिदानमजानानः किंकर्तव्य-
तामूढधिषण आसीच्चिराय. अचिन्तयच्चाखिलसामर्थ्यसम्प-
न्नमीशानम्. तदा समस्तबीजकारणभूतेन करुणावरुणाल-
येन श्रीभगवतान्तरिक्षालक्षितवाण्या 'तपतप" इति द्विर्ग-
दितेनोपशिक्षितः परमेष्ठी परमेण समाधियोगेन स्वोत्पत्ति-
कारणं भगवन्तमारिराध तपसा. अथास्य तेन तपोभरेणा-
त्यन्तं परितुष्ट आदिपुरुषोऽस्मै विश्वसर्गज्ञानावबोधाय सरह-
स्यानृग्यजुःसामाथर्ववेदान्, आयुर्वेद-धनुर्वेद-गान्धर्ववेदादी-
नुपवेदांश्चोपादिशत्. तेन विकसितान्तःकरणप्रसूनो धाता वेद-
प्रदर्शितपथाखिलं चलं जगद्यथापूर्वं परस्परसापेक्षमकल्पयत्.
नरतिर्यगादिस्थलजलचरादि प्राणिजातं विविधरोगगणं तदुप-
शामकभेषजानि वृक्षौषधिलतागुल्मादीन्येतत्सकलमप्यति-

सृष्टप्राणिनां विशेषतश्च मानवानामनामयत्वेन सुखसंचा-
रविचारोऽपि वेदेभ्य एवोज्ञेय इति पारमेश्वरः सङ्केतः. अना-
मयमन्तरा नानाविधकर्मयोगज्ञानविज्ञानपौरुषादि साधयितुं
सुतरां न शक्नोति कश्चिदपीति च प्रायो निश्चयप्रवणमेवेति
न तत्र कस्यापि विप्रतिपत्तिः. वेदेषु च तत्र तत्र "इमां
खनाम्योषधिं वीरुधां बलवत्तमाम्" "विश्वभेषजीः",
"पृणीत भेषजं" इत्यादिभेषजनामान्युद्धृष्टानि दृश्यन्ते.
"अक्षीभ्यां ते नासिकाभ्यां" इत्यादि कानिचित्सूक्तानि राज-
यक्ष्मघ्नानि "रक्षोहणं" इत्यादिरक्षोघ्नानि चोपलभ्यन्त एव,
तथापि स्वास्थ्यरक्षणव्याधिनिवारणयोर्मूलतत्त्वानि, शारीरा-
दिशास्त्राणामङ्गप्रत्यङ्गविनिश्चयः सर्वेषामामयानां स्वरूपं,
कस्यां रुजि कतमौषधियोजनीया, कथं वा भैषज्यनिर्माणं
संपादनीयं किंवा तन्मानमित्यादिव्यवस्था आयुर्वेदैकसाध्येति
न तिरोहितं विदुषाम्. आयुर्वेदपारीणैस्त्रिकालशैर्गहनमहिम-
भिर्मुनीन्द्रैस्तदनुयायिभिरितरैर्विद्वद्धुरीणैर्वैद्यकविषया महान्तो
लघवश्चानेके निबन्धा निबद्धाः सन्ति महीमण्डले. तेष्वपि
सुश्रुत-चरकाद्या महानिबन्धा व्युत्पित्सूनामपि व्युत्पत्तिकरण-
क्षमा भैषज्यनिबन्धोऽपदव्यर्हाः सन्ति, परमस्याप्ताङ्कहृद-
यस्य पुनः किमित्यारम्भ इति केषांचिदागामिनमाक्षेपं परि-
माष्टुं ईषल्लिख्यते—सर्वादरणीये सुश्रुतनिबन्धेऽत्यन्तं प्रशं-

सनीयेऽपि न तत्र यथावन्नेत्रादिरोगचिकित्सा विद्यते, प्रशंसनीयेऽपि चरकनिबन्धे यथावन्न निबद्धास्ति कासश्वासादिचिकित्सा, एवमेव प्रायः सर्वेष्वपि वैद्यकग्रन्थेषु तत्र तत्र वैकल्यं दरीदृश्यते, तत्सर्वमाकलय्य ग्रन्थप्रणेत्रैवोपसंहारे निर्दिष्टम्—

"यदि चरकमधीते तद्ध्रुवं सुश्रुतादि-
प्रणिगदितगदानां नाममात्रेऽपि बाह्यः।
अथ चरकविहीनः प्रक्रियायामखिन्नः
किमिह खलु करोतु व्याधितानां वराकः॥"

एवं वैकल्यमालोच्य सर्वेषां वैद्यकविषयाणामाकलनमेकेनैव महता निबन्धेन भूयादिति भिषगायुर्वेदपारीणेन महोपाध्याय—श्रीमद्वाग्भटमहाशयेन सुविशदैरष्टभिरपि वैद्यकाङ्गैर्यथावत्परिपूर्णोऽष्टाङ्गहृदयनामा सर्वाङ्गसुन्दरो महानिबन्धो व्यधायीति सुव्यक्तं मूर्धन्यत्वमस्य.

सचायं ग्रन्थो मूलमात्रोऽप्ययथावधि नैकवारं यथापूर्वमेवाङ्कितः प्रमादपाठबहुल एवासीत्. अधुनातनस्मिन्नवसरे यावच्छक्यं विशेषतः शोधनेन संस्करणीय इति मनसिकृत्य आदर्शार्थमन्यान्यमुद्रिताऽमुद्रितपुस्तकान्याकलय्य सूक्ष्मदृशा तेभ्यस्तेभ्यो मूलपाठान् हेमाद्रेरायुर्वेदरसायनटीकाया अरुणदत्तस्य सर्वाङ्गसुन्दराटीकायाश्च साहाय्येन यावद्बुद्ध्युदयं

संशोध्य पाठान्तराणि चाधष्टिप्पण्यां सन्ति सङ्कलितानि, तथा क्वचिल्लब्धान्यधिकपद्यानि नूतनानीति ज्ञापनार्थं मध्येमध्ये सूक्ष्माक्षरैर्विन्यस्तानि महता प्रयासेन; वैद्यकपारिभाषिकशब्दकोषोऽपि सुखेन ग्रन्थप्रवेशार्थमन्ते संयोजितोऽस्ति; कृतेऽप्येतादृशे प्रयासे विषयस्य गाम्भीर्यात्तद्विज्ञानस्य भिषग्वर्यैकसाध्यत्वाद्दृग्दोषादिना च क्वचिदवशिष्टं स्खलितं "गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः" इति न्यायमनुसृत्य परिमार्जयन्तु गुणैकपक्षपातिनो विद्वांस इति तान्सविनयं सम्प्रार्थ्य विरमाम्यस्मात्प्रस्तावात्—

विदुषां वशंवदः

**आचार्योपाह्व-नारायणशर्मा.**

# विषयानुक्रमणिका.

## सूत्रस्थानम् ।

---

## शारीरस्थानम् ।

| विषयः | पृष्ठं. |
|---|---|

## निदानस्थानम्

## कल्पस्थानम् ।

| विषयः | पृष्ठं. |
|---|---|

**अथ ग्रंथ्यर्बुदश्लीपदापचीनाडीविज्ञानाध्यायः॥२९॥**

इत्यष्टांगहृदयानुक्रमणिका समाप्ता ॥

# अष्टाङ्गहृदयम् ।

## सूत्रस्थानम् ।

"रागादिरोगान् सततानुषक्ता-
नशेषकायप्रसृतानशेषान् ।
औत्सुक्यमोहारतिदाञ्जघान
योऽपूर्ववैद्याय नमोऽस्तु तस्मै ॥ १ ॥"

अथात आयुष्कामीयमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥

"आयुःकामयमानेन धर्मार्थसुखसाधनम् ।
आयुर्वेदोपदेशेषु विधेयः परमादरः ॥ २ ॥
ब्रह्मा स्मृत्वाऽऽयुषो वेदं प्रजापतिमजिग्रहत् ।
सोऽश्विनौ तौ सहस्राक्षं सोऽत्रिपुत्रादिकान्मुनीन् ॥३॥
तेऽग्निवेशादिकांस्ते तु पृथक् तन्त्राणि तेनिरे ।
तेभ्योऽतिविप्रकीर्णेभ्यः प्रायः सारतरोच्चयः ॥ ४ ॥

---

१ 'दमुसोः सामर्थ्ये' इति षादेशः ।

क्रियतेऽष्टाङ्गहृदयं नातिसंक्षेपविस्तरम् ।
कायबालग्रहोर्ध्वाङ्गशल्यदंष्ट्राजरावृषान् ॥ ५ ॥
अष्टावङ्गानि तस्याहुश्चिकित्सा येषु संश्रिता ।
वायुः पित्तं कफश्चेति त्रयो दोषाः समासतः ॥ ६ ॥
विकृताविकृता देहं घ्नन्ति ते वर्तयन्ति च ।
ते व्यापिनोऽपि हृन्नाभ्योरधोमध्योर्ध्वसंश्रयाः ॥ ७ ॥
वयोऽहोरात्रिभुक्तानां तेऽन्तमध्यादिगाः क्रमात् ।
तैर्भवेद्विषमस्तीक्ष्णो मन्दश्चाग्निः समैः समः ॥ ८ ॥
कोष्ठः क्रूरो मृदुर्मध्यो मध्यः स्यात्तैः समैरपि ।
शुक्रार्तवस्थैर्जन्मादौ विषेणेव विषक्रिमेः ॥ ९ ॥
तैश्च तिस्रः प्रकृतयो हीनमध्योत्तमाः पृथक् ।
समधातुः समस्तासु श्रेष्ठा निन्द्या द्विदोषजाः ॥१०॥
तत्र रूक्षो लघुः शीतः खरः सूक्ष्मश्चलोऽनिलः ।
पित्तं सस्नेहतीक्ष्णोष्णं लघु विस्रं सरं द्रवम् ॥ ११ ॥
स्निग्धः शीतो गुरुर्मन्दः श्लक्ष्णो मृत्स्नः स्थिरः कफः ।
संसर्गः सन्निपातश्च तद्द्वित्रिक्षयकोपतः ॥ १२ ॥
रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः ।
सप्त दूष्याः
मला मूत्रशकृत्स्वेदादयोऽपि च ॥ १३ ॥
वृद्धिः समानैः सर्वेषां विपरीतैर्विपर्ययः ।
रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः ॥ १४ ॥

षड् द्रव्यमाश्रितास्ते च यथापूर्वं बलावहाः ।
तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम् ॥ १५ ॥
कषायतिक्तमधुराः पित्तमन्ये तु कुर्वते ।
शमनं कोपनं स्वस्थहितं द्रव्यमिति त्रिधा ॥ १६ ॥
उष्णशीतगुणोत्कर्षात्तत्र वीर्यं द्विधा स्मृतम् ।
त्रिधा विपाको द्रव्यस्य स्वाद्वम्लकटुकात्मकः ॥ १७ ॥
गुरुमन्दहिमस्निग्धश्लक्ष्णसान्द्रमृदुस्थिराः ।
गुणाः ससूक्ष्मविशदा विंशतिः सविपर्ययाः ॥ १८ ॥
कालार्थकर्मणां योगो हीनमिथ्यातिमात्रकः ।
सम्यग्योगश्च विज्ञेयो रोगारोग्यैककारणम् ॥ १९ ॥
रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता ।
निजागन्तुविभागेन तत्र रोगा द्विधा स्मृताः ॥ २० ॥
तेषां कायमनोभेदादधिष्ठानमपि द्विधा ।
रजस्तमश्च मनसो द्वौ च दोषावुदाहृतौ ॥ २१ ॥
दर्शनस्पर्शनप्रश्नैः परीक्षेत च रोगिणम् ।
रोगं निदानप्राग्रूपलक्षणोपशयाप्तिभिः ॥ २२ ॥
भूमिदेहप्रभेदेन देशमाहुरिह द्विधा ।
जाङ्गलं वातभूयिष्ठमनूपं तु कफोल्बणम् ॥ २३ ॥
साधारणं सममलं त्रिधा भूदेशमादिशेत् ।
क्षणादिर्व्याध्यवस्था च कालो भेषजयोगकृत् ॥ २४ ॥
शोधनं शमनं चेति समासादौषधं द्विधा ।

शरीरजानां दोषाणां क्रमेण परमौषधम् ॥ २५ ॥
बस्तिर्विरेको वमनं तथा तैलं घृतं मधु ।
धीधैर्यात्मादिविज्ञानं मनोदोषौषधं परम् ॥ २६ ॥
भिषक् द्रव्याण्युपस्थाता रोगी पादचतुष्टयम् ।
चिकित्सितस्य निर्दिष्टं प्रत्येकं तच्चतुर्गुणम् ॥ २७ ॥
दक्षस्तीर्थात्तशास्त्रार्थो दृष्टकर्मा शुचिर्भिषक् ।
बहुकल्पं बहुगुणं संपन्नं योग्यमौषधम् ॥ २८ ॥
अनुरक्तः शुचिर्दक्षो बुद्धिमान् परिचारकः ।
आढ्यो रोगी भिषग्वश्यो ज्ञापकः सत्त्ववानपि ॥२९॥
'साध्योऽसाध्य इति व्याधिर्द्विधा तौ तु पुनर्द्विधा ।
सुसाध्यः कृच्छ्रसाध्यश्च याप्यो यश्चानुपक्रमः ॥'
सर्वौषधक्षमे देहे यूनः पुंसो जितात्मनः ।
अमर्मगोऽल्पहेत्वग्ररूपरूपोऽनुपद्रवः ॥ ३० ॥
अतुल्यदूष्यदेशर्तुप्रकृतिः पादसंपदि ।
ग्रहेष्वनुगुणेष्वेकदोषमार्गो नवः सुखः ॥ ३१ ॥
शस्त्रादिसाधनः कृच्छ्रः संकरे च ततो गदः ।
शेषत्वादायुषो याप्यः पथ्याभ्यासाद्विपर्यये ॥ ३२ ॥
अनुपक्रम एव स्यात्स्थितोऽत्यन्तविपर्यये ।
औत्सुक्यमोहारतिकृद्दृष्टरिष्टोऽक्षनाशनः ॥ ३३ ॥
त्यजेदार्तं भिषग्भूपैर्द्विष्टं तेषां द्विषं द्विषम् ।
हीनोपकरणं व्यग्रमविधेयं गतायुषम् ॥ ३४ ॥

चण्डं शोकातुरं भीरुं कृतघ्नं वैद्यमानिनम् ।
तन्त्रस्यास्य परं चातो वक्ष्यतेऽध्यायसंग्रहः ॥ ३५ ॥
आयुष्कामदिनर्त्वीहारोगानुत्पादनद्रवाः ।
अन्नज्ञानान्नसंरक्षामात्राद्रव्यरसाश्रयाः ॥ ३६ ॥
दोषादिज्ञानतद्भेदतच्चिकित्साद्युपक्रमाः ।
शुद्ध्यादिस्नेहनस्वेदरेकास्थापननावनम् ॥ ३७ ॥
धूमगण्डूषदृक्सेकतृप्तियन्त्रकशस्त्रकम् ।
सिराविधिः शल्यविधिः शस्त्रक्षाराग्निकर्मिकौ ॥ ३८ ॥
सूत्रस्थानमिमेऽध्यायास्त्रिंशत्

शारीरमुच्यते ।
गर्भावक्रांतितद्व्यापदङ्गमर्मविभागिकम् ॥ ३९ ॥
विकृतिर्दूतजं षष्ठम्

निदानं सार्वरोगिकम् ।
ज्वरासृक्श्वासयक्ष्मादिमदाद्यर्शोऽतिसारिणाम् ॥ ४० ॥
मूत्राघातप्रमेहाणां विद्रध्याद्युदरस्य च ।
पाण्डुकुष्ठानिलार्तानां वातास्रस्य च षोडश ॥ ४१ ॥
चिकित्सितं ज्वरे रक्ते कासे श्वासे च यक्ष्मणि ।
वमौ मदात्ययेऽर्शःसु विशि द्वौ द्वौ च मूत्रिते ॥४२॥
विद्रधौ गुल्मजठरपाण्डुशोफविसर्पिषु ।
कुष्ठश्वित्रानिलव्याधिवातास्रेषु चिकित्सितम् ॥ ४३ ॥
द्वाविंशतिरिमेऽध्यायाः

कल्पसिद्धिरतः परम् ।
कल्पो वमेर्विरेकस्य तत्सिद्धिर्बस्तिकल्पना ॥ ४४ ॥
सिद्धिर्बस्त्यापदां षष्ठो द्रव्यकल्पो
अत उत्तरम् ।
बालोपचारे तद्व्याधौ तद्ग्रहे द्वौ च भूतगे ॥ ४५ ॥
उन्मादेऽथ स्मृतिभ्रंशे द्वौ द्वौ वर्त्मसु संधिषु ।
दृक्तमोलिंगनाशेषु त्रयो द्वौ द्वौ च सर्वगे ॥ ४६ ॥
कर्णनासामुखशिरोव्रणे भङ्गे भगन्दरे ।
ग्रन्थ्यादौ क्षुद्ररोगेषु गुह्यरोगे पृथग्द्वयम् ॥ ४७ ॥
विषजङ्के कीटेषु मूषकेषु रसायने ।
चत्वारिंशत्पत्यानामध्यायो बीजपोषणः ॥ ४८ ॥
इत्यध्यायशतं षड्भिः स्थानैरुदीरितम् ॥४८½॥"

---

## द्वितीयोऽध्यायः ।

अथातो दिनचर्याध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥
"ब्राह्मे मुहूर्त उत्तिष्ठेत्स्वस्थो रक्षार्थमायुषः ।
शरीरचिन्तां निर्वर्त्य कृतशौचविधिस्ततः ॥ १ ॥
अर्कन्यग्रोधखदिरकरञ्जककुभादिजम् ।
प्रातर्भुक्त्वा च मृद्वग्रं कषायकटुतिक्तकम् ॥ २ ॥
कनीन्यग्रसमस्थूलं प्रगुणं द्वादशाङ्गुलम् ।

भक्षयेद्दन्तपवनं[१] दंतमांसान्यबाधयन् ॥ ३ ॥
नाद्यादजीर्णवमथुश्वासकासज्वरार्दिती ।
तृष्णास्यपाकहृन्नेत्रशिरःकर्णामयी च तत् ॥ ४ ॥
सौवीरमञ्जनं नित्यं हितमक्ष्णोस्ततो भजेत् ॥
चक्षुस्तेजोमयं तस्य विशेषात् श्लेष्मतो भयम् ॥ ५ ॥
योजयेत्सप्तरात्रेऽस्मात्स्रावणार्थं रसाञ्जनम् ।
ततो नावनगण्डूषधूमताम्बूलभाग्भवेत् ॥ ६ ॥
ताम्बूलं क्षतपित्तास्ररूक्षोत्कुपितचक्षुषाम् ।
विषमूर्च्छामदार्तानामपथ्यं शोषिणामपि ॥ ७ ॥
अभ्यङ्गमाचरेन्नित्यं स जराश्रमवातहा ।
दृष्टिप्रसादपुष्ट्यायुःस्वप्नसुत्वक्त्वदार्ढ्यकृत् ॥ ८ ॥
शिरःश्रवणपादेषु तं विशेषेण शीलयेत् ।
वर्ज्योऽभ्यङ्गः कफग्रस्तकृतसंशुद्ध्यजीर्णिभिः ॥ ९ ॥
लाघवं कर्मसामर्थ्यं दीप्तोऽग्निर्मेदसः क्षयः ।
विभक्तघनगात्रत्वं व्यायामादुपजायते ॥ १० ॥
वातपित्तामयी बालो वृद्धोऽजीर्णी च तं त्यजेत् ।
अर्धशक्त्या निषेव्यस्तु बलिभिः स्निग्धभोजिभिः ॥ ११ ॥
शीतकाले वसन्ते च मन्दमेव ततोऽन्यदा ।
तं कृत्वाऽनुसुखं देहं मर्दयेच्च समन्ततः ॥ १२ ॥

---

१ दंताः पूयन्ते अनेनेति 'दंतपवनम्' । 'धवनं' इति पाठभेदः ।

तृष्णा क्षयः प्रतमको रक्तपित्तं श्रमः क्लमः ।
अतिव्यायामतः कासो ज्वरश्छर्दिश्च जायते ॥ १३ ॥
व्यायामजागराध्वस्त्रीहास्यभाष्यादिसाहसम् ।
गजं सिंह इवाकर्षन् भजन्नतिविनश्यति ॥ १४ ॥
उद्वर्तनं कफहरं मेदसः प्रविलायनम् ।
स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परम् ॥ १५ ॥
दीपनं वृष्यमायुष्यं स्नानमूर्जाबलप्रदम् ।
कण्डूमलश्रमस्वेदतन्द्रातृड्दाहपाप्मजित् ॥ १६ ॥
उष्णाम्बुनाधःकायस्य परिषेको बलावहः ।
तेनैव तूत्तमाङ्गस्य बलहृत्केशचक्षुषाम् ॥ १७ ॥
स्नानमर्दितनेत्रास्यकर्णरोगातिसारिषु ।
आध्मानपीनसाजीर्णभुक्तवत्सु च गर्हितम् ॥ १८ ॥
जीर्णे हितं मितं चाद्यान्न वेगानीरयेद्बलात् ।
न वेगितोऽन्यकार्यः स्यान्नाजित्वा साध्यमामयम् ॥१९॥
सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः ।
सुखं च न विना धर्मात्तस्माद्धर्मपरो भवेत् ॥ २० ॥
भक्त्या कल्याणमित्राणि सेवेतेतरदूरगः ।
हिंसास्तेयान्यथाकामं पैशुन्यं परुषानृते ॥ २१ ॥
संभिन्नालापं व्यापादमभिध्यां दृग्विपर्ययम् ।
पापं कर्मेति दशधा कायवाङ्मानसैस्त्यजेत् ॥ २२ ॥
अवृत्तिव्याधिशोकार्ताननुवर्तेत शक्तितः ।

आत्मवत्सततं पश्येदपि कीटपिपीलिकम् ॥ २३ ॥
अर्चयेद्देवगोविप्रवृद्धवैद्यनृपातिथीन् ।
विमुखान्नार्थिनः कुर्यान्नावमन्येत नाक्षिपेत् ॥ २४ ॥
उपकारप्रधानः स्यादपकारपरेऽप्यरौ ।
संपद्विपत्स्वेकमना हेतावीर्ष्येत्फले न तु ॥ २५ ॥
काले हितं मितं ब्रूयादविसंवादि पेशलम् ।
पूर्वाभिभाषी सुमुखः सुशीलः करुणामृदुः ॥ २६ ॥
नैकः सुखी न सर्वत्र विश्रब्धो न च शङ्कितः ।
न कञ्चिदात्मनः शत्रुं नात्मानं कस्यचिद्रिपुम् ॥ २७ ॥
प्रकाशयेन्नापमानं न च निःस्नेहतां प्रभोः ।
जनस्याशयमालक्ष्य यो यथा परितुष्यति ॥ २८ ॥
तं तथैवानुवर्तेत पराराधनपण्डितः ।
न पीडयेदिन्द्रियाणि न चैतान्यतिलालयेत् ॥ २९ ॥
त्रिवर्गशून्यं नारम्भं भजेत्तं चाविरोधयन् ।
अनुयायात्प्रतिपदं सर्वधर्मेषु मध्यमाम् ॥ ३० ॥
नीचरोमनखश्मश्रुर्निर्मलाङ्घ्रिमलायनः ।
स्नानशीलः सुसुरभिः सुवेषोऽनुल्बणोज्ज्वलः ॥ ३१ ॥
धारयेत्सततं रत्नसिद्धमन्त्रमहौषधीः ।
सातपत्रपदत्राणो विचरेद्युगमात्रदृक् ॥ ३२ ॥
निशि चात्ययिके कार्ये दण्डी मौली सहायवान् ।
चैत्यपूज्यध्वजाशस्तच्छायाभस्मतुषाशुचीन् ॥ ३३ ॥

नाक्रामेच्छर्करालोष्टबलिस्नानभुवो न च ।
नदीं तरेन्न बाहुभ्यां नाग्निस्कन्धमभिव्रजेत् ॥ ३४ ॥
संदिग्धनावं वृक्षं च नारोहेद्दुष्टयानवत् ।
नासंवृतमुखः कुर्यात्क्षुतिहास्यविजृम्भणम् ॥ ३५ ॥
नासिकां न विकुष्णीयान्नाकस्माद्विलिखेद्भुवम् ।
नाङ्गैश्चेष्टेत विगुणं नासीतोत्कटकश्चिरम् ॥ ३६ ॥
देहवाक्चेतसां चेष्टाः प्राक् श्रमाद्विनिवर्तयेत् ।
नोर्ध्वजानुश्चिरं तिष्ठेत्

नक्तं सेवेत न द्रुमम् ॥ ३७ ॥

तथा चत्वरचैत्यान्तश्चतुष्पथसुरालयान् ।
सूनाटवीशून्यगृहश्मशानानि दिवाऽपि न ॥ ३८ ॥
सर्वथेक्षेत नादित्यं न भारं शिरसा वहेत् ।
नेक्षेत प्रततं सूक्ष्मं दीप्तामेध्याप्रियाणि च ॥ ३९ ॥
मद्यविक्रयसंधानदानादानानि नाचरेत् ।
पुरोवातातपरजस्तुषारपरुषानिलान् ॥ ४० ॥
अनृजुः क्षवथूद्गारकासस्वप्नान्नमैथुनम् ।
कूलच्छायां नृपद्विष्टं व्यालदंष्ट्रिविषाणिनः ॥ ४१ ॥
हीनानार्यातिनिपुणसेवां विग्रहमुत्तमैः ।
संध्यास्वभ्यवहारस्त्रीस्वप्नाध्ययनचिन्तनम् ॥ ४२ ॥
शत्रुसत्रगणाकीर्णगणिकापणिकाशनम् ।
गात्रवक्त्रनखैर्वाद्यं हस्तकेशावधूननम् ॥ ४३ ॥

तोयाग्निपूज्यमध्येन यानं धूमं शवाश्रयम् ।
मद्यातिसक्तिं विश्रम्भस्वातन्त्र्ये स्त्रीषु च त्यजेत् ॥४४॥
आचार्यः सर्वचेष्टासु लोक एव हि धीमतः ।
अनुकुर्यात्तमेवातो लौकिकेऽर्थे परीक्षकः ॥ ४५ ॥
आर्द्रसंतानता त्यागः कायवाक्चेतसां दमः ।
स्वार्थबुद्धिः परार्थेषु पर्याप्तमिति सद्व्रतम् ॥ ४६ ॥
नक्तंदिनानि मे यान्ति कथंभूतस्य संप्रति ।
दुःखभाङ्क भवत्येवं नित्यं संनिहितस्मृतिः ॥ ४७ ॥
इत्याचारः समासेन यं प्राप्नोति समाचरन् ।
आयुरारोग्यमैश्वर्यं यशो लोकांश्च शाश्वतान् ॥ ४८ ॥"

---

## तृतीयोऽध्यायः ।

अथात ऋतुचर्याध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥
"मासैर्द्विसंख्यैर्माघाद्यैः क्रमात् षड् ऋतवः स्मृताः ।
शिशिरोऽथ वसंतश्च ग्रीष्मवर्षाशरद्धिमाः ॥ १ ॥
शिशिराद्यैस्त्रिभिस्तैस्तु विद्यादयनमुत्तरम् ।
आदानं च तदादत्ते नृणां प्रतिदिनं बलम् ॥ २ ॥
तस्मिन् ह्यत्यर्थतीक्ष्णोष्णरूक्षा मार्गस्वभावतः ।
आदित्यपवनाः सौम्यान् क्षपयन्ति गुणान् भुवः ॥३॥
तिक्तः कषायः कटुको बलिनोऽत्र रसाः क्रमात् ।

तस्मादादानमाग्नेयम्

ऋतवो दक्षिणायनम् ॥ ४ ॥

वर्षादयो विसर्गश्च

यद्बलं विसृजत्ययम् ।

सौम्यत्वादत्र सोमो हि बलवान् हीयते रविः ॥ ५ ॥
मेघवृष्ट्यनिलैः शीतैः शान्ततापे महीतले ।
स्निग्धाश्चेहाम्ललवणमधुरा बलिनो रसाः ॥ ६ ॥
शीतेऽग्र्यं वृष्टिघर्मेऽल्पं बलं मध्यं तु शेषयोः ।
बलिनः शीतसंरोधाद्धेमन्ते प्रबलोऽनलः ॥ ७ ॥
भवत्यल्पेन्धनो धातून् स पचेद्वायुनेरितः ।
अतो हिमेऽस्मिन्सेवेत स्वाद्वम्ललवणान्रसान् ॥ ८ ॥
दैर्घ्यान्निशानामेतर्हि प्रातरेव बुभुक्षितः ।
अवश्यकार्यं संभाव्य यथोक्तं शीलयेदनु ॥ ९ ॥
वातघ्नतैलैरभ्यङ्गं मूर्ध्नि तैलं विमर्दनम् ।
नियुद्धं कुशलैः सार्धं पादाघातं च युक्तितः ॥ १० ॥
कषायापहृतस्नेहस्ततः स्नातो यथाविधि ।
कुङ्कुमेन सदर्पेण प्रदिग्धोऽगुरुधूपितः ॥ ११ ॥
रसान् स्निग्धान् पलं पुष्टं गौडमच्छसुरां सुराम् ।
गोधूमपिष्टमाषेक्षुक्षीरोत्थविकृतीः शुभाः ॥ १२ ॥
नवमन्नं वसां तैलं शौचकार्ये सुखोदकम् ।

प्रावाराजिनकौशेयप्रवेणीकौचवास्तृतम् ॥ १३ ॥
उष्णस्वभावैर्लघुभिः प्रावृतः शयनं भजेत् ।
युक्त्यार्ककिरणान् स्वेदं पादत्राणं च सर्वदा ॥ १४ ॥
पीवरोरुस्तनश्रोण्यः समदाः प्रमदाः प्रियाः ।
हरन्ति शीतमुष्णाङ्ग्यो धूपकुङ्कुमयौवनैः ॥ १५ ॥
अङ्गारतापसंतप्तगर्भभूवेश्मचारिणः ।
शीतपारुष्यजनितो न दोषो जातु जायते ॥ १६ ॥
अयमेव विधिः कार्यः शिशिरेऽपि विशेषतः ।
तदा हि शीतमधिकं रौक्ष्यं चादानकालजम् ॥ १७ ॥
कफश्चितो हि शिशिरे वसन्तेऽर्कांशुतापितः ।
हत्वाऽग्निं कुरुते रोगानतस्तं त्वरया जयेत् ॥ १८ ॥
तीक्ष्णैर्वमननस्याद्यैर्लघुरूक्षैश्च भोजनैः ।
व्यायामोद्वर्तनाघातैर्जित्वा श्लेष्माणमुल्बणम् ॥ १९ ॥
स्नातोऽनुलिप्तः कर्पूरचन्दनागुरुकुङ्कुमैः ।
पुराणयवगोधूमक्षौद्रजाङ्गलशूल्यभुक् ॥ २० ॥
सहकाररसोन्मिश्रानास्वाद्य प्रिययाऽर्पितान् ।
प्रियास्यसंगसुरभीन् प्रियानेत्रोत्पलाङ्कितान् ॥ २१ ॥
सौमनस्यकृतो हृद्यान्वयस्यैः सहितः पिबेत् ।
निर्गदानासवारिष्टसीधुमार्द्वीकमाधवान् ॥ २२ ॥
शृङ्गवेराम्बु साराम्बु मध्वम्बु जलदाम्बु च ।

---

१ 'कुथक' इति पाठभेदः । कुथकः कंबलः ।

दक्षिणानिलशीतेषु परितो जलवाहिषु ॥ २३ ॥
अदृष्टनष्टसूर्येषु मणिकुट्टिमकांतिषु ।
परपुष्टविघुष्टेषु कामकर्मान्तभूमिषु ॥ २४ ॥
विचित्रपुष्पवृक्षेषु काननेषु सुगन्धिषु ।
गोष्ठीकथाभिश्चित्राभिर्मध्याह्नं गमयेत्सुखी ॥ २५ ॥
गुरुशीतदिवास्वप्नस्निग्धाम्लमधुरांस्त्यजेत् ।
तीक्ष्णांशुरतितीक्ष्णांशुर्ग्रीष्मे संक्षिपतीव यत् ॥ २६ ॥
प्रत्यहं क्षीयते श्लेष्मा तेन वायुश्च वर्धते ।
अतोऽस्मिन्पटुकट्वम्लव्यायामार्ककरांस्त्यजेत् ॥२७ ॥
भजेन्मधुरमेवान्नं लघु स्निग्धं हिमं द्रवम् ।
सुशीततोयसिक्ताङ्गो लिह्यात्सक्तून् सशर्करान् ॥२८॥
मद्यं न पेयं पेयं वा स्वल्पं सुबहु वारि वा ।
अन्यथा शोफशैथिल्यदाहमोहान् करोति तत् ॥२९॥
कुन्देन्दुधवलं शालिमश्नीयाज्जाङ्गलैः पलैः ।
पिबेद्रसं नातिघनं रसालां रागखाण्डवौ ॥ ३० ॥
पानकं पंचसारं वा नवमृद्भाजने स्थितम् ।
मोचचोचदलैर्युक्तं साम्लं मृन्मयशुक्तिभिः ॥ ३१ ॥
पाटलावासितं चाम्भः सकर्पूरं सुशीतलम् ।
शशाङ्ककिरणान् भक्ष्यान् रजन्यां भक्षयन् पिबेत् ३२
ससितं माहिषं क्षीरं चन्द्रनक्षत्रशीतलम् ।
अभ्रङ्कषमहाशालतालरुद्धोष्णरश्मिषु ॥ ३३ ॥

वनेषु माधवीश्लिष्टद्राक्षास्तबकशालिषु ।
सुगन्धिहिमपानीयसिच्यमानपटालिके ॥ ३४ ॥
कायमाने चिते चूतप्रवालफललुम्बिभिः ।
कदलीदलकह्लारमृणालकमलोत्पलैः ॥ ३५ ॥
कोमलैः कल्पिते तल्पे हसत्कुसुमपल्लवे ।
मध्यन्दिनेऽर्कतापार्तः स्वप्याद्धारागृहेऽथवा ॥ ३६ ॥
पुस्तस्त्रीस्तनहस्तास्यप्रवृत्तोशीरवारिणि ।
निशाकरकराकीर्णे सौधपृष्ठे निशासु च ॥ ३७ ॥
आसना

स्वस्थचित्तस्य चन्दनार्द्रस्य मालिनः ।
निवृत्तकामतन्त्रस्य सुसूक्ष्मतनुवाससः ॥ ३८ ॥
जलार्द्रास्तालवृन्दानि विस्तृताः पद्मिनीपुटाः ।
उत्क्षेपाश्च मृदूत्क्षेपा जलवर्षिहिमानिलाः ॥ ३९ ॥
कर्पूरमल्लिकामाला हाराः सहरिचन्दनाः ।
मनोहरकलालापाः शिशवः सारिकाः शुकाः ॥४०॥
मृणालवलयाः कान्ताः प्रोत्फुल्लकमलोज्ज्वलाः ।
जङ्गमा इव पद्मिन्यो हरन्ति दयिताः क्लमम् ॥४१॥
आदानग्लानवपुषामग्निः सन्नोऽपि सीदति ।
वर्षासु दोषैर्दुष्यन्ति तेऽम्बुलम्बाम्बुदेऽम्बरे ॥ ४२ ॥
सतुषारेण मरुता सहसा शीतलेन च ।
भूबाष्पेणाम्लपाकेन मलिनेन च वारिणा ॥ ४३ ॥

वह्निनैव च मन्देन तेष्वित्यन्योन्यदूषिषु ।
भजेत्साधारणं सर्वमूष्मणस्तेजनं च यत् ॥ ४४ ॥
आस्थापनं शुद्धतनुर्जीर्णं धान्यं रसान् कृतान् ।
जाङ्गलं पिशितं यूषान् मध्वरिष्टं चिरंतनम् ॥ ४५ ॥
मस्तु सौवर्चलाढ्यं वा पञ्चकोलावचूर्णितम् ।
दिव्यं कौपं शृतं चाम्भो भोजनं त्वतिदुर्दिने ॥४६॥
व्यक्ताम्ललवणस्नेहं संशुष्कं क्षौद्रवल्लघु ।
अपादचारी सुरभिः सततं धूपिताम्बरः ॥ ४७ ॥
हर्म्यपृष्ठे वसेद्बाष्पशीतशीकरवर्जिते ।
नदीजलोदमन्थाहःस्वप्नायासातपांस्त्यजेत् ॥ ४८ ॥
वर्षाशीतोचिताङ्गानां सहसैवार्करश्मिभिः ।
तप्तानां संचितं वृष्टौ पित्तं शरदि कुप्यति ॥ ४९ ॥
तज्जयाय घृतं तिक्तं विरेको रक्तमोक्षणम् ।
तिक्तं स्वादु कषायं च क्षुधितोऽन्नं भजेल्लघु ॥ ५० ॥
शालिमुद्गसिताधात्रीपटोलमधुजाङ्गलम् ।
तप्तं तप्तांशुकिरणैः शीतं शीतांशुरश्मिभिः ॥ ५१ ॥
समन्तादप्यहोरात्रमगस्त्योदयनिर्विषम् ।
शुचि हंसोदकं नाम निर्मलं मलजिज्जलम् ॥ ५२ ॥
नाभिष्यन्दि न वा रूक्षं पानादिष्वमृतोपमम् ।
चन्दनोशीरकर्पूरमुक्तास्रग्वसनोज्ज्वलः ॥ ५३ ॥
सौधेषु सौधधवलां चन्द्रिकां रजनीमुखे ।

तुषारक्षारसौहित्यदधितैलवसातपान् ॥ ५४ ॥
तीक्ष्णमद्यदिवास्वप्नपुरोवातान् परित्यजेत् ।
शीते वर्षासु चाद्यांस्त्रीन्वसन्तेऽन्त्यान् रसान्भजेत् ॥
स्वादुं निदाघे शरदि स्वादुतिक्तकषायकान् ।
शरद्वसन्तयो रूक्षं शीतं घर्मघनान्तयोः ॥ ५६ ॥
अन्नपानं समासेन विपरीतमतोऽन्यदा ।
नित्यं सर्वरसाभ्यासः स्वस्वाधिक्यमृतावृतौ ॥ ५७ ॥
ऋत्वोरन्त्यादिसप्ताहावृतुसंधिरिति स्मृतः ।
तत्र पूर्वो विधिस्त्याज्यः सेवनीयोऽपरः क्रमात् ॥५८॥
असात्म्यजा हि रोगाः स्युः सहसा त्यागशीलनात्५८½"

---

## चतुर्थोऽध्यायः ।

अथातो रोगानुत्पादनीयाध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥
"वेगान्न धारयेद्वातविण्मूत्रक्षवतृट्क्षुधाम् ।
निद्राकासश्रमश्वासजृम्भाश्रुच्छर्दिरेतसाम् ॥ १ ॥
अधोवातस्य रोधेन गुल्मोदावर्तरुक्क्लमाः ।
वातमूत्रशकृत्संगदृष्ट्यग्निवधहृद्गदाः ॥ २ ॥
( स्नेहस्वेदविधिस्तत्र वर्तयो भोजनानि च ।
पानानि बस्तयश्चैव शस्तं वातानुलोमनम् ॥ )

---

१ "ह्लादतु" इति पाठः.

शकृतः पिंडिकोद्वेष्टप्रतिश्यायशिरोरुजः ।
ऊर्ध्ववायुः परीकर्तो हृदयस्योपरोधनम् ॥ ३ ॥
मुखेन विट्प्रवृत्तिश्च पूर्वोक्ताश्चामयाः स्मृताः ।
अङ्गभङ्गाश्मरीबस्तिमेढ्वंक्षणवेदनाः ॥ ४ ॥
मूत्रस्य रोधात्पूर्वे च प्रायो रोगाः

तदौषधम् ।

वर्त्यभ्यङ्गावगाहाश्च स्वेदनं बस्तिकर्म च ॥ ५ ॥
अन्नपानं च विड्भेदि विड्रोधोत्थेषु यक्ष्मसु ।
मूत्रजेषु तु पाने च प्राग्भक्तं शस्यते घृतम् ॥ ६ ॥
जीर्णान्तिकं चोत्तमया मात्रया योजनाद्वयम् ।
अवपीडकमेतच्च संज्ञितं

धारणात्पुनः ॥ ७ ॥

उद्गारस्यारुचिः कम्पो विबन्धो हृदयोरसोः ।
आध्मानकासहिध्माश्च हिध्मावत्तत्र भेषजम् ॥ ८ ॥
शिरोर्तीन्द्रियदौर्बल्यमन्यास्तम्भार्दितं क्षुतेः ।
तीक्ष्णधूमाञ्जनाघ्राणनावनार्कविलोकनैः ॥ ९ ॥
प्रवर्तयेत्क्षुतिं सक्तां स्नेहस्वेदौ च शीलयेत् ।
शोषाङ्गसादबाधिर्यसंमोहभ्रमहृद्गदाः ॥ १० ॥
तृष्णाया निग्रहात्तत्र शीतः सर्वो विधिर्हितः ।
अङ्गभङ्गारुचिग्लानिकार्श्यशूलभ्रमाः क्षुधः ॥ ११ ॥
तत्र योज्यं लघु स्निग्धमुष्णमल्पं च भोजनम् ।
निद्राया मोहमूर्धाक्षिगौरवालस्यजृम्भिकाः ॥ १२ ॥

अङ्गमर्दश्च तत्रेष्टः स्वप्न. संवाहनानि च ।
कासस्य रोधात्तद्वृद्धिः श्वासारुचिहृदामयाः ॥ १३ ॥
शोषो हिध्मा च कार्योऽत्र कासहा सुतरां विधि. ।
गुल्महृद्रोगसंमोहाः श्रमश्वासाद्विधारितात् ॥ १४ ॥
हितं विश्रमणं तत्र वातघ्नश्च क्रियाक्रमः ।
जृम्भायाः क्षववद्रोगाः सर्वश्चानिलजिद्विधिः ॥ १५ ॥
पीनसाक्षिशिरोहृद्रुङ्मन्यास्तम्भारुचिभ्रमाः ।
सगुल्मा बाष्पतस्तत्र स्वप्नो मद्यं प्रियाः कथाः ॥१६॥
विसर्पकोठकुष्ठाक्षिकण्डूपाण्ड्वामयज्वराः ।
सकासश्वासहृल्लासव्यङ्गश्वयथवो वमेः ॥ १७ ॥
गण्डूषधूमानाहारा रूक्षं भुक्त्वा तदुद्वमः ।
व्यायामः स्रुतिरस्रस्य शस्तं चात्र विरेचनम् ॥ १८ ॥
सक्षारलवणं तैलमभ्यङ्गार्थं च शस्यते ।
शुक्रात्तत्स्रवणं गुह्यवेदना श्वयथुर्ज्वरः ॥ १९ ॥
हृद्व्यथा मूत्रसङ्गाङ्गभङ्गवृद्ध्यश्मषण्ढताः ।
ताम्रचूडसुराशालिबस्त्यभ्यङ्गावगाहनम् ॥ २० ॥
बस्तिशुद्धिकरैः सिद्धं भजेत्क्षीरं प्रियाः स्त्रियः ।
तृड्शूलार्तं त्यजेत् क्षीणं विड्वमं वेगरोधिनम् ॥ २१ ॥
रोगाः सर्वेऽपि जायन्ते वेगोदीरणधारणैः ।
निर्दिष्टं साधनं तत्र भूयिष्ठं ये तु तान् प्रति ॥ २२ ॥
ततश्चानेकधा प्रायः पवनो यत्प्रकुप्यति ।

---

१ "श्वासविधारणात्" इति पाठः.

अन्नपानौषधं तस्य युञ्जीतातोऽनुलोमनम् ॥ २३ ॥
धारयेत्तु सदा वेगान् हितैषी प्रेत्य चेह च ।
लोभेर्ष्याद्वेषमात्सर्यरागादीनां जितेन्द्रियः ॥ २४ ॥
यतेत च यथाकालं मलानां शोधनं प्रति ।
अत्यर्थसंचितास्ते हि क्रुद्धाः स्युर्जीवितच्छिदः ॥ २५ ॥
दोषाः कदाचित्कुप्यन्ति जिता लङ्घनपाचनैः ।
ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः ॥ २६ ॥
यथाक्रमं यथायो[1]गमत ऊर्ध्वं प्रयोजयेत् ।
रसायनानि सिद्धानि वृष्ययोगांश्च कालवित् ॥ २७ ॥
भेषजक्षपिते पथ्यमाहारैर्बृंहणं क्रमात् ।
शालिषष्टिकगोधूममुद्गमांसघृतादि[2]भिः ॥ २८ ॥
हृद्यदीपनभैषज्यसंयोगाद्रुचिपक्तिदैः ।
साभ्यङ्गोद्वर्तनस्नाननिरूहस्नेहबस्तिभिः ॥ २९ ॥
तथा स लभते शर्म सर्वपावकपाटवम् ।
धीवर्णेन्द्रियवैमल्यं वृषतां दैर्घ्यमायुषः ॥ ३० ॥
ये भूतविषवाय्वग्निक्षतभङ्गादिसम्भवाः ।
कामक्रोधभयाद्याश्च ते स्युरागन्तवो गदाः ॥ ३१ ॥
त्यागः प्रज्ञापराधानामिन्द्रियोपशमः स्मृतिः ।
देशकालात्मविज्ञानं सद्वृत्तस्यानुवर्तनम् ॥ ३२ ॥
अथर्वविहिता शान्तिः प्रतिकूलग्रहार्चनम् ।

---

१ "योग्य" इति पाठः. २ "क्षीरादिभिः", "रसादिभिः" इति पाठौ.

भूतावस्पर्शनोपायो निर्दिष्टश्च पृथक् पृथक्' ॥
अनुत्पत्त्यै समासेन विधिरेष प्रदर्शितः ।
निजागन्तुविकाराणामुत्पन्नानां च शान्तये ॥ ३३ ॥

शीतोद्भवं दोषचयं वसंते
विशोधयन् ग्रीष्मजमभ्रकाले ।
घनात्यये वार्षिकमाशु सम्यक्
प्राप्नोति रोगानृतुजान्न जातु ॥ ३४ ॥
नित्यं हिताहारविहारसेवी
समीक्ष्यकारी विषयेष्वसक्तः ।
दाता समः सत्यपरः क्षमावा-
नाप्तोपसेवी च भवत्यरोगः ॥ ३५ ॥"

## पञ्चमोऽध्यायः ।

अथातो द्रवद्रव्यविज्ञानीयमध्यायं व्याख्यास्यामः ॥
इति ह स्माहुरात्रेयादयो महर्षयः ॥
"जीवनं तर्पणं हृद्यं ह्लादि बुद्धिप्रबोधनम् ।
तन्वव्यक्तरसं मृष्टं शीतं लघ्वमृतोपमम् ॥ १ ॥

### अथ तोयवर्गः ॥

गङ्गाम्बु नभसो भ्रष्टं स्पृष्टं त्वर्केन्दुमारुतैः ।
हिताहितत्वे तद्भूयो देशकालावपेक्षते ॥ २ ॥
येनाभिवृष्टममलं शाल्यन्नं राजतस्थितम् ।

अक्लिन्नमविवर्णं च तत्पेयं गाङ्गम्

अन्यथा ॥ ३ ॥

सामुद्रं तन्न पातव्यं मासादाश्वयुजादिना ।
ऐन्द्रमम्बु सुपात्रस्थमविपन्नं सदा पिबेत् ॥ ४ ॥
तदभावे च भूमिष्ठमन्तरिक्षानुकारि यत् ।
शुचिपृथ्व्यसितश्वेते देशेऽर्कपवनाहतम् ॥ ५ ॥
न पिबेत्पङ्कशैवालतृणपर्णाविलास्तृतम् ।
सूर्येन्दुपवनादृष्टमभिवृष्टं घनं गुरु ॥ ६ ॥
फेनिलं जन्तुमत्तप्तं दन्तग्राह्यतिशैत्यतः ।
अनार्तवं च यद्दिव्यमार्तवं प्रथमं च यत् ॥ ७ ॥
लूतादितन्तुविण्मूत्रविषसंश्लेषदूषितम् ।
पश्चिमोदधिगाः शीघ्रवहा याश्चामलोदकाः ॥ ८ ॥
पथ्याः समासात्ता नद्यो विपरीतास्त्वतोऽन्यथा ।
उपलास्फालनाक्षेपविच्छेदैः खेदितोदकाः ॥ ९ ॥
हिमवन्मलयोद्भूताः पथ्यास्ता एव च स्थिराः ।
कृमिश्लीपदहृत्कण्ठशिरोरोगान् प्रकुर्वते ॥ १० ॥
प्राच्याऽऽवन्त्यपरान्तोत्था दुर्नामानि महेन्द्रजाः ।
उदरश्लीपदातङ्कान् सह्यविन्ध्योद्भवाः पुनः ॥ ११ ॥
कुष्ठपाण्डुशिरोरोगान् दोषघ्न्यः पारियात्रजाः ।
बलपौरुषकारिण्यः सागराम्भस्त्रिदोषकृत् ॥ १२ ॥
विद्यात्कूपतडागादीन् जाङ्गलानूपशैलतः ।
नाम्बु पेयमशक्त्या वा स्वल्पमल्पाग्निगुल्मिभिः ॥ १३ ॥

पाण्डूदरातिसारार्शोग्रहणीशोपशोथिभिः ।
ऋते शरन्निदाघाभ्यां पिबेत्स्वस्थोऽपि चाल्पशः ॥१४॥
समस्थूलकृशा भुक्तमध्यांतप्रथमाम्बुपाः[2] ।
शीतं मदात्ययग्लानिमूर्च्छाच्छर्दिश्रमभ्रमान् ॥ १५ ॥
तृष्णोष्णदाहपित्तास्रविषाण्यम्बु नियच्छति ।
दीपनं पाचनं कण्ठ्यं लघूष्णं बस्तिशोधनम् ॥ १६ ॥
हिध्माध्मानाऽनिलश्लेष्मसद्यःशुद्धिनवज्वरे ।
कासामपीनसश्वासपार्श्वरुक्षु च शस्यते ॥ १७ ॥
अनभिष्यन्दि लघु च तोयं क्कथितशीतलम् ।
पित्तयुक्ते हितं दोषे व्युषितं तत्रिदोषकृत् ॥ १८ ॥
नालिकेरोदकं स्निग्धं स्वादु वृष्यं हिमं लघु ।
तृष्णापित्तानिलहरं दीपनं बस्तिशोधनम् ॥ १९ ॥
वर्षासु दिव्यनादेये परं तोये वरावरे ।

अथ क्षीरवर्गः ॥

'गव्यं माहिषमाजं च कारभं स्त्रैणमाविकम् ।
ऐभमैकशफं चेति क्षीरमष्टविधं मतम् ॥'
स्वादुपाकरसं स्निग्धमोजस्यं धातुवर्धनम् ॥ २० ॥
वातपित्तहरं वृष्यं श्लेष्मलं गुरु शीतलम् ।
प्रायः पयः

अत्र गव्यं तु जीवनीयं रसायनम् ॥ २१ ॥

---

१ "दोष" इति पाठः. २ "भक्त" इति पाठः.

क्षतक्षीणहितं मेध्यं बल्यं स्तन्यकरं सरम् ।
श्रमभ्रममदालक्ष्मीश्वासकासातितृट्क्षुधः ॥ २२ ॥
जीर्णज्वरं मूत्रकृच्छ्रं रक्तपित्तं च नाशयेत् ।
हितमत्यग्न्यनिद्रेभ्यो गरीयो माहिषं हिमम् ॥ २३ ॥
अल्पाम्बुपानव्यायामकटुतिक्ताशनैर्लघु ।
आजं शोषज्वरश्वासरक्तपित्तातिसारजित् ॥ २४ ॥
ईषद्रूक्षोष्णलवणमौष्ट्रकं दीपनं लघु ।
शस्तं वातकफानाहकृमिशोफोदरार्शसाम् ॥ २५ ॥
मानुषं वातपित्तासृगभिघाताक्षिरोगजित् ।
तर्पणाश्च्योतनैर्नस्यैः

अहृद्यं तूष्णमाविकम् ॥ २६ ॥

वातव्याधिहरं हिध्माश्वासपित्तकफप्रदम् ।
हस्तिन्याः स्थैर्यकृत्

बाढमुष्णं त्वैकशफं लघु ॥ २७ ॥

शाखावातहरं साम्ललवणं जडताकरम् ।
पयोऽभिष्यन्दि गुर्वामं युक्त्या शृतमतोऽन्यथा ॥२८॥
भवेद्गरीयोऽतिशृतं धारोष्णममृतोपमम् ।
अम्लपाकरसं ग्राहि गुरूष्णं दधि वातजित् ॥ २९ ॥
मेदःशुक्रबलश्लेष्मपित्तरक्ताऽग्निशोफकृत् ।
रोचिष्णु शस्तमरुचौ शीतके विषमज्वरे ॥ ३० ॥
पीनसे मूत्रकृच्छ्रे च रूक्षे तु ग्रहणीगदे ।

नैवाद्यान्निशि नैवोष्णं वसंतोष्णशरत्सु न ॥ ३१ ॥
नामुद्गसूपं नाक्षौद्रं तन्नाघृतसितोपलम् ।
न चानामलकं नापि नित्यं नो मन्दमन्यथा ॥ ३२ ॥
ज्वरासृक्पित्तवीसर्पकुष्ठपाण्डुभ्रमप्रदम् ।
तक्रं लघु कषायाम्लं दीपनं कफवातजित् ॥ ३३ ॥
शोफोदरार्शोग्रहणीदोषमूत्रग्रहारुचीः ।
प्लीहगुल्मघृतव्यापद्गरपाण्ड्वामयान् जयेत् ॥ ३४ ॥
तद्वन्मस्तु सरं स्रोतःशोधि विष्टम्भजिल्लघु ।
नवनीतं नवं वृष्यं शीतं वर्णबलाग्निकृत् ॥ ३५ ॥
संग्राहि वातपित्तासृक्क्षयार्शोर्दितकासजित् ।
क्षीरोद्भवं तु संग्राहि रक्तपित्ताक्षिरोगजित् ॥ ३६ ॥
शस्तं धीस्मृतिमेधाग्निबलायुःशुक्रचक्षुषाम् ।
बालवृद्धप्रजाकान्तिसौकुमार्यस्वरार्थिनाम् ॥ ३७ ॥
क्षतक्षीणपरीसर्पशस्त्राग्निग्लपितात्मनाम् ।
वातपित्तविषोन्मादशोषालक्ष्मीज्वरापहम् ॥ ३८ ॥
स्नेहानामुत्तमं शीतं वयसः स्थापनं परम् ।
सहस्रवीर्यं विधिभिर्घृतं[1] कर्मसहस्रकृत् ॥ ३९ ॥
मदापस्मारमूर्च्छायशिरःकर्णाक्षियोनिजान् ।
पुराणं जयति व्याधीन् व्रणशोधनरोपणम् ॥ ४० ॥
बल्याः किलाटपीयूषकूर्चिका[2]मोरणादयः ।

---

१ "विधिवद्धृत" इति पाठः. २ "कूचिका" इति पाठः.

शुक्रनिद्राकफकरा विष्टम्भिगुरुदोषलाः ॥ ४१ ॥
गव्ये क्षीरघृते श्रेष्ठे निन्दिते चाविसंभवे ।

अथ इक्षुवर्गः ॥

इक्षोः सरो गुरुः स्निग्धो बृंहणः कफमूत्रकृत् ॥ ४२ ॥
वृष्यः शीतोऽस्रपित्तघ्नः स्वादुपाकरसो रसः ।
सोऽग्रे सलवणो दन्तपीडितः शर्करासमः ॥ ४३ ॥
मूलाग्रजन्तुजग्धादिपीडनान्मलसंकरात् ।
किंचित्कालं विधृत्या च विकृतिं याति यान्त्रिकः॥४४॥
विदाही गुरुविष्टम्भी तेनासौ

तत्र पौण्ड्रकः ।

शैत्यप्रसादमाधुर्यैर्वरस्तमनु वांशिकः ॥ ४५ ॥
शतपर्वककान्तारनैपालाद्यास्ततः क्रमात् ।
सक्षाराः सकषायाश्च सोष्णाः किंचिद्विदाहिनः ॥४६॥
फाणितं गुर्वभिष्यन्दि चयकृन्मूत्रशोधनम् ।
नातिश्लेष्मकरो धौतः सृष्टमूत्रशकृद्गुडः ॥ ४७ ॥
प्रभूतक्रिमिमज्जासृङ्मेदोमांसकफोऽपरः ।
हृद्यः पुराणः पथ्यश्च नवः श्लेष्माग्निसादकृत् ॥ ४८ ॥
वृष्याः क्षतक्षीणहिता रक्तपित्तानिलापहाः ।
मत्स्यण्डिकाखण्डसिताः क्रमेण गुणवत्तमाः ॥ ४९ ॥
तद्गुणा तिक्तमधुरा कषाया यासशर्करा ।
दाहतृट्छर्दिमूर्च्छासृक्पित्तघ्न्यः सर्वशर्कराः ॥ ५० ॥
शर्करेक्षुविकाराणां फाणितं च वरावरे ।

चक्षुष्यं छेदि तृट्श्लेष्मविषहिध्मास्रपित्तनुत् ॥ ५१ ॥
मेहकुष्ठक्रिमिच्छर्दिश्वासकासातिसारनुत् ।
व्रणशोधनसंधानरोपणं वातलं मधु ॥ ५२ ॥
रूक्षं कषायमधुरं तत्तुल्या मधुशर्करा ।
उष्णमुष्णार्तमुष्णे च युक्तं चोष्णैर्निहन्ति तत् ॥ ५३॥
प्रच्छर्दने निरूहे च मधूष्णं न निवार्यते ।
अलब्धपाकमाश्वेव तयोर्यस्मान्निवर्तते ॥ ५४ ॥

अथ तैलवर्गः ॥

तैलं स्वयोनिवत्तत्र मुख्यं तीक्ष्णं व्यवायि च ।
त्वग्दोषकृदचक्षुष्यं[1] सूक्ष्मोष्णं कफकृन्न च । ॥ ५५ ॥
कृशानां बृंहणायालं स्थूलानां कर्शनाय च ।
बद्धविट्कं क्रिमिघ्नं च संस्कारात्सर्वदोषजित् ॥ ५६ ॥
सतिक्तोषणमैरण्डं तैलं स्वादु सरं गुरु ।
वर्ध्मगुल्मानिलकफानुदरं विषमज्वरम् ॥ ५७ ॥
रुक्शोफौ च कटीगुह्यकोष्ठपृष्ठाश्रयौ जयेत् ।
तीक्ष्णोष्णं पिच्छिलं विस्रं रक्तैरण्डोद्भवं त्वति ॥ ५८॥
कटूष्णं सार्षपं तीक्ष्णं कफशुक्रानिलापहम् ।
लघुपित्तास्रकृत् कोष्ठकुष्ठार्शोव्रणजन्तुजित् ॥ ५९ ॥
आक्षं स्वादु हिमं केश्यं गुरु पित्तानिलापहम् ।
नात्युष्णं निम्बजं तिक्तं क्रिमिकुष्ठकफप्रणुत् ॥ ६० ॥

---

१ "त्वग्दोषहृदच" इति पाठः.

उमाकुसुम्भजं चोष्णं त्वग्दोषकफपित्तकृत् ।
वसा मज्जा च वातघ्नौ बलपित्तकफप्रदौ ॥ ६१ ॥
मांसानुगस्वरूपौ च विद्यान्मेदोऽपि ताविव ।

अथ मद्यवर्गः ॥

दीपनं रोचनं मद्यं तीक्ष्णोष्णं तुष्टिपुष्टिदम् ॥ ६२ ॥
सस्वादुतिक्तकटुकमम्लपाकरसं सरम् ।
सकषायं स्वरारोग्यप्रतिभावर्णकृल्लघु ॥ ६३ ॥
नष्टनिद्राऽतिनिद्रेभ्यो हितं पित्तास्रदूषणम् ।
कृशस्थूलहितं रूक्षं सूक्ष्मं स्रोतोविशोधनम् ॥ ६४ ॥
वातश्लेष्महरं युक्त्या पीतं विषवदन्यथा ।
गुरु त्रिदोषजननं नवं जीर्णमतोऽन्यथा ॥ ६५ ॥
पेयं नोष्णोपचारेण न विरिक्तक्षुधातुरैः ।
नात्यर्थतीक्ष्णमृद्वल्पसंभारं कलुषं न च ॥ ६६ ॥
गुल्मोदरार्शोग्रहणीशोषहृत् स्नेहनी गुरुः ।
सुराऽनिलघ्नी मेदोसृक्स्तन्यमूत्रकफावहा ॥ ६७ ॥
तद्गुणा वारुणी हृद्या लघुस्तीक्ष्णा निहन्ति च ।
शूलकासवमिश्वासविबन्धाध्मानपीनसान् ॥ ६८ ॥
नातितीव्रमदा लघ्वी पथ्या बैभीतकी सुरा ।
व्रणे पाण्ड्वामये कुष्ठे न चात्यर्थं विरुध्यते ॥ ६९ ॥
विष्टम्भिनी यवसुरा गुर्वी रूक्षा त्रिदोषला ।
यथाद्रव्यगुणोऽरिष्टः सर्वमद्यगुणाधिकः ॥ ७० ॥
ग्रहणीपाण्डुकुष्ठार्शःशोफशोषोदरज्वरान् ।

हन्ति गुल्मकृमिप्लीह्न कषायकटुवातलः ॥ ७१ ॥
मार्द्वीकं लेखनं हृद्यं नात्युष्णं मधुरं सरम् ।
अल्पपित्तानिलं पाण्डुमेहार्शःकृमिनाशनम् ॥ ७२ ॥
अस्मादल्पान्तरगुणं खार्जूरं वातलं गुरु ।
शार्करः सुरभिः स्वादु हृद्यो नातिमदो लघुः ॥ ७३ ॥
सृष्टमूत्रशकृद्वातो गौडस्तर्पणदीपनः ।
वातपित्तकरः सीधुः स्नेहश्लेष्मविकारहा ॥ ७४ ॥
मेदःशोफोदरार्शोघ्नस्तत्र पक्वरसो वरः ।
छेदी मध्वासवस्तीक्ष्णो मेहपीनसकासजित् ॥ ७५ ॥
रक्तपित्तकफोत्क्लेदि शुक्तं वातानुलोमनम् ।
भृशोष्णतीक्ष्णरूक्षाम्लं हृद्यं रुचिकरं सरम् ॥ ७६ ॥
दीपनं शिशिरस्पर्शं पाण्डुदृक्कृमिनाशनम् ।
गुडेक्षुमद्यमार्द्वीकशुक्तं लघु यथोत्तरम् ॥ ७७ ॥
कन्दमूलफलाद्यं च तद्वद्विद्यात्तदाऽऽसुतम् ।
शाण्डाकी चासुतं चान्यत्कालाम्लं रोचनं लघु ॥७८॥
धान्याम्लं भेदि तीक्ष्णोष्णं पित्तकृत्स्पर्शशीतलम् ।
श्रमक्लमहरं रुच्यं दीपनं बस्तिशूलनुत् ॥ ७९ ॥
शस्तमास्थापने हृद्यं लघु वातकफापहम् ।
एभिरेव गुणैर्युक्ते सौवीरकतुषोदके ॥ ८० ॥
कृमिहृद्रोगगुल्मार्शः पाण्डुरोगनिबर्हणे ।
ते क्रमाद्व्रितुषैर्विद्यात्सतुषैश्च यवैः कृते ॥ ८१ ॥

---

१ "माध्वीक" इति पाठः.

मूत्रं गोऽजाविमहिषीगजाश्वोष्ट्रखरोद्भवम् ।
पित्तलं रूक्षतीक्ष्णोष्णं लवणानुरसं कटु ॥ ८२ ॥
कृमिशोफोदरानाहशूलपाण्डुकफानिलान् ।
गुल्मारुचिविषश्वित्रकुष्ठार्शांसि जयेल्लघु ॥ ८३ ॥
तोयक्षीरेक्षुतैलानां वर्गैर्मद्यस्य च क्रमात् ।
इति द्रवैकदेशोऽयं यथास्थूलमुदाहृतः ॥ ८४ ॥"

---

## षष्ठोऽध्यायः ।

अथातोऽन्नस्वरूपविज्ञानीयमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।

### अथ शूकधान्यवर्गः ॥

"रक्तो महान् सकलमस्तूर्णकः शकुनाहृतः ।
सारामुखो दीर्घशूको रोध्रशूकः सुगन्धकः ॥ १ ॥
पुण्ड्रः पाण्डुः पुण्डरीकः प्रमोदो गौरसारिवौ[1] ।
काञ्चनो महिषः शूको दूषकः कुसुमाण्डकः ॥ २ ॥
लाङ्गला लोहवालाख्याः कर्दमाः शीतभीरुकाः ।
पतङ्गास्तपनीयाश्च ये चान्ये शालयः शुभाः ॥ ३ ॥
स्वादुपाकरसाः स्निग्धा वृष्या बद्धाल्पवर्चसः ।
कषायानुरसाः पथ्या लघवो मूत्रला हिमाः ॥ ४ ॥
शूकजेषु वरस्तत्र रक्तस्तृष्णात्रिदोषहा ।
महांस्तमनु कलमस्तं चाप्यनु ततः परे ॥ ५ ॥

---

१ "रशालिकः" इति पाठः।

यवका हायनाः पांसुवाप्यनैषधकादयः।
स्वादूष्णा गुरवः स्निग्धाः पाकेऽम्लाः श्लेष्मपित्तलाः ६
सृष्टमूत्रपुरीषाश्च पूर्वं पूर्वं च निन्दिताः।
स्निग्धो ग्राही लघुः स्वादुस्त्रिदोषघ्नः स्थिरो हिमः ॥७॥
षष्टिको व्रीहिषु श्रेष्ठो गौरश्चासितगौरतः।
ततः क्रमान्महाव्रीहिकृष्णव्रीहिजतूमुखाः ॥ ८ ॥
कुक्कुटाण्डकलावाख्यपारावतकशूकराः।
वरकोद्दालकोज्वालचीनशारददुर्दराः ॥ ९ ॥
गन्धनाः कुरुविन्दाश्च गुणैरल्पान्तराः स्मृताः।
स्वादुरम्लविपाकोऽन्यो व्रीहिः पित्तकरो गुरुः ॥१०॥
बहुमूत्रपुरीषोष्मा त्रिदोषस्त्वेव पाटलः।
कङ्गुकोद्रवनीवारश्यामाकादि हिमं लघु ॥ ११ ॥
तृणधान्यं पवनकृल्लेखनं कफपित्तहृत्।
भग्नसंधानकृत्तत्र प्रियङ्गुर्बृंहणी गुरुः ॥ १२ ॥
कोरदूषः परं ग्राही स्पर्शशीतो विषापहः।
रूक्षः शीतो गुरुः स्वादुः सरो विड्वातकृद्यवः ॥ १३ ॥
वृष्यः स्थैर्यकरो मूत्रमेदःपित्तकफाञ्जयेत्।
पीनसश्वासकासोरुस्तम्भकण्ठत्वगामयान् ॥ १४ ॥
न्यूनो यवादनुयवः
रूक्षोष्णो वंशजो यवः।
वृष्यः शीतो गुरुः स्निग्धो जीवनो वातपित्तहा ॥१५॥

---

१ "वाप्य" इति पाठः. २ "पालाख्य" इति पाठः.

संधानकारी मधुरो गोधूमः स्थैर्यकृत्सरः ।
पथ्या नंदीमुखी शीता कषायमधुरा लघुः ॥ १६ ॥

अथ शिम्बीधान्यवर्गः ॥

मुद्गाढकीमसूरादि शिंबीधान्यं विबंधकृत् ।
कषायं स्वादु संग्राहि कटुपाकं हिमं लघु ॥ १७ ॥
मेदःश्लेष्मास्रपित्तेषु हितं लेपोपसेकयोः ।
वरोऽत्र मुद्गोऽल्पचलः कलायस्त्वतिवातलः ॥ १८ ॥
राजमाषोऽनिलकरो रूक्षो बहुशकृद्गुरुः ।
उष्णाः कुलत्थाः पाकेऽम्लाः शुक्राश्मश्वासपीनसान् १९
कासार्शःकफवातांश्च घ्नंति पित्तास्रदाः परम् ।
निष्पावो वातपित्तास्रस्तन्यमूत्रकरो गुरुः ॥ २० ॥
सरो विदाही दृक्शुक्रकफशोफविषापहः ।
माषः स्निग्धो बलश्लेष्ममलपित्तकरः सरः ॥ २१ ॥
गुरूष्णोऽनिलहा स्वादुः शुक्रवृद्धिविरेककृत् ।
फलानि माषवद्विद्यात्काकाण्डोलात्मगुप्तयोः ॥ २२ ॥
उष्णस्त्वच्यो हिमः स्पर्शे केश्यो बल्यस्तिलो गुरुः ।
अल्पमूत्रः कटुः पाके मेधाऽग्निकफपित्तकृत् ॥ २३ ॥
स्निग्धोमा स्वादुतिक्तोष्णा कफपित्तकरी गुरुः ।
दृक्शुक्रहृत्कटुः पाके तद्वद्बीजं कुसुम्भजम् ॥ २४ ॥
माषोऽत्र सर्वेष्ववरो यवकः शूकजेषु च ।
नवं धान्यमभिष्यन्दि लघु संवत्सरोषितम् ॥ २५ ॥

शीघ्रजन्म तथा सूप्यं निस्तुषं युक्तिभर्जितम् ।
'यवगोधूममाषाश्च तिलाश्चाभिनवा हिताः ।
पुराणा विरसाः सूक्ष्मा न तथार्थकरा मताः ॥'

अथ कृतान्न(पक्वान्न)वर्गः ॥

मण्डपेयाविलेपीनामोदनस्य च लाघवम् ॥ २६ ॥
यथापूर्वं शिवस्तत्र मण्डो वातानुलोमनः ।
तृड्ग्लानिदोषशेषघ्नः पाचनो धातुसाम्यकृत् ॥ २७ ॥
स्रोतोमार्दवकृत्स्वेदी सन्धुक्षयति चानलम् ।
क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगज्वरापहा ॥ २८ ॥
मलानुलोमनी पथ्या पेया दीपनपाचनी ।
विलेपी ग्राहिणी हृद्या तृष्णाघ्नी दीपनी हिता ॥ २९ ॥
व्रणाक्षिरोगसंशुद्धदुर्बलस्नेहपायिनाम् ।
सुधौतः प्रसृतः स्विन्नोऽत्यक्तोष्मा चौदनो लघुः ३०
यश्चाग्नेयौषधक्वाथसाधितो भृष्टतण्डुलः ।
विपरीतो गुरुः क्षीरमांसाद्यैर्यश्च साधितः ॥ ३१ ॥
इति द्रव्यक्रियायोगमानाद्यैः सर्वमादिशेत् ।
बृंहणः प्रीणनो वृष्यश्चक्षुष्यो व्रणहा रसः ॥ ३२ ॥
मौद्गस्तु पथ्यः संशुद्धव्रणकण्ठाक्षिरोगिणाम् ।
वातानुलोमी कौलत्थो गुल्मतूनीप्रतूनिजित् ॥ ३३ ॥
"अकृतं कृतयूषं च तनु संस्कारितं रसम् ।
सूपमम्लमनम्लं च गुरु विद्याद्यथोत्तरम् ॥"
तिलपिण्याकविकृतिः शुष्कशाकं विरूढकम् ।
शाण्डाकीवटकं दृग्घ्नं दोषलं ग्लपनं गुरु ॥ ३४ ॥

रसाला बृंहणी वृष्या स्निग्धा बल्या रुचिप्रदा ।
श्रमक्षुत्तृट्क्लमहरं पानकं प्रीणनं गुरु ॥ ३५ ॥
विष्टम्भि मूत्रलं हृद्यं यथाद्रव्यगुणं च तत् ।
लाजास्तृट्छर्द्यतीसारमेहमेदःकफच्छिदः ॥ ३६ ॥
कासपित्तोपशमना दीपना लघवो हिमाः ।
पृथुका गुरवो बल्याः कफविष्टम्भकारिणः ॥ ३७ ॥
धाना विष्टम्भिनी रूक्षा तर्पणी लेखनी गुरुः ।
सक्तवो लघवः क्षुत्तृट्श्रमने[1]त्रामयव्रणान् ॥ ३८ ॥
घ्नन्ति सन्तर्पणाः पानात्सद्य एव बलप्रदाः ।
नोदकान्तरितान्न द्विर्न निशायां न केवलान् ॥ ३९ ॥
न भुक्त्वा न द्विजैश्छित्त्वा सक्तूनद्यान्न वा बहून् ।
पिण्याको ग्लपनो रूक्षो विष्टम्भी दृष्टिदूषणः ॥ ४० ॥
"रौक्ष्याद्विष्टम्भते कोष्ठे विष्टम्भित्वाद्विदह्यते ।
विदाहात्कुरुते ग्लानिं पिण्याको निशि सेवितः ॥"
वेसवारो गुरुः स्निग्धो बलोपचयवर्धनः ।
मुद्गादिजास्तु गुरवो यथाद्रव्यगुणानुगाः ॥ ४१ ॥
कुकूलकर्परभ्राष्ट्रकन्दुअ[2]ङ्गारविपाचितान् ।
एकयोनींल्लघून्विद्यादपूपानुत्तरोत्तरम् ॥ ४२ ॥

अथ मांसवर्गः ।

हरिणैणकुरङ्गर्क्षगोकर्णमृगमातृकाः ।
शशशम्बरचारुष्कशरभाद्या मृगाः स्मृताः ॥ ४३ ॥

---

१ 'नेत्रगलामयान्' इति पाठः. २ 'कन्दुका' इति पाठः.

लाववार्तीकवर्तीररक्तवर्त्मककुक्कुभाः ।
कपिञ्जलोपचक्राख्यचकोरकुरुवाहवः ॥ ४४ ॥
वर्तको वर्तिका चैव तित्तिरिः क्रकरः शिखी ।
ताम्रचूडाख्यबकरगोनर्दगिरिवर्तिकाः ॥ ४५ ॥
तथा शारपदेन्द्राभवरटाद्याश्च विष्किराः ।
जीवञ्जीवकदात्यूहभृङ्गाह्वशुकसारिकाः ॥ ४६ ॥
लट्वाकोकिलहारीतकपोतचटकादयः ।
प्रतुदाः

भेकगोधाहिश्वाविदाद्या विलेशयाः ॥ ४७ ॥
गोखराश्वतरोष्ट्राश्वद्वीपिसिंहर्क्षवानराः ।
मार्जारमूषकव्याघ्रवृकबभ्रुतरक्षवः ॥ ४८ ॥
लोपाकजम्बुकश्येनचापवान्तादवायसाः ।
शशघ्नीभासकुररगृध्रोलूककुलिङ्गकाः ॥ ४९ ॥
धूमिका मधुहा चेति प्रसहा मृगपक्षिणः ।
वराहमहिषन्यङ्कुरुरुरोहितवारणाः ॥ ५० ॥
सृमरश्चमरः खड्गो गवयश्च महामृगाः ।
हंससारसकादम्बबककारण्डवप्लवाः ॥ ५१ ॥
बलाकोत्क्रोशचक्राह्वमद्गुक्रौञ्चादयोऽप्चराः ।
मत्स्या रोहितपाठीनकूर्मकुम्भीरकर्कटाः ॥ ५२ ॥
शुक्तिशङ्खोद्रशम्बूकशफरीवर्मिचन्द्रिकाः ।

---

१ 'ख्यबरकगो' इति पा. २ 'सार' इति पा. ३ 'धार' इति पा. ४ 'शशारिभा' इति पाठः. ५ 'ङ्कुश' इति पाठः.

चुलूकीनक्रमकरशिशुमारतिमिङ्गिलाः ॥ ५३ ॥
राजीचिलिचिमाद्याश्च

मांसमित्याहुरष्टधा ।

"मृग्यं वैष्किरिकं किञ्च प्रातुदं च विलेशयम् ।
प्रासहं च महामृग्यमप्चरं मात्स्यमष्टधा ॥"
योनिष्वजावी व्यामिश्रगोचरत्वादनिश्चिते ॥ ५४ ॥
आद्यान्त्या जाङ्गलानूपा मध्यौ साधारणौ स्मृतौ ।
तत्र बद्धमलाः शीता लघवो जाङ्गला हिताः ॥ ५५ ॥
पित्तोत्तरे वातमध्ये सन्निपाते कफानुगे ।
दीपनः कटुकः पाके ग्राही रूक्षो हिमः शशः ॥ ५६ ॥
ईषदुष्णगुरुस्निग्धा बृंहणा वर्तकादयः ।
तित्तिरिस्तेष्वपि वरो मेधाग्निबलशुक्रकृत् ॥ ५७ ॥
ग्राही वर्ण्योऽनिलोद्रिक्तसन्निपातहरः परम् ।
नातिपथ्यः शिखी पथ्यः श्रोत्रस्वरवयोदृशाम् ॥५८॥
तद्वच्च कुक्कुटो वृष्यः

ग्राम्यस्तु श्लेष्मलो गुरुः ।

मेधाऽनलकरा हृद्याः क्रकराः सोपचक्रकाः ॥ ५९ ॥
गुरुः सलवणः काणकपोतः सर्वदोषकृत् ।
चटकाः श्लेष्मलाः स्निग्धा वातघ्नाः शुक्रलाः परम् ६०
गुरूष्णस्निग्धमधुरा वर्गाश्चातो यथोत्तरम् ।
मूत्रशुक्रकृतो बल्या वातघ्नाः कफपित्तलाः ॥ ६१ ॥

---

१ 'चुलकी' इति पाठः.

शीता महामृगास्तेषु क्रव्यादप्रसहाः पुनः ।
लवणानुरसाः पाके कटुका मांसवर्धनाः ॥ ६२ ॥
जीर्णार्शोग्रहणीदोषशोषार्तानां परं हिताः ।
नातिशीतगुरुस्निग्धं मांसमाजमदोषलम् ॥ ६३ ॥
शरीरधातुसामान्यादनभिष्यन्दि बृंहणम् ।
विपरीतमतो ज्ञेयमाविकं बृंहणं तु तत् ॥ ६४ ॥
शुष्ककासश्रमात्यग्निविषमज्वरपीनसान् ।
कार्श्यं केवलवातांश्च गोमांसं सन्नियच्छति ॥ ६५ ॥
उष्णो गरीयान्माहिषः स्वप्नदार्ढ्यबृहत्त्वकृत् ।
तद्वद्वराहः श्रमहा रुचिशुक्रबलप्रदः ॥ ६६ ॥
मत्स्याः परं कफकराः

चिलिचीमस्त्रिदोषकृत् ।

"मत्स्यादिपक्षिणां चैव गुरूण्यण्डानि चादिशेत् ।
तानि स्निग्धानि वृष्याणि स्वादुपाकरसानि च ॥"
लावरोहितगोधैणाः स्वे स्वे वर्गे वराः परम् ॥ ६७ ॥
मांसं सद्योहतं शुद्धं वयःस्थं च भजेत्

त्यजेत् ।

मृतं कृशं भृशं मेद्यं व्याधिवारिविषैर्हतम् ॥ ६८ ॥
पुंस्त्रियोः पूर्वपश्चार्धे गुरुणी, गार्भिणी गुरुः ।
लघुर्योषिच्चतुष्पात्सु, विहङ्गेषु पुनः पुमान् ॥ ६९ ॥
शिरःस्कन्धोरुपृष्ठस्य कट्याः सक्थ्नोश्च गौरवम् ।
तथाऽऽमपक्वाशययोर्यथापूर्वं विनिर्दिशेत् ॥ ७० ॥

शोणितप्रभृतीनां च धातूनामुत्तरोत्तरम् ।
मांसाद्गरीयो वृषणमेढ्रवृक्कयकृद्गुदम् ॥ ७१ ॥

अथ शाकवर्गः ।

शाकं पाठाशठीमूषासुनिषण्णसतीनजम् ।
त्रिदोषघ्नं लघु ग्राहि सराजक्षववास्तुकम् ॥ ७२ ॥
सुनिषण्णोऽग्निकृद्वृष्यस्तेषु
राजक्षवः परम् ।
ग्रहण्यर्शोविकारघ्नः
वर्चोभेदि तु वास्तुकम् ॥ ७३ ॥
हन्ति दोषत्रयं कुष्ठं वृष्या सोष्णा रसायनी ।
काकमाची सरा स्वर्या
चाङ्गेर्यम्लाऽग्निदीपनी ॥ ७४ ॥
ग्रहण्यर्शोऽनिलश्लेष्महितोष्णा ग्राहिणी लघुः ।
पटोलसप्तलारिष्टशार्ङ्गेष्टावल्गुजाऽमृताः ॥ ७५ ॥
वेत्राग्रबृहती वासा कुन्तिलीतिलपर्णिकाः ।
मण्डूकपर्णीकर्कोटकारवेल्लकपर्पटाः ॥ ७६ ॥
नाडीकलायगोजिह्वावार्ताकं वनतिक्तकम् ।
करीरं कुलकं नन्दी कुचैला शकुलादनी ॥ ७७ ॥
कठिल्लं केम्बुकं शीतं सकोशातककर्कशम् ।
तिक्तं पाके कटु ग्राहि वातलं कफपित्तजित् ॥ ७८ ॥
हृद्यं पटोलं कृमिनुत्स्वादुपाकं रुचिप्रदम् ।

---

१ 'कुन्तिली,' 'कुन्तली' इति पाठौ. २ 'कठिल' पाठः.

पित्तलं दीपनं भेदि वातघ्नं बृहतीद्वयम् ॥ ७९ ॥
वृषं तु वमिकासघ्नं रक्तपित्तहरं परम् ।
कारवेल्लं सकटुकं दीपनं कफजित्परम् ॥ ८० ॥
वार्ताकं कटु तिक्तोष्णं मधुरं कफवातजित् ।
सक्षारमग्निजननं हृद्यं रुच्यमपित्तलम् ॥ ८१ ॥
करीरमाध्मानकरं कषायं स्वादु तिक्तकम् ।
कोशातकावल्गुजकौ भेदिनावग्निदीपनौ ॥ ८२ ॥
तण्डुलीयो हिमो रूक्षः स्वादुपाकरसो लघुः ।
मदपित्तविषास्रघ्नः

मुञ्जातं वातपित्तजित् ॥ ८३ ॥
स्निग्धं शीतं गुरु स्वादु बृंहणं शुक्रकृत्परम् ।
गुर्वी सरा तु पालङ्क्या

मदघ्नी चाप्युपोदका ॥ ८४ ॥
पालङ्क्यावत्स्मृतश्चञ्चुः[2] स तु सङ्ग्रहणात्मकः ।
विदारी वातपित्तघ्नी मूत्रला स्वादुशीतला ॥ ८५ ॥
जीवनी बृंहणी कण्ठ्या गुर्वी वृष्या रसायनम् ।
चक्षुष्या सर्वदोषघ्नी जीवन्ती मधुरा हिमा ॥ ८६ ॥
कूष्माण्डतुम्बकालिङ्गकर्कार्वेर्वारुतिण्डिशम् ।
तथा त्रपुसचीनाकचिर्भटं कफवातकृत् ॥ ८७ ॥
भेदि विष्टम्भ्यभिष्यन्दि स्वादुपाकरसं गुरु ।
वल्लीफलानां प्रवरं कूष्माण्डं वातपित्तजित् ॥ ८८ ॥

---

१ 'कफपित्तजित्' इति पा. २ 'श्चञ्चु' 'श्चुञ्चु' इति पाठौ.

बस्तिशुद्धिकरं वृष्यम्

त्रपुसं त्वतिमूत्रलम् ।

तुम्बं रूक्षतरं ग्राहि कालिङ्गैर्वारुचिर्भटम् ॥ ८९ ॥

बालं पित्तहरं शीतं विद्यात्पक्वमतोऽन्यथा ।

शीर्णवृन्तं तु सक्षारं पित्तलं कफवातजित् ॥ ९० ॥

रोचनं दीपनं हृद्यमष्ठीलाऽऽनाहनुल्लघु ।

मृणालबिसशालूककुमुदोत्पलकन्दकम् ॥ ९१ ॥

नन्दीमाषककेलूटशृङ्गाटककसेरुकम् ।

क्रौञ्चादनं कलोड्यं च रूक्षं ग्राहि हिमं गुरु ॥ ९२ ॥

कैलम्बनालिकामार्षकुटिञ्जरकुतुम्बकम् ।

चिल्लीलट्वाकलोणीकाकुरूटकगवेधुकम् ॥ ९३ ॥

जीवन्तझुञ्झवेडगजयवशाकसुवर्चलाः ।

आलुकानि च सर्वाणि तथा सूप्यानि लक्ष्मणम् ॥९४॥

स्वादु रूक्षं सलवणं वातश्लेष्मकरं गुरु ।

शीतलं सृष्टविण्मूत्रं प्रायो विष्टभ्य जीर्यति ॥ ९५ ॥

स्विन्नं निष्पीडितरसं स्नेहाढ्यं नातिदोषलम् ।

लघुपत्रा तु या चिल्ली सा वास्तुकसमा मता ॥ ९६ ॥

तर्कारीवरुणं स्वादु सतिक्तं कफवातजित् ।

वर्षाभ्वौ कालशाकं च सक्षारं कटुतिक्तकम् ॥ ९७ ॥

दीपनं भेदनं हन्ति गरशोफकफानिलान् ।

---

१ 'कलम्बु' इति पाठः. २ 'कुलिञ्ज' इति पाठः. ३ 'कुरुम्ब' इति पाठः. ४ 'वरुण' इति पाठः.

"सङ्ग्राहि शाल्मलीपुष्पं पित्तास्रघ्नं विशेषतः ।"

दीपना कफवातघ्नाश्चिरिबिल्वाङ्कुराः सराः ॥ ९८ ॥

शतावर्यङ्कुरास्तिक्ता वृष्या दोषत्रयापहाः ।

रूक्षो वंशकरीरस्तु विदाही वातपित्तलः ॥ ९९ ॥

पत्तूरो दीपनस्तिक्तः प्लीहार्शःकफवातजित् ।

कृमिकासकफोत्क्लेदान् कासमर्दो जयेत्सरः ॥ १०० ॥

रूक्षोष्णमम्लं कौसुम्भं गुरु पित्तकरं सरम् ।

गुरूष्णं सार्षपं बद्धविण्मूत्रं सर्वदोषकृत् ॥ १०१ ॥

यद्बालमव्यक्तरसं किंचित्क्षारं सतिक्तकम् ।

तन्मूलकं दोषहरं लघु सोष्णं नियच्छति ॥ १०२ ॥

गुल्मकासक्षयश्वासव्रणनेत्रगलामयान् ।

स्वराग्निसादोदावर्तपीनसांश्च

महत्पुनः ॥ १०३ ॥

रसे पाके च कटुकमुष्णवीर्यं त्रिदोषकृत् ।

गुर्वभिष्यन्दि च

स्निग्धसिद्धं[1] तदपि वातजित् ॥१०४॥

वातश्लेष्महरं शुष्कं सर्वम्

आमं तु दोषलम् ।

कटूष्णो वातकफहा पिण्डालुः पित्तवर्धनः ॥ १०५ ॥

कुठेरशिग्रुसुरससुमुखासुरिभूस्तृणम् ।

फणिज्झार्जकजम्बीरप्रभृति ग्राहि शालनम् ॥ १०६ ॥

---

१ 'स्विन्नं' इति पाठः.

विदाहि कटु रूक्षोष्णं हृद्यं दीपनरोचनम् ।
दृक्शुक्रकृमिहृत्तीक्ष्णं दोषोत्क्लेशकरं लघु ॥ १०७ ॥
हिध्माकासविषश्वासपार्श्वरुक्पूतिगन्धहा ।
सुरसः
सुमुखो नातिविदाही गरशोफहा ॥ १०८ ॥
आर्द्रिका तिक्तमधुरा मूत्रला न च पित्तकृत् ।
लशुनो भृशतीक्ष्णोष्णः कटुपाकरसः सरः ॥ १०९ ॥
हृद्यः केश्यो गुरुर्वृष्यः स्निग्धो रोचनदीपनः ।
भग्नसंधानकृद्बल्यो रक्तपित्तप्रदूषणः ॥ ११० ॥
किलासकुष्ठगुल्माऽर्शोमेहक्रिमिकफानिलान् ।
सहिध्मापीनसश्वासकासान् हन्ति रसायनम् ॥ १११ ॥
पलाण्डुस्तद्गुणन्यूनः श्लेष्मलो नातिपित्तलः ।
कफवातार्शसां पथ्यः स्वेदेऽभ्यवहृतौ तथा ॥ ११२ ॥
तीक्ष्णो गृञ्जनको ग्राही पित्तिनां हितकृन्न सः ।
दीपनः सूरणो रुच्यः कफघ्नो विशदो लघुः ॥ ११३ ॥
विशेषादर्शसां पथ्यः
भूकन्दस्त्वतिदोषलः ।
पत्रे पुष्पे फले नाले कन्दे च गुरुता क्रमात् ॥ ११४ ॥
वरा शाकेषु जीवन्ती सार्षपं त्ववरं परम् ।

अथ फलवर्गः ।

द्राक्षा फलोत्तमा वृष्या चक्षुष्या सृष्टमूत्रविट् ॥ ११५ ॥

---

२ 'वमिश्वास' इति पाठः.

स्वादुपाकरसा स्निग्धा सकषाया हिमा गुरुः ।
निहन्त्यनिलपित्तास्रतिक्तास्यत्वमदात्ययान् ॥ ११६ ॥
तृष्णाकासश्रमश्वासस्वरभेदक्षतक्षयान् ।
अह्रिकफपित्तान् जयति त्रीन् दोषान् स्वादु दाडिमम् ॥
पित्ताविरोधि नात्युष्णमम्लं वातकफापहम् ।
सर्वं हृद्यं लघु स्निग्धं ग्राहि रोचनदीपनम् ॥ ११८ ॥
मोचखर्जूरपनसनारिकेलपरूषकम् ।
आम्रातताल्काश्मर्यराजादनमधूकजम् ॥ ११९ ॥
सौवीरबदराङ्कोल्लफल्गुश्लेष्मातकोद्भवम् ।
वातामाभिषुकाक्षोडमुकूलकनिकोचकम् ॥ १२० ॥
उरुमाणं प्रियालं च बृंहणं गुरु शीतलम् ।
दाहक्षतक्षयहरं रक्तपित्तप्रसादनम् ॥ १२१ ॥
स्वादुपाकरसं स्निग्धं विष्टम्भि कफशुक्रकृत् ।
फलं तु पित्तलं तालं सरं काश्मर्यजं हिमम् ॥ १२२॥
शकृन्मूत्रविबन्धघ्नं केश्यं मेध्यं रसायनम् ।
वातामाद्युष्णवीर्यं तु कफपित्तकरं सरम् ॥ १२३ ॥
परं वातहरं स्निग्धमनुष्णं तु प्रियालजम् ।
प्रियालमज्जा मधुरो वृष्यः पित्तानिलापहः ॥ १२४ ॥
कोलमज्जा गुणैस्तद्वत्तृट्छर्दिःकासजिच्च सः ।
पक्वं सुदुर्जरं बिल्वं दोषलं पूतिमारुतम् ॥ १२५ ॥
दीपनं कफवातघ्नं बालं, ग्राह्युभयं च तत् ।

---

१ 'क्लोलफ' इति पाठः. २ 'पियालं' इति पाठः.

कपित्थमामं कण्ठघ्नं दोषलं, दोषघाति तु ॥ १२६ ॥
पक्वं हिध्मावमथुजित्, सर्वं ग्राहि विषापहम् ।
जाम्बवं गुरु विष्टम्भि शीतलं भृशवातलम् ॥ १२७ ॥
सङ्ग्राहि मूत्रशकृतोरकण्ठ्यं कफपित्तजित् ।
वातपित्तास्रकृद्बालं, बद्धास्थि कफपित्तकृत् ॥ १२८ ॥
गुर्वाम्रं वातजित्पक्वं स्वाद्वम्लं कफशुक्रकृत् ।
"तृष्णाघ्नमुष्णमम्लायाः फलं पित्तकरं सरम् ।"
वृक्षाम्लं ग्राहि रूक्षोष्णं वातश्लेष्महरं लघु ॥ १२९ ॥
शम्या गुरूष्णं केशघ्नं रूक्षम्,

पीलु तु पित्तलम् ।
कफवातहरं भेदि प्लीहार्शःकृमिगुल्मनुत् ॥ १३० ॥
सतिक्तं स्वादु यत्पीलु नात्युष्णं तत्त्रिदोषजित् ।
त्वक्तिक्तकटुका स्निग्धा मातुलुङ्गस्य वातजित् ॥१३१॥
बृंहणं मधुरं मांसं वातपित्तहरं गुरु ।
लघु तत्केसरं कासश्वासहिध्मामदात्ययान् ॥ १३२ ॥
आस्यशोषानिलश्लेष्मविबन्धच्छर्द्यरोचकान् ।
गुल्मोदरार्शःशूलानि मन्दाग्नित्वं च नाशयेत् ॥१३३॥
'मधुरं किञ्चिदम्लं च हृद्यं भक्तप्ररोचकम् ।
गुरु वातप्रशमनं विद्यान्नारङ्गजं फलम् ॥'
भल्लातकस्य त्वङ्मांसं बृंहणं स्वादु शीतलम् ।
तदस्थ्यग्निसमं मेध्यं कफवातहरं परम् ॥ १३४ ॥
स्वाद्वम्लं शीतमुष्णं च द्विधा पालेवतं गुरु ।

हृद्यमत्यग्निशमनम्
हृद्यं मधुरमारुकम् ॥ १३५ ॥
पक्कमाशु जरां याति नात्युष्णगुरुदोषलम् ।
द्राक्षापरूषकं चार्द्रमम्लं पित्तकफप्रदम् ॥ १३६ ॥
गुरूष्णवीर्यं वातघ्नं सरं सकरमर्दकम् ।
तथाऽम्लं कोलकर्कन्धूलकुचाम्रातकारुकम् ॥ १३७ ॥
ऐरावतं दन्तशठं सतूदं मृगलिण्डिकम् ।
नातिपित्तकरं पक्कं शुष्कं च करमर्दकम् ॥ १३८ ॥
दीपनं भेदनं शुष्कमम्लीकाकोलयोः फलम् ।
"स्वाद्वम्ल लघुकोलं तु शुष्कं जीर्णं तु दीपनम् ।"
तृष्णाश्रमक्लमच्छेदि लघ्विष्टं कफवातयोः ॥ १३९ ॥
फलानामवरं तत्र लकुचं सर्वदोषकृत् ।
हिमानलोष्णदुर्वातव्याललालादिदूषितम् ॥ १४० ॥
जन्तुजुष्टं जले मग्नमभूमिजमनार्तवम् ।
अन्यधान्ययुतं हीनवीर्यं जीर्णतयाऽति च ॥ १४१ ॥
धान्यं त्यजेत्तथा शाकं रूक्षसिद्धमकोमलम् ।
असञ्जातरसं तद्वच्छुष्कं चान्यत्र मूलकात् ॥ १४२ ॥
प्रायेण फलमप्येवं तथामं बिल्ववर्जितम् ।

अथौषधवर्गः ।

विष्यन्दि लवणं सर्वं सूक्ष्मं सृष्टमलं मृदुः ॥ १४३ ॥

---

१ 'हृद्यं' इति पाठः. २ 'तमारुकम्' इति पाठः. ३ 'स-मलामृग' इति पाठः. ४ 'विदुः' इति पाठः.

वातघ्नं पाकि तीक्ष्णोष्णं रोचनं कफपित्तकृत् ।
सैन्धवं तत्र सस्वादु वृष्यं हृद्यं त्रिदोषनुत् ॥ १४४ ॥
लघ्वनुष्णं दृशः पथ्यमविदाह्यग्निदीपनम् ।
लघु सौवर्चलं हृद्यं सुगन्ध्युद्गारशोधनम् ॥ १४५ ॥
कटुपाकं विबन्धघ्नं दीपनीयं रुचिप्रदम् ।
ऊर्ध्वाधःकफवातानुलोमनं दीपनं विडम् ॥ १४६ ॥
विबन्धानाहविष्टम्भशूलगौरवनाशनम् ।
विपाके स्वादु सामुद्रं गुरु श्लेष्मविवर्धनम् ॥ १४७ ॥
सतिक्तकटुकक्षारं तीक्ष्णमुत्क्लेदि चौद्भिदम् ।
कृष्णे सौवर्चलगुणा लवणे गन्धवर्जिताः ॥ १४८ ॥
रोमकं लघु, पांसूत्थं सक्षारं श्लेष्मलं गुरु ।
लवणानां प्रयोगे तु सैन्धवादि प्रयोजयेत् ॥ १४९ ॥
गुल्महृद्ग्रहणीपाण्डुप्लीहानाहगलामयान् ।
श्वासार्शःकफकासांश्च शमयेद्यवशूकजः ॥ १५० ॥
क्षारः सर्वश्च परमं तीक्ष्णोष्णः कृमिजिल्लघुः ।
पित्तासृग्दूषणः पाकी छेद्यहृद्यो विदारणः ॥ १५१ ॥
अपथ्यः कटुलावण्याच्छुक्रौजःकेशचक्षुषाम् ।
हिङ्गु वातकफानाहशूलघ्नं पित्तकोपनम् ॥ १५२ ॥
कटुपाकरसं रुच्यं दीपनं पाचनं लघु ।
कषाया मधुरा पाके रूक्षा विलवणा लघुः ॥ १५३ ॥
दीपनी पाचनी मेध्या वयसः स्थापनी परम् ।
उष्णवीर्या सराऽऽयुष्या बुद्धीन्द्रियबलप्रदा ॥ १५४ ॥

कुष्ठवैवर्ण्यवैस्वर्यपुराणविषमज्वरान् ।
शिरोऽक्षिपाण्डुहृद्रोगकामलाग्रहणीगदान् ॥ १५५ ॥
सशोषशोफातीसारमेदमोहवमिक्रिमीन् ।
श्वासकासप्रसेकार्शःप्लीहानाहगरोदरम् ॥ १५६ ॥
विबन्धं स्रोतसां गुल्ममूरुस्तम्भमरोचकम् ।
हरीतकी जयेद्व्याधींस्तांस्तांश्च कफवातजान् ॥ १५७ ॥
तद्वदामलकं शीतमम्लं पित्तकफापहम् ।
कटु पाके हिमं केश्यमक्षमीषच्च तद्गुणम् ॥ १५८ ॥
इयं रसायनवरा त्रिफलाऽक्ष्यामयापहा ।
रोपणी त्वग्गदक्लेदमेदोमेहकफास्रजित् ॥ १५९ ॥
सकेसरं चतुर्जातं त्वक्पत्रैलं त्रिजातकम् ।
"सुगन्धि सर्वपेयानां व्यञ्जनानां च वासनम् ।
लेह्यानां खाद्यपाकानां चूर्णानां च प्रयोजयेत् ॥"
पित्तप्रकोपि तीक्ष्णोष्णं रूक्षं रोचनदीपनम् ॥ १६० ॥
रसे पाके च कटुकं कफघ्नं मरिचं लघु ।
श्लेष्मला स्वादुशीताऽऽर्द्रा गुर्वी स्निग्धा च पिप्पली १६१
सा शुष्का विपरीताऽतः स्निग्धा वृष्या रसे कटुः ।
स्वादुपाकाऽनिलश्लेष्मश्वासकासापहा सरा ॥ १६२ ॥
न तामत्युपयुञ्जीत रसायनविधिं विना ।
नागरं दीपनं वृष्यं ग्राहि हृद्यं विबन्धनुत् ॥ १६३ ॥

---

१ 'मेह' इति पाठः. २ 'पाकेऽहिमं' इति पाठः.

रुच्यं लघु स्वादुपाकं स्निग्धोष्णं कफवातजित् ।
तद्वदार्द्रकमेतच्च त्रयं त्रिकटुकं जयेत् ॥ १६४ ॥
स्थौल्याग्निसदनश्वासकासश्लीपदपीनसान् ।
चविका पिप्पलीमूलं मरिचाल्पान्तरं गुणैः ॥ १६५ ॥
चित्रकोऽग्निसमः पाके शोफार्शःकृमिकुष्ठहा ।
पञ्चकोलकमेतच्च मरिचेन विना स्मृतम् ॥ १६६ ॥
गुल्मप्लीहोदरानाहशूलघ्नं दीपनं परम् ।
बिल्वकाश्मर्यतर्कारीपाटलाटुण्टकैर्महत् ॥ १६७ ॥
जयेत्कषायतिक्तोष्णं पञ्चमूलं कफानिलौ ।
ह्रस्वं बृहत्यंशुमतीद्वयगोक्षुरकैः स्मृतम् ॥ १६८ ॥
स्वादुपाकरसं नातिशीतोष्णं सर्वदोषजित् ।
बलापुनर्नवैरण्डशूर्पपर्णीद्वयेन तु ॥ १६९ ॥
मध्यमं कफवातघ्नं नातिपित्तकरं सरम् ।
अभीरुवीराजीवन्तीजीवकर्षभकैः स्मृतम् ॥ १७० ॥
जीवनाख्यं तु चक्षुष्यं वृष्यं पित्तानिलापहम् ।
तृणाख्यं पित्तजिद्दर्भकासेक्षुशरशालिभि. ॥ १७१ ॥
शूकशिम्बीजपक्वान्नमांसशाकफलौषधैः ।
वर्गितैरन्नलेशोऽयमुक्तो नित्योपयोगिकः ॥ १७२ ॥

---

१ 'तत्तु' इति पाठः. २ 'लघु' इति पाठः. ३ 'टुण्टु'. इति पाठः. ४ 'तीक्ष्णोष्णं' इति पाठः. ५ 'रण्टैः' इति पाठः ६ 'सूर्प' इति पाठः. ७ 'लघु' इति पाठः.

## सप्तमोऽध्यायः।

अथातोऽन्नरक्षाध्यायं व्याख्यास्यामः।

इति ह स्माहुरात्रेयादयो महर्षयः॥

"राजा राजगृहासन्ने प्राणाचार्यं निवेशयेत्।

सर्वदा स भवत्येवं सर्वत्र प्रतिजागृविः॥ १ ॥

अन्नपानं विषाद्रक्षेद्विशेषेण महीपतेः।
योगक्षेमौ तदायत्तौ धर्मा[1]द्या यन्निबन्धनाः॥ २ ॥
ओदनो विषवान् सान्द्रो यात्यविस्राव्यतामिव।
चिरेण पच्यते पक्वो भवेत्पर्युषितोपमः॥ ३ ॥
मयूरकण्ठतुल्योष्मा मोहमूर्च्छाप्रसेककृत्।
हीयते वर्णगन्धाद्यैः क्लिद्यते[2] चन्द्रकान्वितः॥ ४ ॥
व्यञ्जनान्याशु शुष्यन्ति ध्यामक्वाथानि तत्र च।
हीनातिरिक्ता विकृता छाया दृश्येत नैव वा॥ ५ ॥
फेनोर्ध्वराजीसीमन्ततन्तुबुद्बुदसम्भवः।
विच्छिन्नविरसा रागा[3]ः खाण्डवाः शाकमामिषम्॥ ६ ॥
नीला राजी रसे, ताम्रा क्षीरे, दध्नि दृश्यते।
श्यावा, ऽऽपीताऽसिता तक्रे, घृते पानीयसन्निभा॥ ७ ॥
मस्तुनि स्यात्कपोताभा, राजी कृष्णा तुषोदके।
काली मद्याम्भसोः, क्षौद्रे हरित्तैलेऽरुणोपमा॥ ८ ॥
पाकः फलानामामानां पक्वानां परिकोथनम्।

---

१ 'द्यास्तन्नि' इति पाठः. २ 'चन्द्रकाञ्चितः' इति पाठः.
३ 'रागखाण्डवाः' इति पाठः.

द्रव्याणामार्द्रशुष्काणां स्यातां म्लानिविवर्णते ॥ ९ ॥
मृदूनां कठिनानां च भवेत्स्पर्शविपर्ययः ।
माल्यस्य[1] स्फुटिताग्रत्वं म्लानिर्गन्धान्तरोद्भवः ॥ १० ॥
ध्यामम[2]ण्डलता वस्त्रे, शातनं[3] तन्तुपक्ष्मणाम् ।
धातुमौक्तिककाष्ठाश्मरत्नादिषु मलाक्तता ॥ ११ ॥
स्नेहस्पर्शप्रभाहानिः, सप्रभत्वं तु मृण्मये ।
विषदः श्यावशुष्कास्यो विलक्षो वीक्षते दिशः ॥ १२ ॥
स्वेदवेपथुमांस्त्रस्तो भीतः स्खलति जृम्भते ।
प्राश्यान्नं सविषं त्वग्निरेकावर्तः स्फुटत्यति ॥ १३ ॥
शिखिकण्ठाभधूमार्चिरनर्चिर्वोग्रगन्धवान् ।
म्रियन्ते मक्षिकाः प्राश्य काकः क्षामस्वरो भवेत् ॥ १४ ॥
उत्क्रोशन्ति च दृष्ट्वा[4]न्नं शुकदात्यूहसारिकाः ।
हंसः प्रस्खलति, ग्लानिर्जीवञ्जीवस्य जायते ॥ १५ ॥
चकोरस्याऽक्षिवैराग्यं क्रौञ्चस्य स्यान्मदोदयः ।
कपोतपरभृद्दक्षचक्रवाका जहत्यसून् ॥ १६ ॥
उद्वेगं[5] याति मार्जारः, शकृन्मुञ्चति वानरः ।
हृष्येन्मयूरस्तद्दृ[6]ष्ट्वा मन्दतेजो भवेद्विषम् ॥ १७ ॥
इत्यन्नं विषवज्ज्ञात्वा त्यजेदेवं प्रयत्नतः ।
यथा तेन विपद्येरन्नपि न क्षुद्रजन्तवः ॥ १८ ॥

---

१ 'त्याना' इति पाठः. २ 'ग्लानि' इति पाठः. ३ 'शातनं' इति पाठः. ४ 'त्वपि' इति पाठः. ५ 'उद्वेज॰ यति' इति पाठः. ६ 'दृष्ट्वा' इति पाठः.

स्पृष्टे तु कण्डूदाहोषाज्वरार्तिस्फोटसुप्तयः ।
नखरोमच्युतिः शोफः, सेकाद्या विषनाशनाः ॥ १९ ॥
शस्तास्तत्र प्रलेपाश्च सेव्यचन्दनपद्मकैः ।
ससोमवल्कतालीसपत्रकुष्ठामृतानतैः ॥ २० ॥
लाला जिह्वौष्ठयोर्जाड्यमूषा चिमिचिमायनम् ।
दन्तहर्षो रसाज्ञत्वं हनुस्तम्भश्च वक्त्रगे ॥ २१ ॥
सेव्याद्यैस्तत्र गण्डूषाः सर्वं च विषजिद्धितम् ।
आमाशयगते स्वेदमूर्च्छाध्मानमदभ्रमाः ॥ २२ ॥
रोमहर्षो वमिर्दाहश्चक्षुर्हृदयरोधनम् ।
बिन्दुभिश्चाचयोऽङ्गानां, पक्वाशयगते पुनः ॥ २३ ॥
अनेकवर्णं वमति मूत्रयत्यतिसार्यते ।
तन्द्रा कृशत्वं पाण्डुत्वमुदरं बलसङ्क्षयः ॥ २४ ॥
तयोर्वान्तविरिक्तस्य हरिद्रे कटभीं गुडम् ।
सिन्दुवारितनिष्पावबाष्पिकाशतपर्विकाः ॥ २५ ॥
तण्डुलीयकमूलानि कुक्कुटाण्डमवल्गुजम् ।
नावनाञ्जनपानेषु योजयेद्विषशान्तये ॥ २६ ॥
विषभुक्ताय दद्याच्च शुद्धायोर्ध्वमधस्तथा ।
सूक्ष्मं ताम्ररजः काले सक्षौद्रं हृद्विशोधनम् ॥ २७ ॥
शुद्धे हृदि ततः शाणं हेमचूर्णस्य दापयेत् ।
न सज्जते हेमपाङ्गे पद्मपत्रेऽम्बुवद्विषम् ॥ २८ ॥
जायते विपुलं चायुर्गरेऽप्येष विधिः स्मृतः ।

१ 'ड्य मुख न्वि' इति पाठः.

विरुद्धमपि चाहारं विद्याद्विषगरोपमम् ॥ २९ ॥
आनूपमामिषं माषक्षौद्रक्षीरविरूढकैः ।
विरुध्यते सह बिसैर्मूलकेन गुडेन वा ॥ ३० ॥
विशेषात्पयसा मत्स्या मत्स्येष्वपि चिलीचिमः ।
विरुद्धमम्लं पयसा सह सर्वं फलं तथा ॥ ३१ ॥
तद्वत्कुलत्थवरककङ्गुवल्लमकुष्ठकाः ।
भक्षयित्वा हरितकं मूलकादि पयस्त्यजेत् ॥ ३२ ॥
वाराहं श्वाविधा नाद्याद्दध्ना पृषतकुक्कुटौ ।
आममांसानि पित्तेन, माषसूपेन मूलकम् ॥ ३३ ॥
आविं कुसुम्भशाकेन, बिसैः सह विरूढकम् ।
माषसूपगुडक्षीरदध्याज्यैर्लकुचं फलम् ॥ ३४ ॥
फलं कदल्यास्तक्रेण दध्ना तालफलेन वा ।
कणोषणाभ्यां मधुना काकमाचीं गुडेन वा ॥ ३५ ॥
सिद्धां वा मत्स्यपचने पचने नागरस्य वा ।
सिद्धामन्यत्र वा पात्रे कामात्तामुषितां निशाम् ॥ ३६ ॥
मत्स्यनिस्तलनस्नेहे साधिताः पिप्पलीस्त्यजेत् ।
कांस्ये दशाहमुषितं सर्पिरुष्णं खरस्करे ॥ ३७ ॥
भासो विरुध्यते शूल्यः कम्पिल्लस्तकसाधितः ।
ऐकध्यं पायससुराकृशराः परिवर्जयेत् ॥ ३८ ॥
मधुसर्पिर्वसातैलपानीयानि द्विशस्त्रिशः ।

१ 'चणक' इति पाठः. २ 'त्कन्दमू' इति पाठः. ३ 'च' इति पाठः. ४ 'भ्यारैः' इति पाठः.

एकत्र वा समांशानि विरुध्यन्ते परस्परम् ॥ ३९ ॥
भिन्नांशे अपि मध्वाज्ये दिव्यवार्यनुपानतः ।
मधुपुष्करबीजं च, मधुमैरेयशार्करम् ॥ ४० ॥
मन्थानुपानः क्षैरेयो, हारिद्रः कटुतैलवान् ।
उपोदकातिसाराय तिल्कल्केन साधिता ॥ ४१ ॥
बलाका वारुणीयुक्ता कुल्माषैश्च विरुध्यते ।
भृष्टा वराहवसया सैव सद्यो निहन्त्यसून् ॥ ४२ ॥
तद्वत्तित्तिरिपत्राढ्यगोधालावकपिञ्जलाः ।
ऐरण्डेनाग्निना सिद्धास्तत्तैलेन विमूर्च्छिताः ॥ ४३ ॥
हारीतमांसं हारिद्रशूलकप्रोतपाचितम् ।
हरिद्रावह्निना सद्यो व्यापादयति जीवितम् ॥ ४४ ॥
भस्मपांशुपरिध्वस्तं तदेव च समाक्षिकम् ।
यत्किंचिद्दोषमुत्क्लेश्य न हरेत्तत्समासतः ॥ ४५ ॥
विरुद्धम्

शुद्धिरत्रेष्टा शमो वा तद्विरोधिभिः ।
द्रव्यैस्तैरेव वा पूर्वं शरीरस्याभिसंस्कृतिः ॥ ४६ ॥
व्यायामस्निग्धदीप्ताग्निवयःस्थबलशालिनाम् ।
विरोध्यपि न पीडायै सात्म्यमल्पं च भोजनम् ॥ ४७ ॥
पादेनापथ्यमभ्यस्तं पादपादेन वा त्यजेत् ।
निषेवेत हितं तद्वदेकद्वित्र्यन्तरीकृतम् ॥ ४८ ॥
अपथ्यमपि हि त्यक्तं शीलितं पथ्यमेव वा ।

सात्म्यासात्म्यविकाराय जायते सहसाऽन्यथा ॥ ४९ ॥
क्रमेणापचिता दोषाः क्रमेणोपचिता गुणाः ।
सन्तो यान्त्यपुनर्भावमप्रकम्प्या भवन्ति च ॥ ५० ॥
अत्यन्तसन्निधानानां दोषाणां दूषणात्मनाम् ।
अहितैर्दूषणं भूयो न विद्वान् कर्तुमर्हति ॥ ५१ ॥
आहारशयनाब्रह्मचर्यैर्युक्त्या प्रयोजितैः ।
शरीरं धार्यते नित्यमागारमिव धारणैः ॥ ५२ ॥
आहारो वर्णितस्तत्र तत्र तत्र च वक्ष्यते ।
निद्रायत्तं सुखं दुःखं पुष्टिः कार्श्यं बलाबलम् ॥ ५३ ॥
वृषता क्लीबता ज्ञानमज्ञानं जीवितं न च ।
अकालेऽतिप्रसङ्गाच्च न च निद्रा निषेविता ॥ ५४ ॥
सुखायुषी पराकुर्यात्कालरात्रिरिवाऽपरा ।
रात्रौ जागरणं रूक्षं, स्निग्धं प्रस्वपनं दिवा ॥ ५५ ॥
अरूक्षमनभिष्यन्दि त्वासीनप्रचलायितम् ।
ग्रीष्मे वायुचयादानरौक्ष्यराज्यल्पभावतः ॥ ५६ ॥
दिवास्वप्नो हितोऽन्यस्मिन्कफपित्तकरो हि सः ।
मुक्त्वा तु भाष्ययानाध्वमद्यस्त्रीभारकर्मभिः ॥ ५७ ॥
क्रोधशोकभयैः क्लान्तान् श्वासहिध्मातिसारिणः ।

---

१ 'सात्म्य वि' इति पाठः. २ 'नाप्नुवन्ति पुन' इति पाठः. ३ 'निषेवितैः' इति पाठः. ४ 'लक्ष्यते' इति पाठः. ५ 'परा कुर्या' इति हेमाद्रिमतेन अत्र परिच्छेदः. ६ 'स्त्रवाऽति-भाष्य' इति पाठः.

वृद्धबालाबलक्षीणक्षततृड्शूलपीडितान् ॥ ५८ ॥
अजीर्ण्यभिहतोन्मत्तान् दिवास्वप्नोचितानपि ।
धातुसाम्यं तथा ह्येषां श्लेष्मा चाङ्गानि पुष्यति ॥ ५९ ॥
बहुमेदःकफाः स्वप्युः स्नेहनित्याश्च नाहनि ।
विषार्तः कण्ठरोगी च नैव जातु निशास्वपि ॥ ६० ॥
अकालशयनान्मोहज्वरस्तैमित्यपीनसाः ।
शिरोरुक्शोफहृल्लासस्रोतोरोधाग्निमन्दता ॥ ६१ ॥
तत्रोपवासवमनस्वेदनावनमौषधम् ।
योजयेदतिनिद्रायां तीक्ष्णं प्रच्छर्दनाञ्जनम् ॥ ६२ ॥
नावनं लङ्घनं चिन्तां व्यवायं शोकभीक्रुधः ।
एभिरेव च निद्राया नाशः श्लेष्मातिसङ्क्षयात् ॥ ६३ ॥
निद्रानाशादङ्गमर्दशिरोगौरवजृम्भिकाः ।
जाड्यग्लानिभ्रमापक्तितन्द्रारोगाश्च वातजाः ॥ ६४ ॥
'कफोऽल्पो वायुनोद्धूतो धमनीः सन्निरुध्य तु ।
कुर्यात्संज्ञापहां तन्द्रां दारुणां मोहकारिणीम् ॥
उन्मीलितविनिर्भुग्ने परिवर्तिततारके ।
भवतस्तत्र नयने स्रुते लुलितपक्ष्मणी ॥
अर्धत्रिरात्रात्सा साध्या न सा साध्या ततः परम् ॥'
यथाकालमतो निद्रां रात्रौ सेवेत सात्म्यतः ।
असात्म्याज्जागरादर्धं प्रातः स्वप्यादभुक्तवान् ॥ ६५ ॥

---

१ 'क्षुत्तृट्' इति पाठः. २ 'अजीर्णाभि' इति पाठः.

शीलयेन्मन्दनिद्रस्तु क्षीरमद्यरसान् दधि ।
अभ्यङ्गोद्वर्तनस्नानमूर्धकर्णाक्षितर्पणम् ॥ ६६ ॥
कान्ताबाहुलताश्लेषो निर्वृतिः कृतकृत्यता ।
मनोऽनुकूला विषयाः कामं निद्रासुखप्रदाः ॥ ६७ ॥
ब्रह्मचर्यरतेर्ग्राम्यसुखनिःस्पृहचेतसः ।
निद्रा सन्तोषतृप्तस्य स्वं कालं नातिवर्तते ॥ ६८ ॥
ग्राम्यधर्मे त्यजेन्नारीमनुत्तानां रजस्वलाम् ।
अप्रियामप्रियाचारां दुष्टसङ्कीर्णमेहनाम् ॥ ६९ ॥
अतिस्थूलकृशां सूतां गर्भिणीमन्ययोषितम् ।
वर्णिनीमन्ययोनिं च गुरुदेवनृपालयम् ॥ ७० ॥
चैत्यश्मशानाऽऽयतनचत्वराम्बुचतुष्पथम् ।
पर्वाण्यनङ्गं दिवसं शिरोहृदयताडनम् ॥ ७१ ॥
अत्याशितोऽधृतिः क्षुद्वान् दुःस्थिताङ्गः पिपासितः ।
बालो वृद्धोऽन्यवेगार्तस्त्यजेद्रोगी च मैथुनम् ॥ ७२ ॥
सेवेत कामतः कामं तृप्तो वाजीकृतां हिमे ।
त्र्यहाद्वसन्तशरदोः पक्षाद्वर्षानिदाघयोः ॥ ७३ ॥
भ्रमक्लमोरुदौर्बल्यबलधात्विन्द्रियक्षयाः ।
अपर्वमरणं च स्यादन्यथा गच्छतः स्त्रियम् ॥ ७४ ॥
स्मृतिमेधायुरारोग्यपुष्टीन्द्रिययशोबलैः ।
अधिका मन्दजरसो भवन्ति स्त्रीषु संयताः ॥ ७५ ॥

---

१ 'क्लीबैर्हिमे', 'करैर्हिमे' इति पाठौ. २ 'त्र्यहा' इति पाठः. ३ 'स्याद्विशेषेणातिमैथुनात्' इति पाठः.

स्नानानुलेपनहिमानिलखण्डखाद्य-
शीताम्बुदुग्धरसयूषसुराप्रसन्नाः ।
सेवेत चानु शयनं विरतो रतस्य
तस्यैवमाशु वपुषः पुनरेति धाम ॥ ७६ ॥
श्रुतचरितसमृद्धे कर्मदक्षे दयालौ
भिषजि निरनुबन्धं देहरक्षां निवेश्य ।
भवति विपुलतेजःस्वास्थ्यकीर्तिप्रभावः
स्वकुशलफलभोगी भूमिपालश्चिरायुः ॥ ७७ ॥"

---

## अष्टमोऽध्यायः ।

अथातो मात्राशिनीयमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"मात्राशी सर्वकालं स्यान्मात्रा ह्यग्नेः प्रवर्तिका ।
मात्रां द्रव्याण्यपेक्षन्ते गुरूण्यपि लघून्यपि ॥ १ ॥
गुरूणामर्धसौहित्यं लघूनां नातितृप्तता ।
मात्राप्रमाणं निर्दिष्टं सुखं यावद्विजीर्यति ॥ २ ॥
भोजनं हीनमात्रं तु न बलोपचयौजसे ।
सर्वेषां वातरोगाणां हेतुतां च प्रपद्यते ॥ ३ ॥
अतिमात्रं पुनः सर्वानाशु दोषान् प्रकोपयेत् ।
पीड्यमाना हि वाताद्या युगपत्तेन कोपिताः ॥ ४ ॥
आमेनान्नेन दुष्टेन तदेवाविश्य कुर्वते ।
विष्टम्भयन्तोऽलसकं च्यावयन्तो विसूचिकाम् ॥ ५ ॥

अधरोत्तरमार्गाभ्यां सहसैवाजितात्मनः ।
प्रयाति नोर्ध्वं नाधस्तादाहारो न च पच्यते ॥ ६ ॥
आमाशयेऽलसीभूतस्तेन सोऽलसकः स्मृतः ।
विविधैर्वेदनोद्भेदैर्वाय्वादिभृशकोपतः ॥ ७ ॥
सूचीभिरिव गात्राणि विध्यतीति विसूचिका ।
तत्र शूलभ्रमाऽऽनाहकम्पस्तम्भादयोऽनिलात् ॥ ८ ॥
पित्ताज्ज्वरातिसारान्तर्दाहतृट्प्रलयादयः ।
कफाच्छर्द्यङ्गगुरुतावाक्सङ्गष्ठीवनादयः ॥ ९ ॥
विशेषाद्दुर्बलस्याल्पवह्नेर्वेगविधारिणः ।
पीडितं मारुतेनान्नं श्लेष्मणा रुद्धमन्तरा ॥ १० ॥
अलसं क्षोभितं दोषैः शल्यत्वेनैव संस्थितम् ।
शूलादीन्कुरुते तीव्रांश्छर्द्यतीसारवर्जितान् ॥ ११ ॥
सोऽलसः

अत्यर्थदुष्टास्तु दोषा दुष्टामबद्धखाः ।
यान्तस्तिर्यक्तनुं सर्वां दण्डवत्स्तम्भयन्ति चेत् ॥ १२ ॥
दण्डकालसकं नाम तं त्यजेदाशुकारिणम् ।
विरुद्धाध्यशनाजीर्णशीलिनो विषलक्षणम् ॥ १३ ॥
आमदोषं महाघोरं वर्जयेद्विषसंज्ञकम् ।
विषरूपाशुकारित्वाद्विरुद्धोपक्रमत्वतः ॥ १४ ॥
अथाऽऽममलसीभूतं साध्यं त्वरितमुल्लिखेत् ।
पीत्वा सोग्रापटुफलं वार्युष्णं योजयेत्ततः ॥ १५ ॥

स्वेदनं फलवर्तिं च मलवातानुलोमनीम् ।
'मदनं पिप्पली कुष्ठं वचा गौराश्च सर्षपाः ।
गुडक्षारसमायुक्ता फलवर्तिः प्रशस्यते ॥'
नाम्यमानानि चाङ्गानि भृशं स्विन्नानि वेष्टयेत् ॥ १६ ॥
विसूच्यामतिवृद्धायां पार्ष्ण्योर्दाहः प्रशस्यते ।
तदहश्चोपवास्यैनं विरिक्तवदुपाचरेत् ॥ १७ ॥
तीव्रार्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम् ।
आमसन्नोऽनलो नालं पक्तुं दोषौषधाशनम् ॥ १८ ॥
निहन्यादपि चैतेषां विभ्रमः सहसाऽऽतुरम् ।
जीर्णाशने तु भैषजं युञ्ज्यात् स्तब्धगुरूदरे ॥ १९ ॥
दोषशेषस्य पाकार्थमग्नेः सन्धुक्षणाय च ।
शान्तिरामविकाराणां भवति त्वपतर्पणात् ॥ २० ॥
त्रिविधं त्रिविधे दोषे तत्समीक्ष्य प्रयोजयेत् ।
तत्राऽल्पे लङ्घनं पथ्यं, मध्ये लङ्घनपाचनम् ॥ २१ ॥
प्रभूते शोधनं, तद्धि मूलादुन्मूलयेन्मलान् ।
एवमन्यानपि व्याधीन् स्वनिदानविपर्ययात् ॥ २२ ॥
चिकित्सेदनुबन्धे तु सति हेतुविपर्ययम् ।
त्यक्त्वा यथायथं वैद्यो युञ्ज्याद्व्याधिविपर्ययम् ॥ २३ ॥
तदर्थकारि वा, पक्के दोषे त्विद्धे च पावके ।
हितमभ्यञ्जनस्नेहपानबस्त्यादि युक्तितः ॥ २४ ॥
अजीर्णं च कफादामं तत्र शोफोऽक्षिगण्डयोः ।

---

१ 'दोषानु' पाठः. २ 'व्यापत्तिः' पाठः. ३ 'वृद्धे' पाठः.

सद्योभुक्त इवोद्गारः प्रसेकोत्क्लेशगौरवम् ॥ २५ ॥
विष्टब्धमनिलाच्छूलविबन्धाध्मानसादकृत् ।
पित्ताद्विदग्धं तृण्मोहभ्रमाम्लोद्गारदाहकृत् ॥ २६ ॥
लङ्घनं कार्यमामे तु, विष्टब्धे स्वेदनं भृशम् ।
विदग्धे वमनं, यद्वा यथावस्थं हितं भजेत् ॥ २७ ॥
गरीयसो भवेल्लीनादामादेव विलम्बिका ।
कफवातानुबद्धाऽऽमलिङ्गा तत्समसाधना ॥ २८ ॥
अश्रद्धा हृद्व्यथा शुद्धेऽप्युद्गारे रसशेषतः ।
शयीत किंचिदेवात्र सर्वश्चानाशितो[1] दिवा ॥ २९ ॥
स्वप्यादजीर्णी, सञ्जातबुभुक्षोऽद्यान्मितं लघु ।
विबन्धोऽतिप्रवृत्तिर्वा ग्लानिर्मारुतमूढता[2] ॥ ३० ॥
अजीर्णलिङ्गं सामान्यं विष्टम्भो गौरवं भ्रमः ।
न चातिमात्रमेवान्नमामदोषाय केवलम् ॥ ३१ ॥
द्विष्टविष्टम्भिदग्धामगुरुरूक्षहिमाशुचि ।
विदाहि शुष्कमत्यम्बुप्लुतं चान्नं न जीर्यति ॥ ३२ ॥
उपतप्तेन भुक्तं च शोकक्रोधक्षुदादिभिः ।
मिश्रं पथ्यमपथ्यं च भुक्तं समशनं मतम् ॥ ३३ ॥
विद्यादध्यशनं भूयो भुक्तस्योपरि भोजनम् ।
अकाले बहु चाल्पं वा भुक्तं तु विषमाशनम् ॥ ३४ ॥
त्रीण्यप्येतानि मृत्युं वा घोरान् व्याधीन् सृजन्ति वा ।
काले सात्म्यं शुचि हितं स्निग्धोष्णं लघु तन्मनाः ॥३५॥

---

१ 'नशितो' इति पाठः. २ 'शूलता' इति पाठः.

षड्रसं मधुरप्रायं नातिद्रुतविलम्बितम् ।
स्नातः क्षुद्वान् विविक्तस्थो धौतपादकराननः ॥ ३६ ॥
तर्पयित्वा पितॄन् देवानतिथीन् बालकान्गुरून् ।
प्रत्यवेक्ष्य तिरश्चोऽपि प्रतिपन्नपरिग्रहान् ॥ ३७ ॥
समीक्ष्य सम्यगात्मानमनिन्दन्नब्रुवन् द्रवम् ।
इष्टमिष्टैः सहाश्नीयाच्छुचि भक्तजनाहृतम् ॥ ३८ ॥
भोजनं तृणकेशादिजुष्टमुष्णीकृतं पुनः ।
शाकावरान्नभूयिष्ठमत्युष्णलवणं त्यजेत् ॥ ३९ ॥
किलाटदधिकूर्चीकाक्षारशुक्ताममूलकम् ।
कृशशुष्कवराहाविगोमत्स्यमहिषामिषम् ॥ ४० ॥
माषनिष्पावशालूकबिसपिष्टविरूढकम् ।
शुष्कशाकानि यवकान् फाणितं च न शीलयेत् ॥ ४१ ॥
शीलयेच्छालिगोधूमयवषष्टिकजाङ्गलम् ।
सुनिषण्णकजीवन्तीबालमूलकवास्तुकम् ॥ ४२ ॥
पथ्यामलकमृद्वीकापटोलीमुद्गशर्कराः ।
घृतदिव्योदकक्षीरक्षौद्रदाडिमसैन्धवम् ॥ ४३ ॥
त्रिफलां मधुसर्पिर्भ्यां निशि नेत्रबलाय च ।
स्वास्थ्यानुवृत्तिकृद्यच्च रोगोच्छेदकरं च यत् ॥ ४४ ॥
बिसेक्षुमोचचोचाम्रमोदकोत्कारिकादिकम् ।
अद्याद्द्रव्यं गुरु स्निग्धं स्वादु मन्दं स्थिरं पुरः ॥ ४५ ॥
विपरीतमतश्चान्ते मध्येऽम्ललवणोत्कटम् ।
अन्नेन कुक्षेर्द्वावंशौ पानेनैकं प्रपूरयेत् ॥ ४६ ॥
आश्रयं पवनादीनां चतुर्थमवशेषयेत् ।

अनुपानं हिमं वारि यवगोधूमयोर्हितम् ॥ ४७ ॥
दध्नि मद्ये विषे क्षौद्रे, कोष्णं पिष्टमयेषु तु ।
शाकमुद्गादिविकृतौ मस्तुतक्राम्लकाञ्जिकम् ॥ ४८ ॥
सुरा कृशानां पुष्ट्यर्थं, स्थूलानां तु मधूदकम् ।
शोषे मांसरसो, मद्यं मांसे स्वल्पे च पावके ॥ ४९ ॥
व्याध्यौषधाध्वभाष्यस्त्रीलङ्घनातपकर्मभिः ।
क्षीणे वृद्धे च बाले च पयः पथ्यं यथाऽमृतम् ॥ ५० ॥
विपरीतं यदन्नस्य गुणैः स्यादविरोधि च ।
अनुपानं समासेन, सर्वदा तत्प्रशस्यते ॥ ५१ ॥
अनुपानं करोत्यूर्जां तृप्तिं व्याप्तिं दृढाङ्गताम् ।
अन्नसङ्घातशैथिल्यविक्लित्तिजरणानि च ॥ ५२ ॥
नोर्ध्वजत्रुगदश्वासकासोरःक्षतपीनसे ।
गीतभाष्यप्रसङ्गे च स्वरभेदे च तद्धितम् ॥ ५३ ॥
प्रक्लिन्नदेहमेहाक्षिगलरोगव्रणातुराः ।
पानं त्यजेयुः

सर्वश्च भाष्याध्वशयनं त्यजेत् ॥ ५४ ॥
पीत्वा, भुक्त्वाऽऽतपं वह्निं यानं प्लवनवाहनम् ।

प्रसृष्टे विण्मूत्रे हृदि सुविमले दोषे स्वपथगे
विशुद्धे चोद्गारे क्षुदुपगमने वातेऽनुसरति ।
तथाऽग्नावुद्रिक्ते विशदकरणे देहे च सुलघौ
प्रयुञ्जीताहारं विधिनियमितं कालः स हि मतः"

---

१ 'भारती' इति पाठः.

## नवमोऽध्यायः।

अथातो द्रव्यादिविज्ञानीयमध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

"द्रव्यमेव रसादीनां श्रेष्ठं ते हि तदाश्रयाः।
पञ्चभूतात्मकं तत्तु
क्ष्मामधिष्ठाय जायते॥ १॥
अम्बुयोन्यग्निपवननभसां समवायतः।
तन्निर्वृत्तिविशेषश्च
व्यपदेशस्तु भूयसा॥ २॥
तस्मान्नैकरसं द्रव्यं भूतसङ्घातसम्भवात्।
नैकदोषास्ततो रोगास्तत्र व्यक्तो रसः स्मृतः॥ ३॥
अव्यक्तोऽनुरसः किंचिदन्ते व्यक्तोऽपि चेष्यते।
गुर्वादयो गुणा द्रव्ये पृथिव्यादौ रसाश्रये॥ ४॥
रसेषु व्यपदिश्यन्ते साहचर्योपचारतः।
तत्र द्रव्यं गुरु स्थूलस्थिरगन्धगुणोल्बणम्॥ ५॥
पार्थिवं गौरवस्थैर्यसङ्घातोपचयावहम्।
द्रवशीतगुरुस्निग्धमन्दसान्द्ररसोल्बणम्॥ ६॥
आप्यं स्नेहनविष्यन्दक्लेदप्रह्लादबन्धकृत्।
रूक्षतीक्ष्णोष्णविशदसूक्ष्मरूपगुणोल्बणम्॥ ७॥
आग्नेयं दाहभावर्णप्रकाशपचनात्मकम्।
वायव्यं रूक्षविशदलघुस्पर्शगुणोल्बणम्॥ ८॥

१ 'तन्नैकभूतज द्र' इति पाठः. २ 'गुणोल्ब' इति पाठः.

रौक्ष्यलाघववैशद्यविचारग्लानिकारकम् ।
नाभसं सूक्ष्मविशदलघुशब्दगुणोल्बणम् ॥ ९ ॥
सौषिर्यंलाघवकरं

जगत्येवमनौषधम् ।
न किंचिद्विद्यते द्रव्यं वशान्नानार्थयोगयोः ॥ १० ॥
द्रव्यमूर्ध्वगमं तत्र प्रायोऽग्निपवनोत्कटम् ।
अधोगामि च भूयिष्ठं भूमितोयगुणाधिकम् ॥ ११ ॥
इति द्रव्यं

रसान् भेदैरुत्तरत्रोपदेक्ष्यते ।
वीर्यं पुनर्वदन्त्येके गुरु स्निग्धं हिमं मृदु ॥ १२ ॥
लघुरूक्षोष्णतीक्ष्णं च तदेवं मतमष्टधा ।
चरकस्त्वाह वीर्यं तत्क्रियते येन या क्रिया ॥ १३ ॥
नावीर्यं कुरुते किंचित्सर्वा वीर्यकृता हि सा ।
गुर्वादिष्वेव वीर्याख्या तेनान्वर्थेति वर्ण्यते ॥ १४ ॥
समग्रगुणसारेषु शक्त्युत्कर्षविवर्तिषु ।
व्यवहाराय मुख्यत्वाद्बह्वग्रग्रहणादपि ॥ १५ ॥
अतश्च विपरीतत्वात्सम्भवत्यपि नैव सा ।
विवक्ष्यते रसाद्येषु, वीर्यं गुर्वादयो ह्यतः ॥ १६ ॥
उष्णं शीतं द्विधैवाऽन्ये वीर्यमाचक्षते

अपि च ।

१ 'ग्लपनात्मकम्' इति पाठः. २ 'सारत्वाच्छक्त्युत्कर्षनिवर्तेतु' इति पाठः.

नानात्मकमपि द्रव्यमग्नीषोमौ महाबलौ ॥ १७ ॥
व्यक्ताव्यक्तं जगदिव नातिक्रामति जातुचित् ।
तत्रोष्णं भ्रमतृड्ग्लानिस्वेददाहाशुपाकिताः ॥ १८ ॥
शमं च वातकफयोः करोति, शिशिरं पुनः ।
ह्लादनं जीवनं स्तम्भं प्रसादं रक्तपित्तयोः ॥ १९ ॥
जाठरेणाग्निना योगाद्यदुदेति रसान्तरम् ।
रसानां परिणामान्ते स विपाक इति स्मृतः ॥ २० ॥
स्वादुः पटुश्च मधुरमम्लोऽम्लं पच्यते रसः ।
तिक्तोषणकषायाणां विपाकः प्रायशः कटुः ॥ २१ ॥
रसैरसौ तुल्यफलस्तत्र द्रव्यं शुभाशुभम् ।
किंचिद्रसेन कुरुते कर्म पाकेन चापरम्[१] ॥ २२ ॥
गुणान्तरेण वीर्येण प्रभावेणैव किंचन ।
यद्यद्द्रव्ये रसादीनां बलवत्त्वेन वर्तते ॥ २३ ॥
अभिभूयेतरांस्तत्कारणत्वं प्रपद्यते ।
विरुद्धगुणसंयोगे भूयसाऽल्पं हि जीयते ॥ २४ ॥
रसं विपाकस्तौ वीर्यं प्रभावस्तान्यपोहति ।
बलसाम्ये रसादीनामिति नैसर्गिकं बलम् ॥ २५ ॥
रसादिसाम्ये यत्कर्म विशिष्टं तत् प्रभावजम् ।
दन्ती रसाद्यैस्तुल्याऽपि चित्रकस्य विरेचनी ॥ २६ ॥
मधुकस्य च मृद्वीका, घृतं क्षीरस्य दीपनम् ।
इति सामान्यतः कर्म द्रव्यादीनां, पुनश्च तत् ॥ २७ ॥

१ 'वापरम्' इति पाठः.

विचित्रप्रत्ययारब्धद्रव्यभेदेन भिद्यते ।
स्वादुर्गुरुश्च गोधूमो वातजित्, वातकृद्यवः ॥ २८ ॥
उष्णा मत्स्याः पयः शीतं कटुः सिंहो न शूकरः ।"

## दशमोऽध्यायः ।

अथातो रसभेदीयमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥
"क्ष्माम्भोऽग्निक्ष्माम्बुतेजःखवाय्वग्न्यनिलगोऽनिलैः ।
द्वयोल्बणैः क्रमाद्भूतैर्मधुरादिरसोद्भवः ॥ १ ॥
तेषां विद्याद्रसं स्वादुं यो वक्त्रमनुलिम्पति ।
आस्वाद्यमानो देहस्य ह्लादनोऽक्षप्रसादनः ॥ २ ॥
प्रियः पिपीलिकादीनाम्

अम्लः क्षालयते मुखम् ।
हर्षणो रोमदन्तानामक्षिभ्रुवनिकोचनः ॥ ३ ॥
लवणः स्यन्दयत्यास्यं कपोलगलदाहकृत् ।
तिक्तो विशदयत्यास्यं रसनं प्रतिहन्ति च ॥ ४ ॥
उद्वेजयति जिह्वाग्रं कुर्वंश्चिमिचिमां कटुः ।
स्रावयत्यक्षिनासास्यं कपोलौ दहतीव च ॥ ५ ॥
कषायो जडयेज्जिह्वां कण्ठस्रोतोविबन्धकृत् ।
रसानामिति रूपाणि

कर्माणि

मधुरो रसः ॥ ६ ॥

---

१ 'भुपल' इति पाठः. २ 'स्रावयते' इति पाठः.

आजन्मसात्म्यात्कुरुते धातूनां प्रबलं बलम् ।
बालवृद्धक्षतक्षीणवर्णकेशेन्द्रियौजसाम् ॥ ७ ॥
प्रशस्तो बृंहणः कण्ठ्यः स्तन्यसन्धानकृद्गुरुः ।
आयुष्यो जीवनः स्निग्धः पित्तानिलविषापहः ॥ ८ ॥
कुरुतेऽत्युपयोगेन स मेदःश्लेष्मजान् गदान् ।
स्थौल्याग्निसादसन्न्यासमेहगण्डार्बुदादिकान् ॥ ९ ॥
अम्लोऽग्निर्दीप्तिकृत्स्निग्धो हृद्यः पाचनरोचनः ।
उष्णवीर्यो हिमस्पर्शः प्रीणनः क्लेदनो लघुः ॥ १० ॥
करोति कफपित्तास्रं मूढवातानुलोमनः ।
सोऽत्यभ्यस्तस्तनोः कुर्याच्छैथिल्यं तिमिरं भ्रमम् ॥ ११ ॥
कण्डुपाण्डुत्ववीसर्पशोफविस्फोटतृड्ज्वरान् ।
लवणः स्तम्भसङ्घातबन्धविध्मापनोऽग्निकृत् ॥ १२ ॥
स्नेहनः स्वेदनस्तीक्ष्णो रोचनश्छेदभेदकृत् ।
सोऽतियुक्तोऽस्रपवनं खलतिं पलितं वलिम् ॥ १३ ॥
तृट्कुष्ठविषवीसर्पान् जनयेत्क्षपयेद्बलम् ।
तिक्तः स्वयमरोचिष्णुररुचिं कृमितृड्विषम् ॥ १४ ॥
कुष्ठमूर्च्छाज्वरोत्क्लेशदाहपित्तकफान् जयेत् ।
क्लेदमेदोवसामज्जशकृन्मूत्रोपशोषणः ॥ १५ ॥
लघुर्मेध्यो हिमो रूक्षः स्तन्यकण्ठविशोधनः ।
धातुक्षयाऽनिलव्याधीनतियोगात्करोति सः ॥ १६ ॥
कटुर्गलामयोदर्दकुष्ठालसकशोफजित् ।

---

१ 'भेदनो' इति क्वचित्. २ 'चलव्याधी' इति पाठः.

व्रणावसादनः स्नेहमेदःक्लेदोपशोषणः ॥ १७ ॥
दीपनः पाचनो रुच्यः शोधनोऽन्नस्य शोषणः ।
छिनत्ति बन्धान् स्रोतांसि विवृणोति कफापहः ॥ १८ ॥
कुरुते सोऽतियोगेन तृष्णां शुक्रबलक्षयम् ।
मूर्च्छामाकुञ्चनं कम्पं कटिपृष्ठादिषु व्यथाम् ॥ १९ ॥
कषायः पित्तकफहा गुरुरस्त्रविशोधनः ।
पीडनो रोपणः शीतः क्लेदमेदोविशोषणः ॥ २० ॥
आमसंस्तम्भनो ग्राही रूक्षोऽति त्वक्प्रसादनः ।
करोति शीलितः सोऽति विष्टम्भाध्मानहृद्रुजः ॥ २१ ॥
तृट्कार्श्यपौरुषभ्रंशस्रोतोरोधमलग्रहान् ।
घृतहेमगुडाक्षोडमोचचोचपरूषकम् ॥ २२ ॥
अभीरुवीरापनसराजादनबलात्रयम् ।
मेदे चतस्रः पर्णिन्यो जीवन्ती जीवकर्षभौ ॥ २३ ॥
मधूकं मधुकं बिम्बी विदारी श्रावणीयुगम् ।
क्षीरशुक्ला तुगाक्षीरी क्षीरिण्यौ काश्मरी सहे ॥ २४ ॥
क्षीरेक्षुगोक्षुरक्षौद्रद्राक्षादिर्मधुरो गणः ।
अम्लो धात्रीफलाम्लीकामातुलुङ्गाम्लवेतसम् ॥ २५ ॥
दाडिमं रजतं तक्रं चुक्रं पालेवतं दधि ।
आम्रमाम्रातकं भव्यं कपित्थं करमर्दकम् ॥ २६ ॥
"वृक्षाम्लकोललकुचकोशाम्लातकधन्वनम् ।
मस्तुधान्याम्लमद्यानि जम्बीरं तिलकण्टकम् ॥"

१ 'तियोगेन' पा. २ 'धगलग्र' दा. ३ 'तवक्षीरी' पा.

वरं सौवर्चलं कृष्णं बिडं सामुद्रमौद्भिदम् ।
रोमकं पांसुजं शीसं क्षारश्च[1] लवणो गणः ॥ २७ ॥
तिक्तः पटोली त्रायन्ती वालकोशीरचन्दनम् ।
भूनिम्बनिम्बकटुकातगरागुरुवत्सकम् ॥ २८ ॥
नक्तमालद्विरजनीमुस्तमूर्वाटरूषकम् ।
पाठापामार्गकांस्यायोगुडूचीधन्वयासकम् ॥ २९ ॥
पञ्चमूलं महद्व्याघ्र्यौ विशालाऽतिविषा वचा ।
कटुको हिङ्गुमरिचकृमिजित्पञ्चकोलकम् ॥ ३० ॥
कुठेराद्या हरितकाः पित्तं मूत्रमरुष्करम् ।
वर्गः कषायः पथ्याऽक्षं शिरीषः खदिरो मधु ॥ ३१ ॥
कदम्बोदुम्बरं मुक्ताप्रवालाञ्जनगैरिकम् ।
बालं कपित्थं खर्जूरं बिसपद्मोत्पलादि[2] च ॥ ३२ ॥
मधुरं श्लेष्मलं प्रायो जीर्णाच्छालियवादृते ।
मुद्गाद्गोधूमतः क्षौद्रात्सिताया जाङ्गलामिषात् ॥ ३३ ॥
प्रायोऽम्लं पित्तजननं दाडिमामलकादृते ।
अपथ्यं लवणं प्रायश्चक्षुषोऽन्यत्र सैन्धवात् ॥ ३४ ॥
तिक्तं कटु च भूयिष्ठमवृष्यं वातकोपनम् ।
ऋतेऽमृतापटोलीभ्यां शुण्ठीकृष्णारसोनतः ॥ ३५ ॥
कषायं प्रायशः शीतं स्तम्भनं चाऽभयां विना ।
रसाः कट्वम्ललवणा वीर्येणोष्णा यथोत्तरम् ॥ ३६ ॥
तिक्तः कषायो मधुरस्तद्वदेव च शीतलाः ।

---

१ 'क्षाराश्च' इति पाठः. २ 'लानि च' इति पाठः.

तिक्तः कटुः कषायश्च रूक्षा बद्धमलास्तथा ॥ ३७ ॥
पट्वम्लमधुराः स्निग्धाः सृष्टविण्मूत्रमारुताः ।
पटोः कषायस्तस्माच्च मधुरः परमं गुरुः ॥ ३८ ॥
लघुरम्लः कटुस्तस्मात्तस्मादपि च तिक्तकः ।
"लवणादम्लमधुरौ कार्यौ स्यातां यथाक्रमम् ।
वायोर्निरनुबन्धस्य पाकशान्तिप्रवृत्तये ॥
प्राक्तिक्तो मधुरः पश्चात् कषायोऽन्ते विधीयते ।
तैः पित्तं शममभ्येति पक्वाच्छीकृतपिण्डितम् ॥
कटुः प्राक् तिक्तकः पश्चात् कषायोऽन्ते विधीयते ।
तैः श्लेष्मा शममभ्येति पक्वाच्छीकृतपिण्डितः" ॥
संयोगाः सप्तपञ्चाशत्कल्पना तु त्रिषष्टिधा ॥ ३९ ॥
रसानां यौगिकत्वेन यथास्थूलं विभज्यते ।
एकैकहीनास्तान्पञ्चदश यान्ति रसा द्विके ॥ ४० ॥
"स्वादुर्द्विकेषु पञ्चाम्लश्चतुरो लवणस्त्रयम् ।
द्वौ तिक्तः, कटुकश्चैकं याति पञ्चदशेति तु ॥"
त्रिके स्वादुर्दशाम्लः षट् त्रीन् पटुस्तिक्त एककम् ।
चतुष्केषु दश स्वादुश्चतुरोऽम्लः पटुः सकृत् ॥ ४१ ॥
पञ्चकेष्वेकमेवाम्लो मधुरः पञ्च सेवते ।
द्रव्यमेकं षडास्वादमसंयुक्ताश्च षड्रसाः ॥ ४२ ॥
षट्पञ्चकाः, षट् च पृथग्रसाः स्यु-
श्चतुर्द्विकौ पञ्चदशप्रकारौ ।

---

१ 'पञ्चपञ्च' इति हेमाद्रिसंमतः पाठः.

भेदात्मिका विंशतिरेकमेव
द्रव्यं षडास्वादमिति त्रिषष्टिः ॥ ४३ ॥
ते रसानुरसतो रसभेदास्तारतम्यपरिकल्पनया च ।
सम्भवन्ति गणनां समतीता दोषभेषजवशादुपयोज्याः॥"

---

## एकादशोऽध्यायः ।

अथातो दोषादिविज्ञानीयमध्यायं व्याख्यास्यामः ॥
इति ह स्माहुरात्रेयादयो महर्षयः ॥
"दोषधातुमला मूलं सदा देहस्य
तं चलः ।
उत्साहोच्छ्वासनिश्वासचेष्टावेगप्रवर्तनैः ॥ १ ॥
सम्यग्गत्या च धातूनामक्षाणां पाटवेन च ।
अनुगृह्णात्यविकृतः, पित्तं पक्त्यूष्मदर्शनैः ॥ २ ॥
क्षुत्तृड्रुचिप्रभामेधाधीशौर्यतनुमार्दवैः ।
श्लेष्मा स्थिरत्वस्निग्धत्वसन्धिबन्धक्षमादिभिः ॥ ३ ॥
प्रीणनं जीवनं लेपः स्नेहो धारणपूरणे ।
गर्भोत्पादश्च धातूनां श्रेष्ठं कर्म क्रमात्स्मृतम् ॥ ४ ॥
अवष्टम्भः पुरीषस्य, मूत्रस्य क्लेदवाहनम् ।
स्वेदस्य क्लेदविधृतिः[1]
वृद्धस्तु कुरुतेऽनिलः ॥ ५ ॥
कार्श्यकार्ष्ण्योष्णकामत्वकम्पाऽऽनाहशकृद्ग्रहान् ।

---

१ 'केशवि' इति पाठः, २ 'कामित्व' इति पाठः.

बलनिद्रेन्द्रियभ्रंशप्रलापभ्रमदीनताः ॥ ६ ॥
पीतविण्मूत्रनेत्रत्वक्क्षुत्तृड्दाहाऽल्पनिद्रताः ।
पित्तम्
श्लेष्माऽग्निसदनप्रसेकालस्यगौरवम् ॥ ७ ॥
श्वैत्यशैत्यश्लथाङ्गत्वं श्वासकासातिनिद्रताः ।
रसोऽपि श्लेष्मवत्
रक्तं विसर्पप्लीहविद्रधीन् ॥ ८ ॥
कुष्ठवातास्रपित्तास्रगुल्मोपकुशकामलाः ।
व्यङ्गाग्निनाशसंमोहरक्तत्वङ्नेत्रमूत्रताः ॥ ९ ॥
मांसं गण्डार्बुदग्रन्थिगण्डोरूदरवृद्धिताः ।
कण्ठादिष्वधिमांसं च
तद्वन्मेदस्तथा श्रमम् ॥ १० ॥
अल्पेऽपि चेष्टिते श्वासं स्फिक्स्तनोदरलम्बनम् ।
अस्थ्यध्यस्थ्यधिदन्तांश्च
मज्जा नेत्राङ्गगौरवम् ॥ ११ ॥
पर्वसु स्थूलमूलानि कुर्यात्कृच्छ्राण्यरूंषि च ।
अतिस्त्रीकामतां वृद्धं शुक्रं शुक्राश्मरीमपि ॥ १२ ॥
कुक्षावाध्मानमाटोपं गौरवं वेदनां शकृत् ।
मूत्रं तु बस्तिनिस्तोदं कृतेऽप्यकृतसंज्ञताम् ॥ १३ ॥
स्वेदोऽतिस्वेददौर्गन्ध्यकण्डूः
एवं च लक्षयेत् ।
दूषिकादीनपि मलान् बाहुल्यगुरुतादिभिः ॥ १४ ॥

लिङ्गं क्षीणेऽनिलेऽङ्गस्य सादोऽल्पं भाषितेहितम् ।
संज्ञामोहस्तथा श्लेष्मवृद्ध्युक्तामयसम्भवः ॥ १५ ॥
पित्ते मन्दोऽनलः शीतं प्रभाहानिः
कफे भ्रमः ।
श्लेष्माशयानां शून्यत्वं हृद्द्रवः श्लथसन्धिता ॥ १६ ॥
रसे रौक्ष्यं श्रमः शोषो ग्लानिः शब्दासहिष्णुता ।
रक्तेऽम्लशिशिरप्रीतिसिराशैथिल्यरूक्षताः ॥ १७ ॥
मांसेऽक्षग्लानिगण्डस्फिक्शुष्कतासन्धिवेदनाः ।
मेदसि स्वपनं कट्याः प्लीह्नो वृद्धिः कृशाङ्गता ॥ १८ ॥
अस्थ्न्यस्थितोदः शदनं दन्तकेशनखादिषु ।
अस्थ्नां मज्जनि सौषिर्यं भ्रमस्तिमिरदर्शनम् ॥ १९ ॥
शुक्रे चिरात् प्रसिच्येत शुक्रं शोणितमेव वा ।
तोदोऽत्यर्थं वृषणयोर्मेढ्रं धूमायतीव च ॥ २० ॥
पुरीषे वायुरन्त्राणि सशब्दो वेष्टयन्निव ।
कुक्षौ भ्रमति यात्यूर्ध्वं हृत्पार्श्वे पीडयन् भृशम् ॥ २१ ॥
मूत्रेऽल्पं मूत्रयेत्कृच्छ्राद्विवर्णं सास्रमेव वा ।
स्वेदे रोमच्युतिः स्तब्धरोमता स्फुटनं त्वचः ॥ २२ ॥
मलानामतिसूक्ष्माणां दुर्लक्ष्यं लक्षयेत् क्षयम् ।
स्वमलायनसंशोषतोदशून्यत्वलाघवैः ॥ २३ ॥
दोषादीनां यथास्वं च विद्याद्वृद्धिक्षयौ भिषक् ।
क्षयेण विपरीतानां गुणानां वर्धनेन च ॥ २४ ॥

१ 'हृद्ग्रहः' इति पाठः. २ 'कुक्षिं' इति पाठः.

वृद्धिं मलानां सङ्गाच्च क्षयं चाति विसर्गतः ।
मलोचितत्वाद्देहस्य क्षयो वृद्धेस्तु पीडनः ॥ २५ ॥
तत्रास्थनि स्थितो वायुः, पित्तं तु स्वेदरक्तयोः ।
श्लेष्मा शेषेषु, तेनैषामाश्रयाश्रयिणां मिथः ॥ २६ ॥
यदेकस्य तदन्यस्य वर्धनक्षपणौषधम् ।
अस्थिमारुतयोर्नैवं, प्रायो वृद्धिर्हि तर्पणात् ॥ २७ ॥
श्लेष्मणाऽनुगता तस्मात् सङ्क्षयस्तद्विपर्ययात् ।
वायुनाऽनुगतोऽस्माच्च वृद्धिक्षयसमुद्भवान् ॥ २८ ॥
विकारान् साधयेच्छीघ्रं क्रमाल्लङ्घनबृंहणैः ।
वायोरन्यत्र, तज्जांस्तु तैरेवोत्क्रमयोजितैः ॥ २९ ॥
विशेषाद्रक्तवृद्ध्युत्थान् रक्तस्रुतिविरेचनैः ।
मांसवृद्धिभवान् रोगान् शस्त्रक्षाराग्निकर्मभिः ॥ ३० ॥
स्थौल्यकार्श्योपचारेण मेदोजानस्थिसङ्क्षयात् ।
जातान् क्षीरघृतैस्तिक्तसंयुतैर्बस्तिभिस्तथा ॥ ३१ ॥
"मज्जशुक्रोद्भवान् रोगान् भोजनैः स्वादुतिक्तकैः ।
वृद्धं शुक्रं व्यवायाद्यैर्यच्चान्यच्छुक्रशोषिकम् ॥
प्रत्यनीकौषधं मज्जशुक्रवृद्धिक्षये हितम् ।"
विड्वृद्धिजानतीसारक्रियया, विट्क्षयोद्भवान् ।
मेषाजमध्यकुल्माषयवमाषद्वयादिभिः ॥ ३२ ॥
मूत्रवृद्धिक्षयोत्थांश्च मेहकृच्छ्रचिकित्सया ।
व्यायामाभ्यञ्जनस्वेदमद्यैः स्वेदक्षयोद्भवान् ॥ ३३ ॥
स्वस्थानस्थस्य कायाग्नेरंशा धातुषु संश्रिताः ।

तेषां सादातिदीप्तिभ्यां धातुवृद्धिक्षयोद्भवः ॥ ३४ ॥
पूर्वो धातुः परं कुर्याद्वृद्धः क्षीणश्च तद्विधम्।
दोषा दुष्टा रसैर्धातून् दूषयन्त्युभये मलान् ॥ ३५ ॥
अधो द्वे, सप्त शिरसि, खानि स्वेदवहानि च।
मला मलायनानि स्युर्यथास्वं तेष्वतो गदाः ॥ ३६ ॥
ओजस्तु तेजो धातूनां शुक्रान्तानां परं स्मृतम्।
हृदयस्थमपि व्यापि देहस्थितिनिबन्धनम् ॥ ३७ ॥
स्निग्धं सोमात्मकं शुद्धमीषल्लोहितपीतकम्।
यन्नाशे नियतं नाशो यस्मिंस्तिष्ठति तिष्ठति ॥ ३८ ॥
निष्पद्यन्ते यतो भावा विविधा देहसंश्रयाः।
ओजः क्षीयेत कोपक्षुद्ध्यानशोकश्रमादिभिः ॥ ३९ ॥
बिभेति दुर्बलोऽभीक्ष्णं ध्यायति व्यथितेन्द्रियः।
दुश्छायो दुर्मना रूक्षो भवेत्क्षामश्च तत्क्षये ॥ ४० ॥
जीवनीयौषधक्षीररसाद्यास्तत्र भेषजम्।
ओजोवृद्धौ हि देहस्य तुष्टिपुष्टिबलोदयः ॥ ४१ ॥
यदन्नं द्वेष्टि यदपि प्रार्थयेताविरोधि तु।
तत्तत्त्यजन् समश्नंश्च[1] तौ तौ वृद्धिक्षयौ जयेत् ॥ ४२ ॥
कुर्वते[2] हि रुचिं दोषा विपरीतसमानयोः।
वृद्धाः क्षीणाश्च भूयिष्ठं लक्षयन्त्यबुधास्तु न ॥ ४३ ॥
यथाबलं यथास्वं च दोषा वृद्धा वितन्वते।
रूपाणि, जहति क्षीणाः, समाः स्वं कर्म कुर्वते ॥ ४४ ॥

---

१ 'समश्नन्वा' इति पा. २ 'कुर्वन्ति हि' इति पा.

य एव देहस्य समा विवृद्ध्यै त एव दोषा विषमा वधाय ।
यस्मादतस्ते हितचर्ययैव क्षयाद्विवृद्धेरिव रक्षणीयाः॥४५॥"

## द्वादशोऽध्यायः।

अथातो दोषभेदीयाध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"पक्वाशयकटीसक्थिश्रोत्रास्थिस्पर्शनेन्द्रियम् ।
स्थानं वातस्य, तत्रापि पक्वाधानं विशेषतः ॥ १ ॥
नाभिरामाशयः स्वेदो लसीका रुधिरं रसः ।
दृक् स्पर्शनं च पित्तस्य, नाभिरत्र विशेषतः ॥ २ ॥
उरःकण्ठशिरःक्लोमपर्वाण्यामाशयो रस. ।
मेदो घ्राणं च जिह्वा च कफस्य, सुतरामुरः ॥ ३ ॥
प्राणादिभेदात्पञ्चात्मा वायुः
प्राणोऽत्र मूर्धगः ।
उरःकण्ठचरो बुद्धिहृदयेन्द्रियचित्तधृक् ॥ ४ ॥
ष्ठीवनक्षवथूद्गारनिःश्वासान्नप्रवेशकृत् ।
उरः स्थानमुदानस्य नासानाभिगलांश्चरेत् ॥ ५ ॥
वाक्प्रवृत्तिप्रयत्नोर्जाबलवर्णस्मृतिक्रियः ।
व्यानो हृदि स्थितः कृत्स्नदेहचारी महाजवः ॥ ६ ॥
गत्यपक्षेपणोत्क्षेपनिमेषोन्मेषणादिकाः ।
प्रायः सर्वाः क्रियास्तस्मिन् प्रतिबद्धाः शरीरिणाम् ॥ ७ ॥

---

१ 'वृद्धेरपि र' इति पाठः.

समानोऽग्निसमीपस्थः कोष्ठे चरति सर्वतः ।
अन्नं गृह्णाति पचति विवेचयति मुञ्चति ॥ ८ ॥
अपानोऽपानगः श्रोणिबस्तिमेढ्रोरुगोचरः ।
शुक्रार्तवशकृन्मूत्रगर्भनिष्क्रमणक्रियः ॥ ९ ॥
पित्तं पञ्चात्मकम्
　　　　तत्र पक्वामाशयमध्यगम् ।
पञ्चभूतात्मकत्वेऽपि यत्तैजसगुणोदयात् ॥ १० ॥
त्यक्तद्रवत्वं पाकादिकर्मणाऽनलशब्दितम् ।
पचत्यन्नं विभजते सारकिट्टौ पृथक् तथा ॥ ११ ॥
तत्रस्थमेव पित्तानां शेषाणामप्यनुग्रहम् ।
करोति बलदानेन पाचकं नाम तत्स्मृतम् ॥ १२ ॥
आमाशयाश्रयं पित्तं रञ्जकं रसरञ्जनात् ।
बुद्धिमेधाभिमानाद्यैरभिप्रेतार्थसाधनात् ॥ १३ ॥
साधकं हृद्गतं पित्तं
　　　　रूपालोचनतः स्मृतम् ।
दृक्स्थमालोचकं
　　　　त्वक्स्थं भ्राजकं भ्राजनात्त्वचः ॥ १४ ॥
श्लेष्मा तु पञ्चधा
　　　　उरःस्थः स त्रिकस्य स्ववीर्यतः ।
हृदयस्यान्नवीर्याच्च तत्स्थ एवाम्बुकर्मणा ॥ १५ ॥
कफधाम्नां च शेषाणां यत्करोत्यवलम्बनम् ।
अतोऽवलम्बकः श्लेष्मा
　　　　यस्त्वामाशयसंस्थितः ॥ १६ ॥

क्लेदकः सोऽन्नसङ्घातक्लेदनात्

रसबोधनात् ।

बोधको रसनास्थायी

शिरःसंस्थोऽक्षतर्पणात् ॥ १७ ॥

तर्पकः

सन्धिसंश्लेषाच्छ्लेषकः सन्धिषु स्थितः ।

इति प्रायेण दोषाणां स्थानान्यविकृतात्मनाम् ॥ १८ ॥

व्यापिनामपि जानीयात्कर्माणि च पृथक्पृथक् ।

उष्णेन युक्ता रूक्षाद्या वायोः कुर्वन्ति सञ्चयम् ॥ १९ ॥

शीतेन कोपमुष्णेन शमं स्निग्धादयो गुणाः ।

शीतेन युक्तास्तीक्ष्णाद्याश्चयं पित्तस्य कुर्वते ॥ २० ॥

उष्णेन कोपं, मन्दाद्याः शमं शीतोपसंहिताः ।

शीतेन युक्ताः स्निग्धाद्याः कुर्वते श्लेष्मणश्चयम् ॥ २१ ॥

उष्णेन कोपं, तेनैव गुणा रूक्षादयः शमम् ।

चयो वृद्धिः स्वधाम्न्येव प्रद्वेषो वृद्धिहेतुषु ॥ २२ ॥

विपरीतगुणेच्छा च

कोपस्तून्मार्गगामिता ।

लिङ्गानां दर्शनं स्वेषामस्वास्थ्यं रोगसम्भवः ॥ २३ ॥

स्वस्थानस्थस्य समता विकारासम्भवः शमः ।

चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिषु ॥ २४ ॥

वर्षादिषु तु पित्तस्य, श्लेष्मणः शिशिरादिषु ।

चीयते लघुरूक्षाभिरोषधीभिः समीरणः ॥ २५ ॥

तद्विधस्तद्विधे देहे कालस्यौष्ण्याच्च कुप्यति ।
अद्भिरम्लविपाकाभिरोषधीभिश्च तादृशम् ॥ २६ ॥
पित्तं याति चयं कोपं न तु कालस्य शैत्यतः ।
चीयते स्निग्धशीताभिरुदकौषधिभिः कफः ॥ २७ ॥
तुल्येऽपि काले देहे च स्कन्नत्वान्न प्रकुप्यति ।
इति कालस्वभावोऽयमाहारादिवशात्पुनः ॥ २८ ॥
चयादीन् यान्ति सद्योऽपि दोषाः कालेऽपि वा न तु ।
व्याप्नोति सहसा देहमापादतलमस्तकम् ॥ २९ ॥
निवर्तते तु कुपितो मलोऽल्पाल्पं जलौघवत् ।
नानारूपैरसङ्ख्येयैर्विकारैः कुपिता मलाः ॥ ३० ॥
तापयन्ति तनुं तस्मात्तद्धेत्वाकृतिसाधनम् ।
शक्यं नैकैकशो वक्तुमतः सामान्यमुच्यते ॥ ३१ ॥
दोषा एव हि सर्वेषां रोगाणामेककारणम् ।
यथा पक्षी परिपतन् सर्वतः सर्वमप्यहः ॥ ३२ ॥
छायामत्येति नात्मीयां यथा वा कृत्स्नमप्यदः ।
विकारजातं विविधं त्रीन् गुणान्नातिवर्तते ॥ ३३ ॥
तथा स्वधातुवैषम्यनिमित्तमपि सर्वदा ।
विकारजातं त्रीन्दोषान्

तेषां कोपे तु कारणम् ॥ ३४ ॥
अर्थैरसात्म्यैः संयोगः कालः कर्म च दुष्कृतम् ।
हीनातिमिथ्यायोगेन भिद्यते तत्पुनस्त्रिधा ॥ ३५ ॥
हीनोऽर्थेनेन्द्रियस्याल्पः संयोगः स्वेन नैव वा ।

अनियोगोऽतिसंसर्गः, सूक्ष्मभासुरभैरवम् ॥ ३६ ॥
अत्यासन्नातिदूरस्थं विप्रियं विकृतादि च ।
यदक्ष्णा वीक्ष्यते रूपं मिथ्यायोगः स दारुणः[1] ॥ ३७ ॥
एवमत्युग्रपूत्यार्द्रानिन्द्रियार्थान् यथायथम् ।
विद्यात्

कालस्तु शीतोष्णवर्षाभेदात्त्रिधा मतः ॥ ३८ ॥

स हीनो हीनशीतादिरतियोगोऽतिलक्षणः ।
मिथ्यायोगस्तु निर्दिष्टो विपरीतस्वलक्षणः ॥ ३९ ॥
कायवाक्चित्तभेदेन कर्मापि विभजेत्त्रिधा ।
कायादिकर्मणो[2] हीना प्रवृत्तिर्हीनसंज्ञकः ॥ ४० ॥
अतियोगोऽतिवृत्तिस्तु, वेगोदीरणधारणम् ।
विषमाङ्गक्रियारम्भपतनस्खलनादिकम् ॥ ४१ ॥
भाषणं सामिभुक्तस्य रागद्वेषभयादि च ।
कर्म प्राणातिपातादि दशधा यच्च निन्दितम् ॥ ४२ ॥
मिथ्यायोगः समस्तोऽसाविह वाऽमुत्र वा कृतम् ।
निदानमेतद्दोषाणां, कुपितास्तेन नैकधा ॥ ४३ ॥
कुर्वन्ति विविधान् व्याधीन् शाखाकोष्ठास्थिसन्धिषु ।
शाखा रक्तादयस्त्वक् च बाह्यरोगायनं हि[3] तत् ॥ ४४ ॥
तदाश्रया मषव्यङ्ग[4]गण्डालज्यर्बुदादयः ।

---

१ 'सुदारुणः' इति पाठः. २ 'कर्मणां' इति पाठः. ३ 'हिंसा' इति पाठः. ४ 'मशव्य' इति पाठः.

बहिर्भागाश्च दुर्नामगुल्मशोफादयो गदाः ॥ ४५ ॥
अन्तःकोष्ठो महास्रोत आमपक्काशयाश्रयः ।
तत्स्थानाः छर्द्यतीसारकासश्वासोदरज्वराः ॥ ४६ ॥
अन्तर्भागं च शोफार्शोगुल्मवीसर्पविद्रधि ।
शिरोहृदयवस्त्यादिमर्माण्यस्थ्नां च सन्धयः ॥ ४७ ॥
तन्निबद्धाः सिरास्नायुकण्डराद्याश्च मध्यमः ।
रोगमार्गः स्थितास्तत्र यक्ष्मपक्षवधार्दिताः ॥ ४८ ॥
मूर्धादिरोगाः सन्ध्यस्थित्रिकशूलग्रहादयः ।
स्रंसव्यासव्यधस्वापसादरुक्तोदभेदनम् ॥ ४९ ॥
सङ्गाङ्गभङ्गसङ्कोचवर्तहर्षणतर्षणम् ।
कम्पपारुष्यसौषिर्यशोषस्पन्दनवेष्टनम् ॥ ५० ॥
स्तम्भः कषायरसता वर्णः श्यावोऽरुणोऽपि वा ।
कर्माणि वायोः

पित्तस्य दाहरागोष्मपाकिताः ॥ ५१ ॥
स्वेदः क्लेदः स्रुतिः कोथः सदनं मूर्च्छनं मदः ।
कटुकाम्लौ रसौ वर्णः पाण्डुरारुणवर्जितः ॥ ५२ ॥
श्लेष्मणः स्नेहकाठिन्यकण्डूशीतत्वगौरवम् ।
बन्धोपलेपस्तैमित्यशोफापक्त्यतिनिद्रताः ॥ ५३ ॥
वर्णः श्वेतो रसौ स्वादुलवणौ चिरकारिता ।
इत्यशेषामयव्यापि यदुक्तं दोषलक्षणम् ॥ ५४ ॥
दर्शनाद्यैरवहितस्तत्सम्यगुपलक्षयेत् ।
व्याध्यवस्थाविभागज्ञः पश्यन्नार्तान् प्रतिक्षणम् ॥ ५५ ॥

अभ्यासात्प्राप्यते दृष्टिः कर्मसिद्धिप्रकाशिनी[1] ।
रत्नादिसदसज्ज्ञानं न शास्त्रादेव जायते ॥ ५६ ॥
दृष्टापचारजः कश्चित्कश्चित्पूर्वापराधजः ।
तत्सङ्कराद्भवत्यन्यो व्याधिरेवं त्रिधा स्मृतः ॥ ५७ ॥
यथानिदानं दोषोत्थः कर्मजो हेतुभिर्विना ।
महारम्भोऽल्पके हेतावातङ्को दोषकर्मजः ॥ ५८ ॥
विपक्षशीलनात्पूर्वः कर्मजः कर्मसङ्क्षयात् ।
गच्छत्युभयजन्मा तु दोषकर्मक्षयात्क्षयम् ॥ ५९ ॥
द्विधा स्वपरतन्त्रत्वाद्व्याधयोऽन्त्याः पुनर्द्विधा ।
पूर्वजाः पूर्वरूपाख्या, जाताः पश्चादुपद्रवाः ॥ ६० ॥
यथास्वजन्मोपशयाः स्वतन्त्राः स्पष्टलक्षणाः ।
विपरीतास्ततोऽन्ये तु

विद्यादेवं मलानपि ॥ ६१ ॥

तांल्लक्षयेदवहितो विकुर्वाणान् प्रतिज्वरम् ।
तेषां प्रधानप्रशमे प्रशमोऽशाम्यतस्तथा ॥ ६२ ॥
पश्चाच्चिकित्सेत्तूर्णं[2] वा बलवन्तमुपद्रवम् ।
व्याधिक्लिष्टशरीरस्य पीडाकरतरो हि सः ॥ ६३ ॥
विकारनामाकुशलो न जिह्रीयात् कदाचन ।
न हि सर्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः ॥ ६४ ॥
स एव कुपितो दोषः समुत्थानविशेषतः ।

---

१ 'सात्केवल दृष्टिः' इति पाठः. २ 'त्सेत्पूर्वं' इति पाठः.

स्थानान्तराणि च प्राप्य विकारान् कुरुते बहून् ॥ ६५ ॥
तस्माद्विकारप्रकृतीरधिष्ठानान्तराणि च ।
बुद्ध्वा हेतुविशेषांश्च शीघ्रं कुर्यादुपक्रमम् ॥ ६६ ॥
दूष्यं देशं बलं कालमनलं प्रकृतिं वयः ।
सत्त्वं सात्म्यं तथाऽऽहारमवस्थाश्च पृथग्विधाः ॥ ६७ ॥
सूक्ष्मसूक्ष्माः समीक्ष्यैषां दोषौषधनिरूपणे ।
यो वर्तते चिकित्सायां न स स्खलति जातुचित् ॥ ६८ ॥
गुर्वल्पव्याधिसंस्थानं सत्त्वदेहबलाबलात् ।
दृश्यतेऽप्यन्यथाकारं तस्मिन्नवहितो भवेत् ॥ ६९ ॥
गुरुं लघुमिति व्याधिं कल्पयंस्तु[1] भिषग्ब्रुवः ।
अल्पदोषाकलनया पथ्ये विप्रतिपद्यते ॥ ७० ॥
ततोऽल्पमल्पवीर्यं वा गुरुव्याधौ प्रयोजितम् ।
उदीरयेत्तरां रोगान् संशोधनमयोगतः ॥ ७१ ॥
शोधनं त्वतियोगेन विपरीतं विपर्यये ।
क्षिणुयाच्च मलानेव केवलं वपुरस्यति[2] ॥ ७२ ॥
अतोऽभियुक्तः सततं सर्वमालोच्य सर्वथा ।
तथा युञ्जीत भैषज्यमारोग्याय यथा ध्रुवम् ॥ ७३ ॥
वक्ष्यन्तेऽतःपरं दोषा वृद्धिक्षयविभेदतः ।
पृथक् त्रीन् विद्धि
संसर्गांस्त्रिधा, तत्र तु तांश्च ॥ ७४ ॥
त्रीनेव समया वृद्धया, षडेकस्यातिशायने ।

---

१ 'कल्यंस्तु' इति पाठः. २ 'वपुरप्यपि' इति पाठः.

त्रयोदश समस्तेषु

षड् द्व्येकातिशयेन तु ॥ ७५ ॥

एकं तुल्याधिकैः

षट् च तारतम्यविकल्पनात् ।

पञ्चविंशतिमित्येवं वृद्धैः

क्षीणैश्च तावतः ॥ ७६ ॥

एकैकवृद्धिसमताक्षयैः षट् ते

पुनश्च षट् ।

एकक्षयद्वन्द्ववृद्ध्या सविपर्ययया ऽपि ते ॥ ७७ ॥

भेदा द्विषष्टिर्निर्दिष्टाः

त्रिषष्टः स्वास्थ्यकारणम् ।

संसर्गाद्रसरुधिरादिभिस्तथैषां[1]

दोषांस्तु क्षयसमताविवृद्धिभेदैः ।

आनन्त्यं तरतमयोगतश्च यातान्

जानीयादवहितमानसो यथास्वम् ॥ ७८½ ॥"

---

## त्रयोदशोऽध्यायः ।

अथातो दोषोपक्रमणीयमध्यायं व्याख्यास्यामः ।

इति ह स्माहुरात्रेयादयो महर्षयः ।

"वातस्योपक्रमः स्नेहः स्वेदः संशोधनं मृदु ।

स्वाद्वम्ललवणोष्णानि भोज्यान्यभ्यङ्गमर्दनम् ॥ १ ॥

---

१ 'स्तथैतान् दो' इति पाठः.

वेष्टनं त्रासनं सेको मद्यं पैष्टिकगौडिकम्।
स्निग्धोष्णा बस्तयो बस्तिनियमः सुखशीलता ॥ २ ॥
दीपनैः पाचनैः सिद्धाः स्नेहाश्चानेकयोनयः।
विशेषान्मेद्यपिशितरसतैलानुवासनम् ॥ ३ ॥
पित्तस्य सर्पिषः पानं स्वादुशीतैर्विरेचनम्।
स्वादुतिक्तकषायाणि भोजनान्यौषधानि च ॥ ४ ॥
सुगन्धिशीतहृद्यानां गन्धानामुपसेवनम्।
कण्ठेगुणानां हाराणां मणीनामुरसा धृतिः ॥ ५ ॥
कर्पूरचन्दनोशीरैरनुलेपः क्षणे क्षणे।
प्रदोषश्चन्द्रमाः सौधं हारि गीतं हिमोऽनिलः ॥ ६ ॥
अयन्त्रणसुखं मित्रं पुत्रः सन्दिग्धमुग्धवाक्।
छन्दानुवर्तिनो दाराः प्रियाः शीलविभूषिताः ॥ ७ ॥
शीताम्बुधारागर्भाणि गृहाण्युद्यानदीर्घिकाः।
सुतीर्थविपुलस्वच्छसलिलाशयसैकते ॥ ८ ॥
सांम्भोजजलतीरान्ते कायमाने द्रुमाकुले।
सौम्या भावाः पयः सर्पिर्विरेकश्च विशेषतः ॥ ९ ॥
श्लेष्मणो विधिना युक्तं तीक्ष्णं वमनरेचनम्।
अन्नं रूक्षाल्पतीक्ष्णोष्णं कटुतिक्तकषायकम् ॥ १० ॥
दीर्घकालस्थितं मद्यं रतिप्रीतिः प्रजागरः।
अनेकरूपो व्यायामश्चिन्ता रूक्षं विमर्दनम् ॥ ११ ॥
विशेषाद्वमनं यूषः क्षौद्रं मेदोघ्नमौषधम्।

---

१ 'णमुख' इति पाठः. २ 'मानं' इति पाठः.

धूमोपवासगण्डूषा निःसुखत्वं सुखाय च ॥ १२ ॥
उपक्रमः पृथग्दोषान् योऽयमुद्दिश्य कीर्तितः ।
संसर्गसन्निपातेषु तं यथास्वं विकल्पयेत् ॥ १३ ॥
ग्रैष्मः प्रायो मरुत्पित्ते वासन्तः कफमारुते ।
मरुतो योगवाहित्वात्, कफपित्ते तु शारदः ॥ १४ ॥
चय एव जयेद्दोषं कुपितं त्वविरोधयन् ।
सर्वकोपे बलीयांसं शेषदोषाविरोधतः ॥ १५ ॥
प्रयोगः शमयेद्व्याधिमेकं योऽन्यमुदीरयेत् ।
नाऽसौ विशुद्धः शुद्धस्तु शमयेद्यो न कोपयेत् ॥ १६ ॥
व्यायामादूष्मणस्तैक्ष्ण्यादहिताचरणादपि ।
कोष्ठाच्छाखास्थिमर्माणि द्रुतत्वान्मारुतस्य च ॥ १७ ॥
दोषा यान्ति

तथा तेभ्यः स्रोतोमुखविशोधनात् ।
वृद्ध्याऽभिष्यन्दनात्पाकात्कोष्ठं वायोश्च निग्रहात् ॥ १८ ॥
तत्रस्थाश्च विलम्बेरन् भूयो हेतुप्रतीक्षिणः ।
ते कालादिबलं लब्ध्वा कुप्यन्त्यन्याश्रयेष्वपि ॥ १९ ॥
तत्रान्यस्थानसंस्थेषु तदीयामबलेषु तु ।
कुर्याच्चिकित्साम्

स्वामेव बलेनान्याभिभाविषु ॥ २० ॥
आगन्तुं शमयेद्दोषं स्थानिनं प्रतिकृत्य वा ।
"साधारणं वा कुर्वीत क्रियामुभययोगिनीम् ।"

---

१ 'धि योऽन्यमन्यमु' इति पाठः.

प्रायस्तिर्यग्गता दोषाः क्लेशयन्त्यातुरांश्चिरम् ॥ २१ ॥
कुर्यान्न तेषु त्वरया देहाग्निबलवित् क्रियाम् ।
शमयेत्तान् प्रयोगेण सुखं वा कोष्ठमानयेत् ॥ २२ ॥
ज्ञात्वा कोष्ठप्रपन्नांश्च यथासन्नं विनिर्हरेत् ।
स्रोतोरोधबलभ्रंशगौरवानिलमूढताः ॥ २३ ॥
आलस्यापक्तिनिष्ठीवमलसङ्गारुचिक्लमाः ।
"विण्मूत्रनखदन्तत्वक्चक्षुषां पीतता भवेत् ।
रक्तत्वमथ कृष्णत्वं पृष्ठास्थिकटिसन्धिरुक् ॥
शिरोरुक् जायते तीव्रा, निद्रा विरसता मुखे ।
क्वचिच्च श्वयथुर्गात्रे ज्वरातीसारहर्षणम् ॥"
लिङ्गं मलानां सामानां, निरामाणां विपर्ययः ॥ २४ ॥
ऊष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम् ।
दुष्टमामाशयगतं रसमामं प्रचक्षते ॥ २५ ॥
अन्ये दोषेभ्य एवातिदुष्टेभ्योऽन्योन्यमूर्च्छनात् ।
कोद्रवेभ्यो विषस्येव वदन्त्यामस्य सम्भवम् ॥ २६ ॥
आमेन तेन सम्पृक्ता दोषा दूष्याश्च दूषिताः ।
सामा इत्युपदिश्यन्ते ये च रोगास्तदुद्भवाः ॥ २७ ॥
"वायुः सामो विबन्धाग्निसादस्तम्भान्त्रकूजनैः ।
वेदनाशोफनिस्तोदैः क्रमशोऽङ्गानि पीडयन् ॥
विचरेद्युगपच्चापि गृह्णाति कुपितो भृशम् ।
स्नेहाद्यैर्वृद्धिमायाति सूर्यमेघोदये निशि ॥
निरामो विशदो रूक्षो निर्विबन्धोऽल्पवेदनः ।

विपरीतगुणैः शान्ति निरधर्याति विशेषतः ॥
दुर्गन्धि हरितं श्यावं पिच्छमम्लं घनं गुरु ।
अम्लीकाकण्ठहृद्दाहकरं गामं धिनिर्दिशेत् ॥
आताम्रपीतमत्युष्णं रसे कटुकमस्थिरम् ।
पक्वं विगन्धि विज्ञेयं रुचिपक्तिबलप्रदम् ॥
आविलस्तन्तुलः स्त्यानः कण्ठदेशेऽवतिष्ठते ।
मामो बलासो दुर्गन्धिः क्षुदुद्गारविघातकृत् ॥"
फेनवान् पिण्डितः पाण्डुर्निःसारोऽगन्ध एव च ।
पक्वः स एव विज्ञेयश्छेदवान् वक्त्रशुद्धिदः ॥
सर्वदेहप्रविसृतान् सामान् दोषान् न निर्हरेत् ।
लीनान् धातुष्वनुत्क्लिष्टान् फलादामाद्रसानिव ॥ २८ ॥
आश्रयस्य हि नाशाय ते स्युर्दुर्निर्हरत्वतः ।
पाचनैर्दीपनैः स्नेहैस्तान् स्वेदैश्च परिष्कृतान् ॥ २९ ॥
शोधयेच्छोधनैः काले यथासन्नं यथाबलम् ।
हन्त्याशु युक्तं वक्त्रेण द्रव्यमामाशयान्मलान् ॥ ३० ॥
घ्राणेन चोर्ध्वजत्रूत्थान् पक्वाधानाद्गुदेन च ।
उत्क्लिष्टानध ऊर्ध्वं वा न चामान् वहतः स्वयम् ॥ ३१ ॥
धारयेदौषधैर्दोषान् विधृतास्ते हि रोगदाः ।
प्रवृत्तान् प्रागतो दोषानुपेक्षेत हिताशिनः ॥ ३२ ॥
विबद्धान् पाचनैस्तैस्तैः पाचयेन्निर्हरेत वा ।
श्रावणे कार्तिके चैत्रे मासि साधारणे क्रमात् ॥ ३३ ॥

१ 'रेत्तथा' इति पाठः.

"प्रावृट्शरद्वसन्तेषु मासेष्वेतेषु शोधयेत् ।
साधारणेषु विधिना त्रिमासान्तरितान् मलान् ॥"
ग्रीष्मवर्षाहिमचितान् वाय्वादीनाशु निर्हरेत् ।
अत्युष्णवर्षशीता हि ग्रीष्मवर्षाहिमागमाः ॥ ३४ ॥
सन्धौ साधारणे तेषां दुष्टान् दोषान् विशोधयेत् ।
"त्रयः साधारणास्तेषामन्तरे प्रावृषादयः ।
प्रावृट् शुचिनभौ तेषु शरदूर्जसहौ स्मृतौ ॥
तपस्यो मधुमासश्च वसन्तः शोधनं प्रति ।
एतानृतून् विकल्प्यैवं दद्यात्संशोधनं भिषक् ॥"
स्वस्थवृत्तमभिप्रेत्य, व्याधौ व्याधिवशेन तु ॥ ३५ ॥
कृत्वा शीतोष्णवृष्टीनां प्रतीकारं यथायथम् ।
प्रयोजयेत्क्रियां प्राप्तां क्रियाकालं न हापयेत् ॥ ३६ ॥
युञ्ज्यादनन्नमन्नादौ मध्येऽन्ते कवलान्तरे ।
ग्रासे ग्रासे मुहुः सान्नं सामुद्गं निशि चौषधम् ॥ ३७ ॥
कफोद्रेके गदेऽनन्नं बलिनो रोगरोगिणोः ।
अन्नादौ विगुणेऽपाने, समाने मध्य इष्यते ॥ ३८ ॥
व्यानेऽन्ते प्रातराशस्य, सायमाशस्य तूत्तरे ।
ग्रासग्रासान्तयोः प्राणे प्रदुष्टे मातरिश्वनि ॥ ३९ ॥
मुहुर्मुहुर्विषच्छर्दिहिध्मातृट्श्वासकासिषु ।
योज्यं सभोज्यं भैषज्यं भोज्यैश्चित्रैररोचके ॥ ४० ॥
कम्पाक्षेपकहिध्मासु सामुद्गं लघुभोजिनाम् ।
ऊर्ध्वजत्रुविकारेषु स्वप्नकाले प्रशस्यते ॥ ४१ ॥"

## चतुर्दशोऽध्यायः ।

अथातो द्विविधोपक्रमणीयमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।

''उपक्रम्यस्य हि द्वित्वाद्द्विधैवोपक्रमो मतः ।
एकः सन्तर्पणस्तत्र द्वितीयश्चापतर्पणः ॥ १ ॥
बृंहणो लङ्घनश्चेति तत्पर्यायावुदाहृतौ ।
बृंहणं यद्बृहत्त्वाय लङ्घनं लाघवाय यत् ॥ २ ॥
देहस्य
भवतः प्रायो भौमापमितरच्च ते ।
स्नेहनं रूक्षणं कर्म स्वेदनं स्तम्भनं च यत् ॥ ३ ॥
भूतानां तदपि द्वैध्याद्द्वितयं नातिवर्तते ।
शोधनं शमनं चेति द्विधा तत्रापि लङ्घनम् ॥ ४ ॥
यदीरयेद्बहिर्दोषान् पञ्चधा शोधनं च तत् ।
निरूहो वमनं कायशिरोरेकोऽस्रविस्रुतिः ॥ ५ ॥
न शोधयति यद्दोषान् समान्नोदीरयत्यपि ।
समीकरोति विषमान् शमनं तच्च सप्तधा ॥ ६ ॥
पाचनं दीपनं क्षुत्तृड्व्यायामातपमारुताः ।
बृंहणं शमनं त्वेव वायोः पित्तानिलस्य च ॥ ७ ॥
बृंहयेद्व्याधिभैषज्यमद्यस्त्रीशोककर्शितान् ।
भाराध्वोरःक्षतक्षीणरूक्षदुर्बलवातलान् ॥ ८ ॥

---

१ 'माप्यामे' पा. २ 'ति यत्कुरु्न्' पा. ३ 'कर्षितान्' पा.

गर्भिणीसूतिकाबालवृद्धान् ग्रीष्मेऽपरानपि ।
मांसक्षीरसितासर्पिर्मधुरस्निग्धबस्तिभिः ॥ ९ ॥
स्वप्नशय्यासुखाभ्यङ्गस्नाननिर्वृतिहर्षणैः ।
मेहामदोषातिस्निग्धज्वरोरुस्तम्भकुष्ठिनः ॥ १० ॥
विसर्पविद्रधिप्लीहशिरःकण्ठाक्षिरोगिणः ।
स्थूलांश्च लङ्घयेन्नित्यं शिशिरे त्वपरानपि ॥ ११ ॥
तत्र संशोधनैः स्थौल्यबलपित्तकफाधिकान् ।
आमदोषज्वरच्छर्दिरतीसारहृदामयैः ॥ १२ ॥
विबन्धगौरवोद्गारहृल्लासादिभिरातुरान् ।
मध्यस्थौल्यादिकान् प्रायः पूर्वं पाचनदीपनैः ॥ १३ ॥
एभिरेवामयैरार्तान् हीनस्थौल्यबलादिकान् ।
क्षुत्तृष्णानिग्रहैर्दोषैस्त्वार्तान् मध्यबलैर्दृढान् ॥ १४ ॥
समीरणातपायासैः किमुताल्पबलैर्नरान् ।
न बृंहयेल्लङ्घनीयान्
बृंह्यांस्तु मृदु लङ्घयेत् ॥ १५ ॥
युक्त्या वा देशकालादिबलतस्तानुपाचरेत् ।
बृंहिते स्याद्बलं पुष्टिस्तत्साध्यामयसङ्क्षयः ॥ १६ ॥
विमलेन्द्रियता सर्गो मलानां लाघवं रुचिः ।
क्षुत्तृट्सहोदयः शुद्धहृदयोद्गारकण्ठता ॥ १७ ॥
व्याधिमार्दवमुत्साहस्तन्द्रानाशश्च लङ्घिते ।
अनपेक्षितमात्रादिसेविते कुरुतस्तु ते ॥ १८ ॥

अतिस्थौल्यातिकार्श्यादीन्, वक्ष्यन्ते ते च सौषधाः ।
रूपं तैरेव च ज्ञेयमतिबृंहितलङ्घिते ॥ १९ ॥
अतिस्थौल्यापचीमेहज्वरोदरभगन्दरान् ।
कासमन्दाग्न्यासकृच्छ्रामकुष्ठादीनतिदारुणान् ॥ २० ॥
तत्र मेदोऽनिलश्लेष्मनाशनं सर्वमिष्यते ।
कुलत्थजूर्णश्यामाकयवमुद्गमधूदकम् ॥ २१ ॥
मस्तुदण्डाहतारिष्टचिन्ताशोधनजागरम् ।
मधुना त्रिफलां लिह्याद्गुडूचीमभयां घनम् ॥ २२ ॥
रसाञ्जनस्य महतः पञ्चमूलस्य गुग्गुलोः ।
शिलाजतुप्रयोगश्च साग्निमन्थरसो हितः ॥ २३ ॥
विडङ्गं नागरं क्षारः काललोहरजो मधु ।
यवामलकचूर्णं च योगोऽतिस्थौल्यदोषजित् ॥ २४ ॥
व्योषकट्वीवराशिग्रुविडङ्गातिविषास्थिराः ।
हिङ्गुसौवर्चलाजाजीयवानीधान्यचित्रकाः ॥ २५ ॥
निशे बृहत्यौ हपुषा पाठा मूलं च केम्बुकात् ।
एषां चूर्णं मधु घृतं तैलं च सदृशांशकम् ॥ २६ ॥
सक्तुभिः षोडशगुणैर्युक्तं पीतं निहन्ति तत् ।
अतिस्थौल्यादिकान् सर्वान् रोगानन्यांश्च तद्विधान् ॥२७॥
हृद्रोगकामलाश्वित्रश्वासकासगलग्रहान् ।
बुद्धिमेधास्मृतिकरं सन्नस्याग्नेश्च दीपनम् ॥ २८ ॥
अतिकार्श्यं भ्रमः कासस्तृष्णाधिक्यमरोचकः ।
स्नेहाग्निनिद्रादृक्श्रोत्रशुक्रौजःक्षुत्स्वरक्षयः ॥ २९ ॥

अग्निहृन्मूर्धजङ्कोरुत्रिकपार्श्वरुजा ज्वरः।
प्रलापोर्ध्वानिलग्लानिच्छर्दिपर्वास्थिभेदनम् ॥ ३० ॥
वर्चोमूत्रग्रहाद्याश्च जायन्तेऽतिविलङ्घनात्।
कार्श्यमेव वरं स्थौल्यात्

न हि स्थूलस्य भेषजम् ॥ ३१ ॥
बृंहणं लङ्घनं वाऽलमतिमेदोऽग्निवातजित्।
मधुरस्निग्धसौहित्यैर्यत्सौख्येन च नश्यति ॥ ३२ ॥
कृशिमा स्थविमाऽत्यन्तविपरीतनिषेवणैः।
योजयेद्बृंहणं तत्र सर्वं पानान्नभेषजम् ॥ ३३ ॥
अचिन्तया हर्षणेन ध्रुवं सन्तर्पणेन च।
स्वप्नप्रसङ्गाच्च कृशो वराह इव पुष्यति ॥ ३४ ॥
न हि मांससमं किञ्चिदन्यद्देहबृहत्त्वकृत्।
मांसादमांसं मांसेन सम्भृतत्वाद्विशेषतः ॥ ३५ ॥
गुरु चातर्पणं स्थूले विपरीतं हितं कृशे।
यवगोधूममुभयोस्तद्योग्याहितकल्पनम् ॥ ३६ ॥
दोषगत्याऽतिरिच्यन्ते ग्राहिभेद्यादिभेदतः।
उपक्रमा न ते द्वित्वाद्भिन्ना अपि गदा इव ॥ ३७ ॥"

---

## पञ्चदशोऽध्यायः।

अथातः शोधनादिगणसङ्ग्रहमध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः ॥

१ 'न नाल' इति पाठः.

"मदनमधुकलम्बानिम्बबिम्बीविशाला-
त्रपुसकुटजमूर्वादेवदालीकृमिघ्नम् ।
विदुलदहनचित्राः कोशवत्यौ करञ्जः
कणलवणवचैलासर्षपाश्छर्दनानि ॥ १ ॥
निकुम्भकुम्भत्रिफलागवाक्षी-
स्नुक्शङ्खिनीनीलिनितिल्वकानि ।
शम्याककम्पिल्लकहेमदुग्धा
दुग्धं च मूत्रं च विरेचनानि ॥ २ ॥
मदनकुटजकुष्ठदेवदाली-
मधुकवचादशमूलदारुरास्नाः ।
यवमिशिकृतवेधनं कुलत्था
मधु लवणं त्रिवृता निरूहणानि ॥ ३ ॥
वेल्लापामार्गव्योषदार्वीसुराला
बीजं शैरीषं बार्हतं शाम्रवं च ।
सारो माधूकः सैन्धवं तार्क्ष्यशैलं
त्रुट्यौ पृथ्वीका शोधयन्त्युत्तमाङ्गम् ॥ ४ ॥
भद्रदारु नतं कुष्ठं दशमूलं बलाद्वयम् ।
वायुं वीरतरादिश्च विदार्यादिश्च नाशयेत् ॥ ५ ॥
दूर्वाऽनन्ता निम्बवासाऽऽत्मगुप्ता
गुन्द्राऽभीरुः शीतपाकी प्रियङ्गुः ।

---

१ 'त्र्यम्' इति पाठः. २ 'शोधयेत्' इति पाठः.

न्यग्रोधादिः पद्मकादिः स्थिरे द्वे
पद्मं वन्यं सारिवादिश्च पित्तम् ॥ ६ ॥
आरग्वधादिरर्कादिर्मुष्ककाद्योऽसनादिकः।
सुरसादिः समुस्तादिर्वत्सकादिर्बलासजित् ॥ ७ ॥
जीवन्ती काकोल्यौ मेदे द्वे मुद्गमाषपर्ण्यौ च।
ऋषभकजीवकमधुकं चेति गणो जीवनीयाख्यः ॥ ८ ॥
विदारिपञ्चाङ्गुलवृश्चिकालीवृश्चीवदेवाह्वयशूर्पपर्ण्यः।
कण्डूकरी जीवनह्रस्वसंज्ञे द्वे पञ्चके गोपसुता त्रिपादी॥९॥
विदार्यादिरयं हृद्यो बृंहणो वातपित्तहा।
शोषगुल्माङ्गमर्दोर्ध्वश्वासकासहरो गणः ॥ १० ॥
सारिवोशीरकाश्मर्यमधूकशिशिरद्वयम्।
यष्टी परूषकं हन्ति दाहपित्तास्रतृड्ज्वरान् ॥ ११ ॥
पद्मकपुण्ड्रौ वृद्धितुगर्द्ध्यः
शृङ्ग्यमृता दश जीवनसंज्ञाः।
स्तन्यकरा घ्नन्तीरणपित्तं
प्रीणनजीवनबृंहणवृष्याः ॥ १२ ॥
परूषकं वरा द्राक्षा कट्फलं कतकात् फलम्।
राजाह्वं दाडिमं शाकं तृण्मूत्रामयवातजित् ॥ १३ ॥
अञ्जनं फलिनी मांसी पद्मोत्पलरसाञ्जनम्।
सैलामधुकनागाह्वं विषान्तर्दाहपित्तनुत् ॥ १४ ॥

---

१ 'देवाह्वय' इति पाठः. २ 'कतक फ' इति पाठः.

पटोलकटुरोहिणीचन्दनं
मधुस्रवगुडूचिपाठान्वितम् ।
निहन्ति कफपित्तकुष्ठज्वरान्
विषं वमिमरोचकं कामलाम् ॥ १५ ॥
गुडूचीपद्मकारिष्टधानकारक्तचन्दनम् ।
पित्तश्लेष्मज्वरच्छर्दिदाहतृष्णाघ्नमग्निकृत् ॥ १६ ॥
आरग्वधेन्द्रयवपाटलिकाकतिक्ता-
निम्बामृतामधुरस्रास्रुववृक्षपाठाः ।
भूनिम्बसैर्यकपटोलकरञ्जयुग्म-
सप्तच्छदाग्निसुषवीफलबाणघोण्टाः ॥ १७ ॥
आरग्वधादिर्जयति छर्दिकुष्ठविषज्वरान् ।
कफं कण्डूं प्रमेहं च दुष्टव्रणविशोधनः ॥ १८ ॥
असनतिनिशभूर्जश्वेतवाहप्रकीर्याः
खदिरकदरभण्डीशिंशिपामेषशृङ्ग्यः ।
त्रिहिमतलपलाशा जोङ्गकः शाकशालौ
क्रमुकधवकलिङ्गच्छागकर्णाश्वकर्णाः ॥ १९ ॥
असनादिर्विजयते श्वित्रकुष्ठकफक्रिमीन् ।
पाण्डुरोगं प्रमेहं च मेदोदोषनिबर्हणः ॥ २० ॥
वरुणसैर्यकयुग्मशतावरी-
दहनमोरटबिल्वविषाणिकाः ।

---

१ 'धान्यका' इति पा. २ 'च मेदोदरविशोधनः' इति पा. ३ 'मनतप' इति पा. ४ 'धवकमुकक्रलि' पा. ५ 'वरण' पा.

द्विबृहतीद्विकरञ्जयाद्वयं
बहलपल्लवदर्भरुजाकराः ॥ २१ ॥
वरुणादिः कफं मेदो मन्दाग्नित्वं नियच्छति ।
आढ्यवातं शिरःशूलं गुल्मं चान्तः सविद्रधिम् ॥ २२ ॥
ऊषकस्तुत्थकं हिङ्गु कासीसद्वयसैन्धवम् ।
सशिलाजतु कृच्छ्राश्मगुल्ममेदःकफापहम् ॥ २३ ॥
वेल्लन्तरारणिकबूकवृषाश्मभेद-
गोकण्टकेत्कटसहाचरबाणकाशाः ।
वृक्षादनीनलकुशद्वयगुण्ठगुन्द्रा-
भल्लूकमोरटकुरण्टकरम्भपार्थाः ॥ २४ ॥
वर्गो वीरतराद्योऽयं हन्ति वातकृतान् गदान् ।
अश्मरीशर्करामूत्रकृच्छ्राघातरुजाहरः ॥ २५ ॥
रोध्रशाबरकरोध्रपलाशा जिङ्गिणीसरलकट्फलयुक्ताः ।
कुत्सिताम्बकदलीगतशोकाः सैलवालुपरिपेलवमोचाः २६
एष रोध्रादिको नाम मेदःकफहरो गणः ।
योनिदोषहरः स्तम्भी वर्ण्यो विषविनाशनः ॥ २७ ॥
अर्कालर्कौ नागदन्ती विशल्या
भार्ङ्गी रास्ना वृश्चिकाली प्रकीर्या ।
प्रत्यक्पुष्पी पीततैलोदकीर्या
श्वेतायुग्मं तापसानां च वृक्षः ॥ २८ ॥

---

१ 'अधोवातं' इति पाठः. २ 'मेहकफा' इति पाठः.
३ 'पटकोत्कट' इति पा. ४ 'शिञ्झिणी' इति पाठः.

अयमर्कादिको वर्गः कफमेदोविषापहः ।
कृमिकुष्ठप्रशमनो विशेषाद्व्रणशोधनः ॥ २९ ॥
सुरसयुगफणिज्जं कालमाला विडङ्गं
खरबुसवृषकर्णीकट्फलं कासमर्दः ।
क्षवकसरसिभार्ङ्गीकार्मुकाः काकमाची
कुलहलविषमुष्टीभूस्तृणो भूतकेशी ॥ ३० ॥
सुरसादिर्गणः श्लेष्ममेदःकृमिनिषूदनः ।
प्रतिश्यायारुचिश्वासकासघ्नो व्रणशोधनः ॥ ३१ ॥
मुष्ककस्नुग्वराद्वीपिपलाशधवशिंशिपाः ।
गुल्ममेहाश्मरीपाण्डुमेदोर्शःकफशुक्रजित् ॥ ३२ ॥
वत्सकमूर्वाभार्ङ्गीकटुका मरीचं घुणप्रिया च गण्डीरम् ।
एला पाठाऽजाजी कट्वङ्गफलाजमोदसिद्धार्थवचाः ॥ ३३ ॥
जीरकहिङ्गुविडङ्गं पशुगन्धा पञ्चकोलकं हन्ति ।
चलकफमेदःपीनसगुल्मज्वरशूलदुर्नाम्नः ॥ ३४ ॥
वचाजलददेवाह्वनागरातिविषाभयाः ।
हरिद्राद्वययष्ट्याह्वकलशीकुटजोद्भवाः ॥ ३५ ॥
वचाहरिद्रादिगणावामातीसारनाशनौ ।
मेदःकफाढ्यपवनस्तन्यदोषनिबर्हणौ ॥ ३६ ॥
प्रियङ्गुपुष्पाञ्जनयुग्मपद्माः पद्माद्रजो योजनवल्ल्यनन्ता ।
मानद्रुमो मोचरसः समङ्गा पुंनागशीतं मदनीयहेतुः ३७

१ 'रपाचनो' पाटः, २ 'सारदु' पाठः, ३ 'पुन्नामशी' पाठः.

अम्बष्ठा मधुकं नमस्करी नन्दीवृक्षपलाशकच्छुराः।
रोध्रं धातकिबिल्वपेशिके कट्वङ्गः कमलोद्भवं रजः ॥३८॥
गणौ प्रियङ्ग्वम्बष्ठादी पक्वातीसारनाशनौ।
सन्धानीयौ हितौ पित्ते व्रणानामपि रोपणौ ॥ ३९ ॥

मुस्तावचाग्निद्विनिशाद्वितिक्ता-
भल्लातपाठात्रिफलाविषाख्याः।
कुष्ठं त्रुटी हैमवती च योनि-
स्तन्यामयघ्ना मलपाचनाश्च ॥ ४० ॥
न्यग्रोधपिप्पलसदाफलरोध्रयुग्मं
जम्बूद्वयार्जुनकपीतनसोमवल्काः।
प्लक्षाम्रवञ्जुलपियालपलाशनन्दी-
कोलीकदम्बविरलामधुकं मधूकम् ॥ ४१ ॥

न्यग्रोधादिर्गणो व्रण्यः सङ्ग्राही भग्नसाधनः।
मेदःपित्तास्रतृड्दाहयोनिरोगनिबर्हणः ॥ ४२ ॥
एलायुग्मतुरुष्ककुष्ठफलिनीमांसीजलध्यामकं
स्पृक्काचोरकचोचपत्रतगरस्थौणेयजातीरसाः।
शुक्तिर्व्याघ्रनखोऽमराह्वमगुरुः श्रीवासकः कुङ्कुमं
चण्डागुग्गुलुदेवधूपखपुराः पुन्नागनागाह्वयम् ॥ ४३ ॥
एलादिको वातकफौ विषं च विनियच्छति।
वर्णप्रसादनः कण्डूपिटिकाकोठनाशनः ॥ ४४ ॥

---

१ 'सुराह्वम' इति पाठः.

श्यामादन्तीद्रवन्तीक्रमुककुटरणाशङ्खिनीचर्मसाह्वा-
स्वर्णक्षीरीगवाक्षीशिखरिरजनकच्छिन्नरोहाकरञ्जाः ।
बस्ताङ्गी व्याधिघातो बहलबहुरसस्तीक्ष्णवृक्षात् फलानि
श्यामाद्यो हन्ति गुल्मं विषमरुचिकफौ हृद्रुजं मूत्रकृच्छ्रम् ॥
त्रयस्त्रिंशदिति प्रोक्ता वर्गास्तेषु त्वलाभतः ।
युञ्ज्यात्तद्विधमन्यच्च द्रव्यं जह्यादयौगिकम् ॥ ४६ ॥
एते वर्गा दोषदूष्याद्यपेक्ष्य
कल्कक्वाथस्नेहलेहादियुक्ताः ।
पाने नस्येऽन्वासनेऽन्तर्बहिर्वा
लेपाभ्यङ्गैर्घ्नन्ति रोगान् सुकृच्छ्रान् ॥ ४७ ॥"

## षोडशोऽध्यायः ।

अथातः स्नेहविधिमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"गुरुशीतसरस्निग्धमन्दसूक्ष्ममृदुद्रवम् ।
औषधं स्नेहनं प्रायो, विपरीतं विरूक्षणम् ॥ १ ॥
सर्पिर्मज्जा वसा तैलं स्नेहेषु प्रवरं मतम् ।
तत्रापि चोत्तमं सर्पिः संस्कारस्यानुवर्तनात् ॥ २ ॥
माधुर्यादविदाहित्वाजन्माद्येव च शीलनात् ।
पित्तघ्नास्ते यथापूर्वमितरघ्ना यथोत्तरम् ॥ ३ ॥

१ 'कुष्ठ' पा. २ 'सने वा बहि' पा. ३ 'सेकालेपैर्घ्न' पाठः.

घृतात्तैलं गुरु वसा तैलान्मज्जा ततोऽपि च ।
द्वाभ्यां त्रिभिश्चतुर्भिस्तैर्यमकस्त्रिवृतो महान् ॥ ४ ॥
स्वेद्यसंशोध्यमद्यस्त्रीव्यायामासक्तचिन्तकाः ।
वृद्धबालाबलकृशा रूक्षाः क्षीणास्त्ररेतसः ॥ ५ ॥
वातार्तस्यन्दतिमिरदारुणप्रतिबोधिनः ।
स्नेह्याः

न त्वतिमन्दाग्नितीक्ष्णाग्निस्थूलदुर्बलाः ॥ ६ ॥
ऊरुस्तम्भातिसाराऽऽमगलरोगगरोदरैः ।
मूर्च्छाच्छर्द्यरुचिश्लेष्मतृष्णामद्यैश्च पीडिताः ॥ ७ ॥
अपप्रसूता युक्ते च नस्ये बस्तौ विरेचने ।
तत्र धीस्मृतिमेधादिकाङ्क्षिणां शस्यते घृतम् ॥ ८ ॥
ग्रन्थिनाडीकृमिश्लेष्ममेदोमारुतरोगिषु ।
तैलं लाघवदार्ढ्यार्थिक्रूरकोष्ठेषु देहिषु ॥ ९ ॥
वातातपाध्वभारस्त्रीव्यायामक्षीणधातुषु ।
रूक्षक्लेशक्षमात्यग्निवातावृतपथेषु च ॥ १० ॥
शेषौ

वसा तु सन्ध्यस्थिमर्मकोष्ठरुजासु च ।
तथा दग्धाहतभ्रष्टयोनिकर्णशिरोरुजि ॥ ११ ॥
तैलं प्रावृषि, वर्षान्ते सर्पिरन्यौ तु माधवे ।
ऋतौ साधारणे स्नेहः शस्तोऽह्नि विमले रवौ ॥ १२ ॥

---

१ 'मेधाग्निका' इति पाठः.

तैलं त्वरायां शीतेऽपि

घर्मेऽपि च घृतं निशि ।

निश्येव पित्ते पवने संसर्गे पित्तवत्यपि ॥ १३ ॥

निश्यन्यथा वातकफाद्रोगाः स्युः पित्ततो दिवा ।

युक्त्याऽवचारयेत्स्नेहं भक्ष्याद्यन्नेन बस्तिभिः ॥ १४ ॥

नस्याभ्यञ्जनगण्डूषमूर्धकर्णाक्षितर्पणैः ।

रसभेदैककत्वाभ्यां चतुःषष्टिर्विचारणाः ॥ १५ ॥

स्नेहस्यान्याभिभूतत्वादल्पत्वाच्च क्रमात्स्मृताः ।

यथोक्तहेत्वभावाच्च नाच्छपेयो[1] विचारणा ॥ १६ ॥

स्नेहस्य कल्पः स श्रेष्ठः स्नेहकर्माशुसाधनात् ।

द्वाभ्यां चतुर्भिरष्टाभिर्यामैर्जीर्यन्ति याः क्रमात् ॥ १७ ॥

ह्रस्वमध्योत्तमा मात्रास्तास्ताभ्यश्च ह्रसीयसीम् ।

कल्पयेद्वीक्ष्य दोषादीन् प्रागेव तु ह्रसीयसीम् ॥ १८ ॥

ह्यस्तने जीर्ण एवान्ने स्नेहोऽच्छः शुद्धये बहुः ।

शमनः क्षुद्वतोऽनन्नो मध्यमात्रश्च शस्यते ॥ १९ ॥

बृंहणो रसमद्याद्यैः सभक्तोऽल्पः

हितः स च ।

बालवृद्धपिपासार्तस्नेहद्विण्मद्यशीलिषु ॥ २० ॥

स्त्रीस्नेहनित्यमन्दाग्निसुखितक्लेशभीरुषु ।

मृदुकोष्ठाल्पदोषेषु काले चोष्णे कृशेषु च ॥ २१ ॥

प्राङ्मध्योत्तरभक्तोऽसावधोमध्योर्ध्वदेहजान् ।

---

१ 'च्छपेये' इति पाठः.

व्याधीञ्जयेद्बलं कुर्यादङ्गानां च यथाक्रमम् ॥ २२ ॥
वार्युष्णमच्छेऽनु पिबेत् स्नेहे तत्सुखपक्तये ।
आस्योपलेपशुद्ध्यै च, तौवराष्करे न तु ॥ २३ ॥
"मूर्च्छा दाहोऽरतिस्तृष्णा जृम्भा मोहभ्रमक्लमाः ।
भवन्ति जीर्यति स्नेहे जीर्णः स्यात्तैः शमं गतैः ॥"
जीर्णाजीर्णविशङ्कायां पुनरुष्णोदकं पिबेत् ।
तेनोद्गारविशुद्धिः स्यात्ततश्च लघुता रुचिः ॥ २४ ॥
भोज्योऽन्नं मात्रया पास्यन् श्वः पिबन् पीतवानपि ।
द्रवोष्णमनभिष्यन्दि नातिस्निग्धमसङ्करम् ॥ २५ ॥
उष्णोदकोपचारी स्याद्ब्रह्मचारी क्षपाशयः ।
न वेगरोधी व्यायामक्रोधशोकहिमातपान् ॥ २६ ॥
"व्यायामवेगसंरोधशोकवर्षहिमातपान् ।"
प्रवातयानयानाध्वभाष्यात्यासनसंस्थितीः[1] ।
नीचात्युच्चोपधानाहःस्वप्नधूमरजांसि च ॥ २७ ॥
यान्यहानि पिबेत्तानि तावन्त्यन्यान्यपि त्यजेत् ।
सर्वकर्मस्वयं प्रायो व्याधिक्षीणेषु च क्रमः ॥ २८ ॥
उपचारस्तु शमने कार्यः स्नेहे विरिक्तवत् ।
त्र्यहमच्छं मृदौ कोष्ठे क्रूरे सप्तदिनं पिबेत् ॥ २९ ॥
सम्यक्स्निग्धोऽथवा यावदतः सात्म्यी भवेत्परम् ।
वातानुलोम्यं दीप्तोऽग्निर्वर्चः स्निग्धमसंहतम् ॥ ३० ॥
स्नेहोद्वेगः क्लमः सम्यक्स्निग्धे, रूक्षे विपर्ययः ।

---

१ 'ध्याभ्यासन,' 'ध्यात्यसन' इति पाठौ.

अतिस्निग्धे तु पाण्डुत्वं घ्राणवक्त्रगुदस्रवाः ॥ ३१ ॥
अमात्रयाऽहितो काले मिथ्याहारविहारतः ।
स्नेहः करोति शोफार्शस्तन्द्रास्तम्भविसंज्ञताः ॥ ३२ ॥
कण्डूकुष्ठज्वरोत्क्लेशशूलानाह[1]भ्रमादिकान् ।
क्षुत्तृष्णोल्लेखनस्वेदरूक्षपानान्नभेषजम् ॥ ३३ ॥
तक्रारिष्टखलोद्दालयवश्यामाककोद्रवम् ।
पिप्पलीत्रिफलाक्षौद्रपथ्यागोमूत्रगुग्गुलु ॥ ३४ ॥
यथास्वं प्रतिरोगं च स्नेहव्यापदि साधनम् ।
विरूक्षणे लङ्घनवत्कृतातिकृतलक्षणम् ॥ ३५ ॥
स्निग्धद्रवोष्णधन्वोत्थरसभुक् स्वेदमाचरेत् ।
स्निग्धस्त्र्यहं स्थितः कुर्याद्विरेकं, वमनं पुनः ॥ ३६ ॥
एकाहं दिनमन्यच्च कफमुत्क्लेश्य तत्करैः ।
मांसला मेदुरा भूरिश्लेष्माणो विषमाग्नयः ॥ ३७ ॥
स्नेहोचिताश्च ये स्नेह्यास्तान् पूर्वं रूक्षयेत्ततः ।
संस्नेह्य शोधयेदेवं स्नेहव्यापन्न जायते ॥ ३८ ॥
अलं मलानीरयितुं स्नेहश्चासात्म्यतां गतः ।
बालवृद्धादिषु स्नेहपरिहारासहिष्णुषु ॥ ३९ ॥
योगानिमाननुद्वेगान् सद्यःस्नेहान् प्रयोजयेत् ।
प्राज्यमांसरसास्तेषु, पेया वा स्नेहभर्जिता ॥ ४० ॥
तिलचू[2]र्णश्च सस्नेहफाणितः, कृशरा तथा ।
क्षीरपेया घृताढ्योष्णा, दध्नो वा सगुडः सरः ॥ ४१ ॥

---

१ 'हबलक्षयान्' इति पा. २ 'र्णं च सस्नेहफाणितं' इति पा.

पेया च पञ्चप्रसृता स्नेहैस्तण्डुलपञ्चमैः ।
सप्तैते स्नेहनाः सद्यः, स्नेहाश्च लवणोल्वणाः ॥ ४२ ॥
तद्ध्यभिष्यन्द्यरूक्षं च सूक्ष्ममुष्णं व्यवायि च ।
गुडानूपामिषक्षीरतिलमाषसुरादधि ॥ ४३ ॥
कुष्ठशोफप्रमेहेषु स्नेहार्थं न प्रकल्पयेत् ।
त्रिफलापिप्पलीपथ्यागुग्गुल्वादिविपाचितान् ॥ ४४ ॥
स्नेहान् यथास्वमेतेषां योजयेदविकारिणः ।
क्षीणानां त्वामयैरग्निदेहसन्धुक्षणक्षमान् ॥ ४५ ॥
दीप्तान्तराग्निः परिशुद्धकोष्ठः
प्रत्यग्रधातुर्बलवर्णयुक्तः ।
दृढेन्द्रियो मन्दजरः शतायुः
स्नेहोपसेवी पुरुषः प्रदिष्टः ॥ ४६ ॥"

---

## सप्तदशोऽध्यायः ।

अथातः स्वेदविधिमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥
"स्वेदस्तापोपनाहोष्मद्रवभेदाच्चतुर्विधः ।
तापोऽग्नितप्तवसनफालहस्ततलादिभिः ॥ १ ॥
उपनाहो वचाकिण्वशताह्वादेवदारुभिः ।
धान्यैः समस्तैर्गन्धैश्च रास्नैरण्डजटामिषैः ॥ २ ॥
उद्रिक्तलवणैः स्नेहचुक्रतक्रपयःप्लुतैः ।
केवले पवने, श्लेष्मसंसृष्टे सुरसादिभिः ॥ ३ ॥

पित्तेन पद्मकाद्यैस्तु साल्वणाख्यैः पुनःपुनः ।
स्निग्धोष्णवीर्यैर्मृदुभिश्चर्मपट्टैरपूतिभिः ॥ ४ ॥
अलाभे वातजित्पत्रकौशेयाविकशाटकैः ।
बद्धं रात्रौ दिवा मुञ्चेन्मुञ्चेद्रात्रौ दिवाकृतम् ॥ ५ ॥
ऊष्मा तूत्कारिकालोष्टकपालोपलपांसुभिः ।
पत्रभङ्गेन धान्येन करीषसिकतातुषैः ॥ ६ ॥
अनेकोपायसन्तप्तैः प्रयोज्यो देशकालतः ।
शिग्रुवारणकैरण्डकरञ्जसुरमार्जकात् ॥ ७ ॥
शिरीषवासावंशार्कमालतीदीर्घवृन्ततः ।
पत्रभङ्गैर्वचाद्यैश्च मांसैश्चानूपवारिजैः ॥ ८ ॥
दशमूलेन च पृथक् सहितैर्वा यथामलम् ।
स्नेहवद्भिः सुराशुक्तवारिक्षीरादिसाधितैः ॥ ९ ॥
कुम्भीर्गलन्तीर्नाडीर्वा पूरयित्वा रुजार्दितम् ।
वाससाऽऽच्छादितं गात्रं स्निग्धं सिञ्चेद्यथासुखम् ॥ १० ॥
तैरेव वा द्रवैः पूर्णं कुण्डं सर्वाङ्गगेऽनिले ।
अवगाह्यातुरस्तिष्ठेदर्शःकृच्छ्रादिरुक्षु च ॥ ११ ॥
निवातेऽन्तर्बहिःस्निग्धो जीर्णान्नः स्वेदमाचरेत् ।
व्याधिव्याधितदेशर्तुवशान्मध्यवरावरम् ॥ १२ ॥
कफार्तो रूक्षणं रूक्षो, रूक्षः स्निग्धं कफानिले ।
आमाशयगते वायौ कफे पक्वाशयाश्रिते ॥ १३ ॥
रूक्षपूर्वं तथा स्नेहपूर्वं स्थानानुरोधतः ।

---

१ 'साल्वलाख्यैः' इति पाठः. २ 'निर्वाते' इति पाठः.

अल्पं वङ्क्षणयो[1]:, स्वल्पं दृक्मुष्कहृदये न वा ॥ १४ ॥
शीतशूलक्षये स्विन्नो जातेऽङ्गानां च मार्दवे ।
स्याच्छनैर्मृदितः स्नातस्ततः स्नेहविधिं भजेत् ॥ १५ ॥
पित्तास्रकोपतृण्मूर्च्छास्वराङ्गसदनभ्रमाः ।
सन्धिपीडा ज्वरः श्यावरक्तमण्डलदर्शनम् ॥ १६ ॥
स्वेदातियोगाच्छर्दिश्च, तत्र स्तम्भनमौषधम् ।
विषक्षाराग्न्यतीसारच्छर्दिमोहातुरेषु च ॥ १७ ॥
स्वेदनं गुरु तीक्ष्णोष्णं प्रायः, स्तम्भनमन्यथा ।
द्रवस्थिरसरस्निग्धरूक्षसूक्ष्मं च भेषजम् ॥ १८ ॥
स्वेदनं, स्तम्भनं श्लक्ष्णं रूक्षसूक्ष्मसरद्रवम् ।
प्रायस्तिक्तं कषायं च मधुरं च समासतः ॥ १९ ॥
स्तम्भितः स्याद्बले लब्धे यथोक्तामयसङ्क्षयात् ।
स्तम्भत्वक्स्नायुसङ्कोचकम्पहृद्वाग्घनुग्रहैः ॥ २० ॥
पादौष्ठत्वक्करैः श्यावैरतिस्तम्भितमादिशेत् ।
न स्वेदयेदतिस्थूलरूक्षदुर्बलमूर्च्छितान् ॥ २१ ॥
स्तम्भनीयक्षतक्षीणक्षाममद्यविकारिणः ।
तिमिरोदरवीसर्पकुष्ठशो[2]षाढ्यरोगिणः ॥ २२ ॥
पीतदुग्धदधिस्नेहमधून् कृतविरेचनान् ।
भ्रष्टदग्धगुदग्लानिक्रोध[3]शोकभयार्दितान् ॥ २३ ॥
क्षुत्तृष्णाकामलापाण्डुमेहिनः पित्तपीडितान् ।

---

१ 'योः स्वेदं' इति पाठः. २ 'शोफाढ्य' इति पाठः.
३ 'धरक्तक्षयान्वितान्' इति पाठः.

गर्भिणीं पुष्पितां सूतां, मृदु चात्ययिके गदे ॥ २४ ॥
श्वासकासप्रतिश्यायहिध्माध्मानविबन्धिषु ।
स्वरभेदानिलव्याधिश्लेष्मामस्तम्भगौरवे ॥ २५ ॥
अङ्गमर्दकटीपार्श्वपृष्ठकुक्षिहनुग्रहे ।
महत्त्वे मुष्कयोः खल्ल्यामायामे वातकण्टके ॥ २६ ॥
मूत्रकृच्छ्रार्बुदग्रन्थिशुक्राघाताढ्यमारुते ।
स्वेदं यथायथं कुर्यात्तदौषधविभागतः ॥ २७ ॥
स्वेदो हितस्त्वनाग्नेयो वाते मेदःकफावृते ।
निवातं गृहमायासो गुरुप्रावरणं भयम् ॥ २८ ॥
उपनाहाहवक्रोधा भूरिपानं क्षुधाऽऽतपः ॥ २८½ ॥

स्नेहक्लिन्नाः कोष्ठगा धातुगा वा
स्रोतोलीना ये च शाखास्थिसंस्थाः ।
दोषाः स्वेदैस्ते द्रवीकृत्य कोष्ठं
नीताः सम्यक् शुद्धिभिर्निर्ह्रियन्ते ॥ २९½ ॥"

---

## अष्टादशोऽध्यायः ।

अथातो वमनविरेचनविधिमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥
"कफे विदध्याद्वमनं संयोगे वा कफोल्बणे ।
तद्वद्विरेचनं पित्ते
विशेषेण तु वामयेत् ॥ १ ॥

नवज्वरातिसाराधःपित्तासृग्राजयक्ष्मिणः ।
कुष्ठमेहापचीग्रन्थिश्लीपदोन्मादकासिनः ॥ २ ॥
श्वासहृल्लासवीसर्पस्तन्यदोषोर्ध्वरोगिणः ।
अवाम्या गर्भिणी रूक्षः क्षुधितो नित्यदुःखितः ॥ ३ ॥
बालवृद्धकृशस्थूलहृद्रोगिक्षतदुर्बलाः ।
प्रसक्तवमथुप्लीहतिमिरक्रिमिकोष्ठिनः ॥ ४ ॥
ऊर्ध्वप्रवृत्तवाय्वस्रदत्तबस्तिहतस्वराः ।
मूत्राघात्युदरी गुल्मी दुर्वमोऽत्यग्निरर्शसः ॥ ५ ॥
उदावर्तभ्रमाष्ठीलापार्श्वरुग्वातरोगिणः ।
ऋते विषगराजीर्णविरुद्धाभ्यवहारतः ॥ ६ ॥
प्रसक्तवमथोः पूर्वे प्रायेणामज्वरोऽपि च ।
धूमान्तैः कर्मभिर्वर्ज्याः, सर्वैरेव त्वजीर्णिनः ॥ ७ ॥
विरेकसाध्या गुल्मार्शोविस्फोटव्यङ्गकामलाः ।
जीर्णज्वरोदरगरच्छर्दिप्लीहहलीमकाः ॥ ८ ॥
विद्रधिस्तिमिरं काचः स्यन्दः पक्वाशयव्यथा ।
योनिशुक्राश्रया रोगाः कोष्ठगाः कृमयो व्रणाः ॥ ९ ॥
वातास्रमूर्ध्वगं रक्तं मूत्राघातः शकृद्ग्रहः ।
वाम्याश्च कुष्ठमेहाद्याः

न तु रेच्या नवज्वरी ॥ १० ॥
अल्पाग्न्यधोगपित्तास्रक्षतपाय्वतिसारिणः ।
सशल्यास्थापितक्रूरकोष्ठातिस्निग्धशोषिणः ॥ ११ ॥
अथ साधारणे काले स्निग्धस्विन्नं यथाविधि ।

श्वोवम्यमुत्क्लिष्टकफं मत्स्यमाषतिलादिभिः ॥ १२ ॥
निशां सुप्तं सुजीर्णान्नं पूर्वाह्णे कृतमङ्गलम् ।
निरन्नमीषत्स्निग्धं वा पेयया पीतसर्पिषम् ॥ १३ ॥
वृद्धबालाबलक्लीबभीरून् रोगानुरोधतः ।
आकण्ठं पायितान्मद्यं क्षीरमिक्षुरसं रसम् ॥ १४ ॥
यथाविकारविहितां मधुसैन्धवसंयुताम् ।
कोष्ठं विभज्य भैषज्यमात्रां मन्त्राभिमन्त्रिताम् ॥ १५ ॥
"ब्रह्मदक्षाश्विरुद्रेन्द्रभूचन्द्रार्कानिलानला· ।
ऋषयः सौषधिग्रामा भूतसङ्घाश्च पान्तु वः ॥ १६ ॥
रसायनमिवर्षीणाममराणामिवामृतम् ।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥ १७ ॥
ॐनमो भगवते भैषज्यगुरवे वैडूर्यप्रभराजाय ।
तथागतायार्हते सम्यक्सम्बुद्धाय । तद्यथा ।
ॐभैषज्ये भैषज्ये महाभैषज्ये समुद्गते स्वाहा ॥"
प्राङ्मुखं पाययेत्

पीतो मुहूर्तमनुपालयेन् ।

तन्मनाः

जातहृल्लासप्रसेकश्छर्दयेत्ततः ॥ १८ ॥
अङ्गुलिभ्यामनायस्तो नालेन मृदुनाऽथवा ।
गलताल्वरुजन् वेगानप्रवृत्तान् प्रवर्तयन् ॥ १९ ॥
प्रवर्तयन् प्रवृत्तांश्च जानुतुल्यासने स्थित· ।
उभे पार्श्वे ललाटं च वमतश्चास्य धारयेत् ॥ २० ॥

प्रपीडयेत्तथा नाभिं पृष्ठं च प्रतिलोमतः ।
कफे तीक्ष्णोष्णकटुकैः पित्ते स्वादुहिमैरिति ॥ २१ ॥
वमेत् स्निग्धाम्ललवणैः संसृष्टे मरुता कफे ।
पित्तस्य दर्शनं यावच्छेदो वा श्लेष्मणो भवेत् ॥ २२ ॥
हीनवेगः कणाधात्रीसिद्धार्थलवणोदकैः ।
वमेत्पुनःपुनः

तत्र वेगानामप्रवर्तनम् ॥ २३ ॥

प्रवृत्तिः सविबन्धा वा केवलस्यौषधस्य वा ।
अयोगस्तेन निष्ठीवकण्डूकोठज्वरादयः ॥ २४ ॥
निर्विबन्धं प्रवर्तन्ते कफपित्तानिलाः क्रमात् ।
(मनःप्रसादः स्वास्थ्यं चावस्थानं च स्वयं भवेत् ।
वैपरीत्यमयोगानां न चातिमहती व्यथा ॥)
सम्यग्योगे

अतियोगे तु फेनचन्द्रकरक्तवत् ॥ २५ ॥

वमितं क्षामता दाहः कण्ठशोषस्तमो भ्रमः ।
घोरा वाय्वामया मृत्युर्जीवशोणितनिर्गमात् ॥ २६ ॥
सम्यग्योगेन वमितं क्षणमाश्वास्य पाययेत् ।
धूमत्रयस्यान्यतमं स्नेहाचारमथादिशेत् ॥ २७ ॥
ततः सायं प्रभाते वा क्षुद्वान् स्नातः सुखाम्बुना ।
भुञ्जानो रक्तशाल्यन्नं भजेत्पेयादिकं क्रमम् ॥ २८ ॥
पेयां विलेपीमकृतं कृतं च यूषं रसं त्रीनुभयं तथैकम् ।

---

१ टीकाकारैरव्याख्यातोऽप्ययं सङ्ग्रहाग्रग्रन्थानुसारी युक्तश्च.

क्रमेण सेवेत नरोऽन्नकालान् प्रधानमध्यावरशुद्धिशुद्धः ॥

यथाऽणुरग्निस्तृणगोमयाद्यैः
सन्धुक्ष्यमाणो भवति क्रमेण ।
महान् स्थिरः सर्वपचस्तथैव
शुद्धस्य पेयादिभिरन्तराग्निः ॥ ३० ॥

जघन्यमध्यप्रवरे तु वेगा-
श्चत्वार इष्टा वमने षडष्टौ ।
दशैव ते द्वित्रिगुणा विरेके
प्रस्थस्तथा स्याद्द्विचतुर्गुणश्च ॥ ३१ ॥

पित्तावसानं वमनं विरेका-
दर्धं, कफान्तं च विरेकमाहुः ।
द्वित्रान् सविट्कानपनीय वेगान्
मेयं विरेके, वमने तु पीतम् ॥ ३२ ॥

अथैनं वामितं भूयः स्नेहस्वेदोपपादितम् ।
श्लेष्मकाले गते ज्ञात्वा कोष्ठं सम्यग्विरेचयेत् ॥ ३३ ॥
बहुपित्तो मृदुः कोष्ठः क्षीरेणापि विरिच्यते ।
प्रभूतमारुतः क्रूरः कृच्छ्राच्छ्यामादिकैरपि ॥ ३४ ॥
कषायमधुरैः पित्ते विरेकः, कटुकैः कफे ।
स्निग्धोष्णलवणैर्वायौ
अप्रवृत्तौ तु पाययेत् ॥ ३५ ॥
उष्णाम्बु, स्वेदयेदस्य पाणितापेन चोदरम् ।
उत्थानेऽल्पे दिने तस्मिन्भुक्त्वाऽन्येद्युः पुनः पिबेत् ॥३६

अदृढस्नेहकोष्ठस्तु पिबेदूर्ध्वं दशाहतः ।
भूयोऽप्युपस्कृततनुः स्नेहस्वेदैर्विरेचनम् ॥ ३७ ॥
यौगिकं सम्यगालोच्य स्मरन्पूर्वमतिक्रमम्[1] ।
हृत्कुक्ष्यशुद्धिररुचिरुत्क्लेशः श्लेष्मपित्तयोः ॥ ३८ ॥
कण्डूर्विदाहः पिटिकाः पीनसो वातविड्ग्रहः ।

अयोगलक्षणम्

अयोगो वैपरीत्ये यथोदितात् ॥ ३९ ॥
विट्पित्तकफवातेषु निःसृतेषु क्रमात्स्रवेत् ।
निःश्लेष्मपित्तमुदकं श्वेतं कृष्णं सलोहितम् ॥ ४० ॥
मांसधावनतुल्यं वा मेदःखण्डाभमेव वा ।
गुदनिःसरणं तृष्णा भ्रमो नेत्रप्रवेशनम् ॥ ४१ ॥
भवन्त्यतिविरिक्तस्य तथाऽतिवमनामयाः ।
सम्यग्विरिक्तमेनं च वमनोक्तेन योजयेत् ॥ ४२ ॥
धूमवर्ज्येन विधिना

ततो वमितवानिव ।
क्रमेणान्नानि भुञ्जानो भजेत्प्रकृतिभोजनम् ॥ ४३ ॥
मन्दवह्निमसंशुद्धमक्षामं दोषदुर्बलम् ।
अदृष्टजीर्णलिङ्गं च लङ्घयेत्पीतभेषजम् ॥ ४४ ॥
स्नेहस्वेदौषधोत्क्लेशसङ्गैरिति न बाध्यते ।
संशोधनास्रविस्रावस्नेहयोजनलङ्घनैः ॥ ४५ ॥
यात्यग्निर्मन्दतां तस्मात् क्रमं पेयादिमाचरेत् ।

---

१ 'अनुक्रमम्' इति पाठः।

स्नुताल्पपित्तश्लेष्माणं मद्यपं वातपैत्तिकम् ॥ ४६ ॥
पेयां न पाययेत्तेषां तर्पणादिक्रमो हितः ।
अपक्वं वमनं दोषान् पच्यमानं विरेचनम् ॥ ४७ ॥
निर्हरेद्वमनस्यातः पाकं न प्रतिपालयेत् ।
दुर्बलो बहुदोषश्च दोषपाकेन यः स्वयम् ॥ ४८ ॥
विरिच्यते भेदनीयैर्भोज्यैस्तमुपपादयेत् ।
दुर्बलः शोधितः पूर्वमल्पदोषः कृशो नरः ॥ ४९ ॥
अपरिज्ञातकोष्ठश्च पिबेन्मृद्वल्पमौषधम् ।
वरं तदसकृत्पीतमन्यथा संशयावहम् ॥ ५० ॥
हरेद्बहूंश्चलान् दोषानल्पानल्पान् पुनःपुनः ।
दुर्बलस्य मृदुद्रव्यैरल्पान् संशमयेत्तु तान् ॥ ५१ ॥
क्लेशयन्ति चिरं ते हि हन्युर्वैनमनिर्हृताः ।
मन्दाग्निं क्रूरकोष्ठं च सक्षारलवणैर्घृतैः ॥ ५२ ॥
सन्धुक्षिताग्निं विजितकफवातं च शोधयेत् ।
रूक्षबह्वनिलक्रूरकोष्ठव्यायामशीलिनाम् ॥ ५३ ॥
दीप्ताग्नीनां च भेषज्यमविरेच्यैव जीर्यति ।
तेभ्यो बस्तिं पुरा दद्यात्ततः स्निग्धं विरेचनम् ॥ ५४ ॥
शकृन्निर्हृत्य वा किंचित्तीक्ष्णाभिः फलवर्तिभिः ।
प्रवृत्तं हि मलं स्निग्धो विरेको निर्हरेत्सुखम् ॥ ५५ ॥
विषाभिघातपिटिकाकुष्ठशोफविसर्पिणः ।
कामलापाण्डुमेहार्तान्नातिस्निग्धान् विशोधयेत् ॥ ५६ ॥
सर्वान् स्नेहविरेकैश्च, रूक्षैस्तु स्नेहभावितान् ।

कर्मणां वमनादीनां पुनरप्यन्तरेऽन्तरे ॥ ५७ ॥
स्नेहस्वेदौ प्रयुञ्जीत, स्नेहमन्ते बलाय च ।
मलो हि देहादुत्क्लेश्य ह्रियते वाससो यथा ॥ ५८ ॥
स्नेहस्वेदैस्तथोत्क्लिष्टः शोध्यते शोधनैर्मलः ।
स्नेहस्वेदावनभ्यस्य कुर्यात्संशोधनं तु यः ॥ ५९ ॥
दारु शुष्कमिवाऽऽनामे शरीरं तस्य दीर्यते ॥ ५९½ ॥

बुद्धिप्रसादं बलमिन्द्रियाणां
धातुस्थिरत्वं ज्वलनस्य दीप्तिम् ।
चिराच्च पाकं वयसः करोति
संशोधनं सम्यगुपास्यमानम् ॥ ६०½ ॥"

## एकोनविंशोऽध्यायः ।

अथातो बस्तिविधिमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"वातोल्बणेषु दोषेषु वाते वा बस्तिरिष्यते ।
उपक्रमाणां सर्वेषां सोऽग्रणीस्त्रिविधस्तु सः ॥ १ ॥
निरूहोऽन्वासनं बस्तिरुत्तरः
तेन साधयेत् ।
गुल्मानाहखुडप्लीहशुद्धातीसारशूलिनः ॥ २ ॥
जीर्णज्वरप्रतिश्यायशुक्रानिलमलग्रहान् ।
वर्ध्माश्मरीरजोनाशान् दारुणांश्चानिलामयान् ॥ ३ ॥

अनास्थाप्यास्त्वतिस्निग्धः क्षतोरस्को भृशं कृशः ।
आमातिसारी वमिमान् संशुद्धो दत्तनावनः ॥ ४ ॥
श्वासकासप्रसेकार्शोहिध्माध्मानाल्पवह्नयः ।
शूनपायुः कृताहारो बद्धच्छिद्रोदकोदरी ॥ ५ ॥
कुष्ठी च मधुमेही च मासान् सप्त च गर्भिणी ।
आस्थाप्या एव चान्वास्या विशेषादतिवह्नयः ॥ ६ ॥
रूक्षाः केवलवातार्ताः

नानुवास्यास्त एव च ।
येऽनास्थाप्यास्तथा पाण्डुकामलामेहपीनसाः ॥ ७ ॥
निरन्नप्लीहविड्भेदिगुरुकोष्ठकफोदराः ।
अभिष्यन्दिभृशस्थूलकृमिकोष्ठाढ्यमारुताः ॥ ८ ॥
पीते विषे गरेऽपच्यां श्लीपदी गलगण्डवान् ।
तयोस्तु नेत्रं हेमादिधातुदार्वस्थिवेणुजम् ॥ ९ ॥
गोपुच्छाकारमच्छिद्रं श्लक्ष्णर्जु गुलिकामुखम् ।
ऊनेऽब्दे पञ्च, पूर्णेऽक्षिप्तासप्तभ्योऽङ्गुलानि षट् ॥ १० ॥
सप्तमे सप्त, तान्यष्टौ द्वादशे, षोडशे नव ।
द्वादशैव परं विंशाद्वीक्ष्य वर्षान्तरेषु च ॥ ११ ॥
वयोबलशरीराणि प्रमाणमभिवर्धयेत् ।
स्वाङ्गुष्ठेन समं मूले स्थौल्येनाग्रे कनिष्ठया ॥ १२ ॥
पूर्णेऽब्देऽङ्गुलमादाय तदर्धार्धप्रवर्धितम् ।
त्र्यङ्गुलं परमं छिद्रं मूलेऽग्रे वहते तु यत् ॥ १३ ॥

---

१ 'कफोदरी' इति पाठः. २ 'न्दिकृश' इति पाठः.

मुद्गं माषं कलायं च क्लिन्नं कर्कन्धुकं क्रमात्।
मूलच्छिद्रप्रमाणेन प्रान्ते घटितकर्णिकम् ॥ १४ ॥
वर्त्याऽग्रे पिहितं, मूले यथास्वं द्व्यङ्गुलान्तरम्।
कर्णिकाद्वितयं नेत्रे कुर्यात्
　　　　तत्र च योजयेत् ॥ १५ ॥
[1]अजाविमहिषादीनां बस्तिं सुमृदितं दृढम्।
कषायरक्तं निश्छिद्रग्रन्थिगन्धसिरं तनुम् ॥ १६ ॥
ग्रथितं साधु सूत्रेण सुखसंस्थाप्यभेषजम्।
बस्त्यभावेऽङ्कपादं वा न्यसेद्वासोऽथवा घनम् ॥ १७ ॥
निरूहमात्रा प्रथमे प्रकुञ्चो [2]वत्सरे परम्।
प्रकुञ्चवृद्धिः प्रत्यब्दं यावत्षट्प्रसृतास्ततः ॥ १८ ॥
प्रसृतं वर्धयेदूर्ध्वं द्वादशाष्टादशस्य तु।
आसप्ततेरिदं मानं, दशैव प्रसृताः परम् ॥ १९ ॥
यथायथं निरूहस्य पादो मात्राऽनुवासने।
आस्थाप्यं स्नेहितं स्विन्नं शुद्धं लब्धबलं पुनः ॥ २० ॥
अन्वासनार्हं विज्ञाय पूर्वमेवानुवासयेत्।
शीते वसन्ते च दिवा रात्रौ केचित्ततोऽन्यदा ॥ २१ ॥
अभ्यक्तस्नातमुचितात्पादहीनं हितं लघु।
अस्निग्धरूक्षमशितं सानुपानं द्रवादि च ॥ २२ ॥
कृतचङ्क्रमणं मुक्तविण्मूत्रं शयने सुखे।
नात्युच्छ्रिते न चोच्छीर्षे संविष्टं वामपार्श्वतः ॥ २३ ॥

---

१ 'गोजावि' इति पाठः. २ 'वत्सरात्परम्' पाठः.

सङ्कोच्य दक्षिणं सक्थि प्रसार्य च ततोऽपरम् ।
अथास्य नेत्रं प्रणयेत्स्निग्धे स्निग्धमुखं गुदे ॥ २४ ॥
उच्छ्वास्य बस्तेर्वदने बद्धे हस्तमकम्पयन् ।
पृष्ठवंशं प्रति ततो नातिद्रुतविलम्बितम् ॥ २५ ॥
नातिवेगं न वा मन्दं सकृदेव प्रपीडयेत् ।
सावशेषं च कुर्वीत वायुः शेषे हि तिष्ठति ॥ २६ ॥
दत्ते तूत्तानदेहस्य पाणिना ताडयेत्स्फिजौ ।
तत्पार्ष्णिभ्यां तथा शय्यां पादतश्च त्रिरुत्क्षिपेत् ॥ २७ ॥
ततः प्रसारिताङ्गस्य सोपधानस्य पार्ष्णिके ।
आहन्यान्मुष्टिनाऽङ्गं च स्नेहेनाभ्यज्य मर्दयेत् ॥ २८ ॥
वेदनार्तमिति स्नेहो न हि शीघ्रं निवर्तते ।
योज्यः शीघ्रं निवृत्तेऽन्यः स्नेहोऽतिष्ठन्नकार्यकृत् ॥ २९ ॥
दीप्ताग्निं त्वागतस्नेहं सायाह्ने भोजयेल्लघु ।
निवृत्तिकालः परमस्त्रयो यामास्ततः परम् ॥ ३० ॥
अहोरात्रमुपेक्षेत, परतः फलवर्तिभिः ।
तीक्ष्णैर्वा बस्तिभिः कुर्याद्यत्नं स्नेहनिवृत्तये ॥ ३१ ॥
अतिरौक्ष्यादनागच्छन्न चेज्जाड्यादिदोषकृत् ।
उपेक्षेतैव हि ततोऽध्युषितश्च निशां पिबेत् ॥ ३२ ॥
प्रातर्नागरधान्याम्भः कोष्णं, केवलमेव वा ।
अन्वासयेत्तृतीयेऽह्नि पञ्चमे वा पुनश्च तम् ॥ ३३ ॥
यथा वा स्नेहपक्तिः स्यादतोऽत्युल्बणमारुतान् ।
व्यायामनित्यान् दीप्ताग्नीन् रूक्षांश्च प्रतिवासरम् ॥ ३४ ॥

"आध्मानसङ्कोचपुरीषबन्धक्षीणेन्द्रियत्वारुचिभङ्गशूलाः ।
पाङ्गुल्यशाखाश्रितवातभग्नबन्धाश्च साध्या ह्यनुवासनेन ॥"
इति स्नेहैस्त्रिचतुरैः स्निग्धे स्रोतोविशुद्धये ।
निरूहं शोधनं युञ्ज्यादस्निग्धे स्नेहनं तनोः ॥ ३५ ॥
पञ्चमेऽथ तृतीये वा दिवसे साधके शुभे ।
मध्याह्ने किञ्चिदावृत्ते प्रयुक्तं बलिमङ्गले ॥ ३६ ॥
अभ्यक्तस्वेदितोत्सृष्टमलं नातिबुभुक्षितम् ।
अवेक्ष्य पुरुषं दोषभेषजादीनि चादरात् ॥ ३७ ॥
बस्तिं प्रकल्पयेद्द्रव्यैस्तद्विद्यैर्बहुभिः सह ।
क्वाथयेद्विंशतिपलं द्रव्यस्याष्टौ फलानि च ॥ ३८ ॥
ततः क्वाथाच्चतुर्थांशं स्नेहं वाते प्रकल्पयेत् ।
पित्ते स्वस्थे च षष्ठांशमष्टमांशं कफेऽधिके ॥ ३९ ॥
सर्वत्र चाष्टमं भागं कल्कानां भवति वा यथा ।
नात्यच्छसान्द्रता बस्तेः पलमात्रं गुडस्य च ॥ ४० ॥
मधुपट्वादिशेषं च युक्त्या

सर्वं तदेकतः ।
उष्णाम्बुकुम्भीबाष्पेण तप्तं खजसमाहतम् ॥ ४१ ॥
प्रक्षिप्य बस्तौ प्रणयेत्पायौ नात्युष्णशीतलम् ।
नातिस्निग्धं न वा रूक्षं नातितीक्ष्णं न वा मृदु ॥ ४२ ॥
नात्यच्छसान्द्रं नोनातिमात्रं नापटु नाति च ।

---

१ 'स्तद्वैद्यै,' 'स्तद्विधैर्ब' इति पाठौ. २ 'वातेऽनु क' इति पा.

लवणं तद्वदम्लं च

पठन्त्यन्ये तु तद्विदः ॥ ४३ ॥

मात्रां त्रिपलिकां कुर्यात्स्नेहमाक्षिकयोः पृथक् ।

कर्षार्धं माणिमन्थस्य स्वस्थे कल्कपलद्वयम् ॥ ४४ ॥

सर्वद्रवाणां शेषाणां पलानि दश कल्पयेत् ।

माक्षिकं लवणं स्नेहं कल्कं क्वाथमिति क्रमात् ॥ ४५ ॥

आवपेत निरूहाणामेष संयोजने विधिः ।

उत्तानो दत्तमात्रे तु निरूहे तन्मना भवेत् ॥ ४६ ॥

कृतोपधानः सञ्जातवेगश्चोत्कटकः[१] सृजेत् ।

आगतौ परमः कालो मुहूर्तो मृत्यवे परम् ॥ ४७ ॥

तत्रानुलोमिकं स्नेहक्षारमूत्राम्लकल्पितम् ।

त्वरितं स्निग्धतीक्ष्णोष्णं बस्तिमन्यं प्रपीडयेत् ॥ ४८ ॥

विदध्यात्फलवर्तिं वा स्वेदनोत्रासनादि च ।

स्वयमेव निवृत्ते तु द्वितीयो बस्तिरिष्यते ॥ ४९ ॥

तृतीयोऽपि चतुर्थोऽपि यावद्वा सुनिरूढता[२] ।

विरिक्तवच्च योगादीन्विद्यात्

योगे तु भोजयेत्[३] ॥ ५० ॥

कोष्णेन वारिणा स्नातं[४] तनुधन्वरसौदनम् ।

विकारा ये निरूढस्य[५] भवन्ति प्रचलैर्मलैः ॥ ५१ ॥

---

१ 'श्चोत्कटुकः' 'श्चोत्कुटकः' 'श्चोत्कुटिकः' इति पाठाः. २ 'निरूढता' इति पाठः. ३ 'योजयेत' इति पाठः. ४ 'स्नानं' इति पाठः. ५ 'निरूहस्य' इति पाठः.

ते सुखोष्णाम्बुसिक्तस्य यान्ति भुक्तवतः शमम् ।
अथ वातार्दितं भूयः सद्य एवानुवासयेत् ॥ ५२ ॥
सम्यग्घीनातियोगाश्च तस्य स्युः स्नेहपीतवत् ।
किंचित्कालं स्थितो यश्च सपुरीषो निवर्तते ॥ ५३ ॥
सानुलोमानिलः स्नेहस्तत्सिद्धमनुवासनम् ।
एकं त्रीन् वा बलासे तु स्नेहबस्तीन् प्रकल्पयेत् ॥ ५४ ॥
पञ्च वा सप्त वा पित्ते, नवैकादश वाऽनिले ।
पुनस्ततोऽप्ययुग्मांस्तु पुनरास्थापनं ततः ॥ ५५ ॥
कफपित्तानिलेष्वन्नं यूषक्षीररसैः क्रमात् ।
वातघ्नौषधनिष्क्वाथत्रिवृतासैन्धवैर्युतः ॥ ५६ ॥
बस्तिरेकोऽनिले स्निग्धः स्वाद्वम्लोष्णो रसान्वितः ।
न्यग्रोधादिगणक्वाथपद्मकादिसितायुतौ ॥ ५७ ॥
पित्ते स्वादुहिमौ साज्यक्षीरेक्षुरसमाक्षिकौ ।
आरग्वधादिनिष्क्वाथवत्सकादियुतास्त्रयः ॥ ५८ ॥
रूक्षाः सक्षौद्रगोमूत्रास्तीक्ष्णोष्णकटुकाः कफे ।
त्रयस्ते सन्निपातेऽपि दोषान् घ्नन्ति यतः क्रमात् ॥ ५९ ॥
त्रिभ्यः परं बस्तिमतो नेच्छन्त्यन्ये चिकित्सकाः ।
न हि दोषश्चतुर्थोऽस्ति पुनर्दीयेत यं प्रति ॥ ६० ॥
उत्क्लेशनं शुद्धिकरं दोषाणां शमनं क्रमात् ।
त्रिधैव कल्पयेद्बस्तिमित्यन्येऽपि प्रचक्षते ॥ ६१ ॥
दोषौषधादिबलतः सर्वमेतत्प्रमाणयेत् ।

---

१ 'यस्य सपु' इति पाठः.

सम्यङ्निरूढलिङ्गं तु नासम्भाव्य निवर्तयेत् ॥ ६२ ॥
प्राक्स्नेह एकः पञ्चान्ते द्वादशास्थापनानि च ।
सान्वासनानि कर्मैवं बस्तयस्त्रिंशदीरिताः ॥ ६३ ॥
कालः पञ्चदशैकोऽत्र प्राक् स्नेहोऽन्ते त्रयस्तथा ।
षट् पञ्चबस्त्यन्तरिताः

योगोऽष्टौ बस्तयोऽत्र तु ॥ ६४ ॥
त्रयो निरूहाः स्नेहाश्च स्नेहावाद्यन्तयोरुभौ ।
स्नेहबस्तिं निरूहं वा नैकमेवाति शीलयेत् ॥ ६५ ॥
उत्क्लेशाग्निवधौ स्नेहान्निरूहान्मरुतो भयम् ।
तस्मान्निरूढः स्नेह्यः स्यान्निरूह्यश्चानुवासितः ॥ ६६ ॥
स्नेहशोधनयुक्त्यैवं बस्तिकर्म त्रिदोषजित् ।
ह्रस्वया स्नेहपानस्य मात्रया योजितः समः ॥ ६७ ॥
मात्राबस्तिः स्मृतः स्नेहः

शीलनीयः सदा च सः ।
बालवृद्धाध्वभारस्त्रीव्यायामासक्तचिन्तकैः[1] ॥ ६८ ॥
वातभग्नाबलाल्पाग्निनृपेश्वरसुखात्मभिः[2] ।
दोषघ्नो निष्परीहारो बल्यः सृष्टमलः सुखः ॥ ६९ ॥
बस्तौ रोगेषु नारीणां योनिगर्भाशयेषु च ।
द्वित्रास्थापनशुद्धेभ्यो विदध्याद्बस्तिमुत्तरम् ॥ ७० ॥
आतुराङ्गुलमानेन तन्नेत्रं द्वादशाङ्गुलम् ।
वृत्तं गोपुच्छवन्मूलमध्ययोः कृतकर्णिकम् ॥ ७१ ॥

---

१ 'भाष्यस्त्री' इति पाठः. २ 'नृपैश्वर्येषु' इति पाठः.

सिद्धार्थकप्रवेशाग्रं श्लक्ष्णं हेमादिसम्भवम् ।
कुन्दाश्वमारसुमनःपुष्पवृन्तोपमं दृढम् ॥ ७२ ॥
तस्य बस्तिर्मृदुलघुर्मात्रा शुक्तिर्विकल्प्य वा ।
अथ स्नाताशितस्यास्य स्नेहबस्तिविधानतः ॥ ७३ ॥
ऋजोः सुखोपविष्टस्य पीठे जानुसमे मृदौ ।
हृष्टे मेढ्रे स्थिते चर्जौ शनैः स्रोतोविशुद्धये ॥ ७४ ॥
सूक्ष्मां शलाकां प्रणयेत्तया शुद्धेऽनुसेवनि ।
आमेहनान्तं नेत्रं च निष्कम्पं गुदवत्ततः ॥ ७५ ॥
पीडितेऽन्तर्गते स्नेहे स्नेहबस्तिक्रमो हितः ।
बस्तीननेन विधिना दद्यात्त्रींश्चतुरोऽपि वा ॥ ७६ ॥
अनुवासनवच्छेषं सर्वमेवास्य चिन्तयेत् ।
स्त्रीणामार्तवकाले तु योनिर्गृह्णात्यपावृतेः ॥ ७७ ॥
विदधीत तदा तस्मादनृतावपि चात्यये ।
योनिविभ्रंशशूलेषु योनिव्यापद्यसृग्दरे ॥ ७८ ॥
नेत्रं दशाङ्गुलं मुद्गप्रवेशं चतुरङ्गुलम् ।
अपत्यमार्गे योज्यं स्याद् व्यङ्गुलं मूत्रवर्त्मनि ॥ ७९ ॥
मूत्रकृच्छ्रविकारेषु, बालानां त्वेकमङ्गुलम् ।
प्रकुञ्चो मध्यमा मात्रा, बालानां शुक्तिरेव तु ॥ ८० ॥
उत्तानायाः शयानायाः सम्यक् सङ्कोच्य सक्थिनी ।
ऊर्ध्वजान्वास्त्रिचतुरानहोरात्रेण योजयेत् ॥ ८१ ॥
बस्तींस्त्रिरात्रमेवं च स्नेहमात्रां विवर्धयन् ।

---

१ 'नुसीवनीम्' इति पाठः. २ 'तेऽनुगते' इति पाठः.

त्र्यहमेव च विश्रम्य प्रणिदध्यात्पुनस्त्र्यहम् ॥ ८२ ॥
पक्षाद्विरेको वमिते ततः पक्षान्निरूहणम् ।
सद्यो निरूढश्चान्वास्यः सप्तरात्राद्विरेचितः ॥ ८३ ॥
यथा कुसुम्भादियुतात्तोयाद्रागं हरेत्पटः ।
तथा द्रवीकृताद्देहाद्वस्तिर्निर्हरते मलान् ॥ ८४ ॥

शाखागताः कोष्ठगताश्च रोगा
मर्मोर्ध्वसर्वावयवाङ्गजाश्च ।
ये सन्ति तेषां न तु कश्चिदन्यो
वायोः परं जन्मनि हेतुरस्ति ॥ ८५ ॥
विट्श्लेष्मपित्तादिमलोच्चयानां[1]
विक्षेपसंहारकरः स यस्मात्[2] ।
तस्यातिवृद्धस्य शमाय नान्य-
द्वस्तेर्विना भेषजमस्ति किंचित् ॥ ८६ ॥
तस्माच्चिकित्सार्धं[3] इति प्रदिष्टः
कृत्स्ना चिकित्साऽपि च बस्तिरेकैः ।
तथा निजागन्तुविकारकारि-
रक्तौषधत्वेन सिराव्यधोऽपि ॥ ८७ ॥"

---

## विंशोऽध्यायः ।

अथातो नस्यविधिमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥

---

१ 'विण्मूत्रपि' पा. २ 'मलाशयानां' पा. ३ 'त्सार्धमिति' पा.

"ऊर्ध्वजत्रुविकारेषु विशेषान्नस्यमिष्यते ।
नासा हि शिरसो द्वारं तेन तद्व्याप्य हन्ति तान् ॥ १ ॥
विरेचनं बृंहणं च शमनं च त्रिधाऽपि तत् ।
"मर्शध्मानावपीडाख्यैस्तत्पुनः षड्विधं स्मृतम् ।"
विरेचनं शिरःशूलजाड्यस्यन्दगलामये ॥ २ ॥
शोफगण्डकृमिग्रन्थिकुष्ठापस्मारपीनसे ।
"स्नेहेन तीक्ष्णैः सिद्धेन कल्कक्काथादिभिश्च तत् ।"
बृंहणं वातजे शूले सूर्यावर्ते स्वरक्षये ॥ ३ ॥
नासास्यशोषे वाक्सङ्गे कृच्छ्रबोधेऽवबाहुके ।
शमनं नीलिकाव्यङ्गकेशदोषाक्षिराजिषु ॥ ४ ॥
यथास्वं यौगिकैः स्नेहैर्यथास्वं च प्रसाधितैः ।
कल्कक्काथादिभिश्चाद्यं मधुपट्वासवैरपि ॥ ५ ॥
बृंहणं धन्वमांसोत्थरसासृक्खपुरैरपि ।
शमनं योजयेत्पूर्वैः क्षीरेण सलिलेन वा ॥ ६ ॥
मर्शश्च प्रतिमर्शश्च द्विधा स्नेहोऽत्र मात्रया ।
कल्काद्यैरवपीडस्तु स तीक्ष्णैर्मूर्धरेचनः ॥ ७ ॥
ध्मानं विरेचनश्चूर्णो

युञ्ज्यात्तं मुखवायुना ।
षडङ्गुलद्विमुखया नाड्या भेषजगर्भया ॥ ८ ॥
स हि भूरितरं दोषं चूर्णत्वादपकर्षति ।
प्रदेशिन्यङ्गुलीपर्वद्वयान्मग्नसमुद्धृतात् ॥ ९ ॥

---

१ 'क्षिरोगिषु,' 'क्षिरोगजित्' इति पाठौ.

यावत्पतत्यसौ बिन्दुर्दशाष्टौ षट् क्रमेण ते ।
मर्शस्योत्कृष्टमध्योना मात्रास्ता एव च क्रमात् ॥ १० ॥
बिन्दुद्वयोनाः कल्कादेः
योजयेन्न तु नावनम् ।
तोयमद्यगरस्नेहपीतानां पातुमिच्छताम् ॥ ११ ॥
भुक्तभक्तशिरःस्नातस्नातुकामस्रुतासृजाम्[1] ।
नवपीनसवेगार्तसूतिकाश्वासकासिनाम् ॥ १२ ॥
शुद्धानां दत्तबस्तीनां तथाऽनार्तवदुर्दिने ।
अन्यत्रात्ययिकाद्व्याधेः
अथ नस्यं प्रयोजयेत् ॥ १३ ॥
प्रातः श्लेष्मणि, मध्याह्ने पित्ते, सायंनिशोश्चले ।
स्वस्थवृत्ते तु पूर्वाह्णे शरत्कालवसन्तयोः ॥ १४ ॥
शीते मध्यंदिने, ग्रीष्मे सायं वर्षासु सातपे ।
वाताभिभूते शिरसि हिध्मायामपतानके ॥ १५ ॥
मन्यास्तम्भे स्वरभ्रंशे सायंप्रातर्दिनेदिने ।
एकाहान्तरमन्यत्र
सप्ताहं च तदाचरेत् ॥ १६ ॥
स्निग्धस्विन्नोत्तमाङ्गस्य प्राकृतावश्यकस्य च ।
निवातशयनस्थस्य जत्रूर्ध्वं स्वेदयेत् पुनः ॥ १७ ॥
अथोत्तानर्जुदेहस्य पाणिपादे प्रसारिते ।
किंचिदुन्नतपादस्य किंचिन्मूर्धनि नामिते ॥ १८ ॥

---

१ 'भुक्ताभ्यक्त' इति पाठः.

नासापुटं पिधायैकं पर्यायेण निषेचयेत् ।
उष्णाम्बुतप्तं भैषज्यं प्रणाड्या पिचुनाऽथवा ॥ १९ ॥
दत्ते पादतलस्कन्धहस्तकर्णादि मर्दयेत् ।
शनैरुच्छिद्य निष्ठीवेत्पार्श्वयोरुभयोस्ततः ॥ २० ॥
आभेषजक्षयादेवं द्विस्त्रिर्वा नस्यमाचरेत् ।
मूर्च्छायां शीततोयेन सिञ्चेत्परिहरन् शिरः ॥ २१ ॥
स्नेहं विरेचनस्यान्ते दद्याद्दोषाद्यपेक्षया ।
नस्यान्ते वाक्शतं तिष्ठेदुत्तानः

धारयेत्ततः ॥ २२ ॥

धूमं पीत्वा कवोष्णाम्बुकवलान् कण्ठशुद्धये ।
सम्यक्स्निग्धे सुखोच्छ्वासस्वप्नबोधाक्षपाटवम् ॥ २३ ॥
रूक्षेऽक्षिस्तब्धता शोषो नासास्ये मूर्धशून्यता ।
स्निग्धेऽति कण्डुगुरुताप्रसेकारुचिपीनसाः ॥ २४ ॥
सुविरिक्तेऽक्षिलघुतावक्त्रस्वरविशुद्धयः ।
दुर्विरिक्ते गदोद्रेकः, क्षामताऽतिविरेचिते ॥ २५ ॥
प्रतिमर्शः क्षतक्षामबालवृद्धसुखात्मसु ।
प्रयोज्योऽकालवर्षेऽपि

न त्विष्टो दुष्टपीनसे ॥ २६ ॥

मद्यपीतेऽबलश्रोत्रे कृमिदूषितमूर्धनि ।
उत्कृष्टोत्क्लिष्टदोषे च, हीनमात्रतया[2] हि सः ॥ २७ ॥
निशाहर्भुक्तवान्ताहःस्वप्नाध्वश्रमरेतसाम् ।

१ 'प्रणाल्यापि' इति पाठः. २ 'मानतया' इति पाठः.

शिरोभ्यञ्जनगण्डूषप्रस्रावाञ्जनवर्चसाम् ॥ २८ ॥
दन्तकाष्ठस्य हासस्य योज्योऽन्तेऽसौ द्विबिन्दुकः ।
पञ्चसु स्रोतसां शुद्धिः, क्लमनाशस्त्रिषु क्रमात् ॥ २९ ॥
दृग्बलं पञ्चसु, ततो दन्तदार्ढ्यं मरुच्छमः ।
न नस्यमूनसप्ताब्दे नातीताशीतिवत्सरे ॥ ३० ॥
न चोनाष्टादशे धूमः, कवलो [1]नोनपञ्चमे ।
न शुद्धिरूनदशमे न चातिक्रान्तसप्ततौ ॥ ३१ ॥
आजन्ममरणं शस्तः प्रतिमर्शस्तु बस्तिवत् ।
मर्शवच्च गुणान् कुर्यात्स हि नित्योपसेवनात् ॥ ३२ ॥
न चात्र यन्त्रणा नापि व्यापद्भ्यो मर्शवद्भयम् ।
तैलमेव च नस्यार्थं नित्याभ्यासेन शस्यते ॥ ३३ ॥
शिरसः श्लेष्मधामत्वात्स्नेहाः स्वस्थस्य नेतरे ।
आशुकृच्चिरकारित्वं गुणोत्कर्षापकृष्टता ॥ ३४ ॥
मर्शे च प्रतिमर्शे च विशेषो न भवेद्यदि ।
को मर्शं सपरीहारं सापदं च भजेत्ततः ॥ ३५ ॥
अच्छपानविचाराख्यौ कुटीवातातपस्थिती ।
अन्वासमात्राबस्ती च तद्वदेव विनिर्दिशेत् ॥ ३६ ॥
"पटोलमुद्गवार्ताकहस्तमूलकजाङ्गलैः ।
रसैः शालियवानद्यान्नस्यकर्मणि षड्विधे ॥
उच्चैर्भाषणमायासमजीर्णासात्म्यभोजनम् ।
दत्तनस्यो नरः क्रोध यानादींश्च विवर्जयेत् ॥"

---

१ 'न्यूनप' इति पाठः.

जीवन्तीजलदेवदारुजलदत्वक्सेव्यगोपीहिमं
दार्वीत्वङ्मधुकप्लवागुरुवरीपुण्ड्राह्वबिल्वोत्पलम् ।
धावन्यौ सुरभिं स्थिरे क्रिमिहरं पत्रं त्रुटिं रेणुकां
किञ्जल्कं कमलाह्वलां शतगुणे दिव्येऽम्भसि क्वाथयेत् ॥
तैलाद्रसं दशगुणं परिशेष्य तेन
तैलं पचेत सलिलेन दशैव वारान् ।
पाके क्षिपेच्च दशमे सममाजदुग्धं
नस्यं महागुणमुशन्त्यणुतैलमेतत् ॥ ३८ ॥
घनोन्नतप्रसन्नत्वक्स्कन्धग्रीवास्यवक्षसः ।
दृढेन्द्रियास्त्वपलिता भवेयुर्नस्यशीलिनः ॥ ३९ ॥"

## एकविंशतितमोऽध्यायः ।

अथातो धूमपानविधिमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"जत्रूर्ध्वकफवातोत्थविकाराणामजन्मने ।
उच्छेदाय च जातानां पिबेद्धूमं सदाऽऽत्मवान् ॥ १ ॥
*स्निग्धो मध्यः स तीक्ष्णश्च, वाते वातकफे कफे ।
योज्यः*
न रक्तपित्तार्तिविरिक्तोदरमेहिषु ॥ २ ॥
तिमिरोर्ध्वानिलाध्मानरोहिणीदत्तबस्तिषु ।
मत्स्यमद्यदधिक्षीरक्षौद्रस्नेहविषाशिषु ॥ ३ ॥

शिरस्यभिहते पाण्डुरोगे जागरिते निशि ।
रक्तपित्ताऽऽन्ध्यबाधिर्यतृण्मूर्च्छामदमोहकृत् ॥ ४ ॥
धूमोऽकालेऽतिपीतो वा

तत्र शीतो विधिर्हितः ।
क्षुतजृम्भितविण्मूत्रस्त्रीसेवाशस्त्रकर्मणाम् ॥ ५ ॥
हासस्य दन्तकाष्ठस्य धूममन्ते पिबेन्मृदुम् ।
कालेष्वेषु निशाहारनावनान्ते च मध्यमम् ॥ ६ ॥
निद्रानस्याञ्जनस्नानच्छर्दितान्ते विरेचनम् ।
बस्तिनेत्रसमद्रव्यं त्रिकोशं कारयेदृजु ॥ ७ ॥
मूलाग्रेऽङ्गुष्ठकोलास्थिप्रवेशं धूमनेत्रकम् ।
तीक्ष्णस्नेहनमध्येषु त्रीणि चत्वारि पञ्च च ॥ ८ ॥
अङ्गुलानां क्रमात्पातुः प्रमाणेनाष्टकानि तत् ।
ऋजूपविष्टस्तच्चेता विवृतास्यस्त्रिपर्ययम् ॥ ९ ॥
पिधाय च्छिद्रमेकैकं धूमं नासिकया पिबेत् ।
प्राक् पिबेन्नासयोत्क्लिष्टे दोषे घ्राणशिरोगते ॥ १० ॥
उत्क्लेशनार्थं वक्त्रेण, विपरीतं तु कण्ठगे ।
मुखेनैवोद्वमेद्धूमं

नासया दृग्विघातकृत् ॥ ११ ॥
आक्षेपमोक्षैः पातव्यो धूमस्तु त्रिस्त्रिभिस्त्रिभिः ।
अह्नः पिबेत्सकृत् स्निग्धं, द्विर्मध्यं, शोधनं परम् ॥ १२ ॥
त्रिश्चतुर्वा

मृदौ तत्र द्रव्याण्यगुरुगुग्गुलु ।

मुस्तस्थौणेयशैलेयनलदोशीरवालकम् ॥ १३ ॥
वराङ्गकौन्तीमधुकबिल्वमज्जैलवालुकम् ।
श्रीवेष्टकं सर्जरसो ध्यामकं मदनं प्लवम् ॥ १४ ॥
शल्लकी कुङ्कुमं माषा यवाः कुन्दुरुकस्तिलाः ।
स्नेहः फलानां साराणां मेदो मज्जा वसा घृतम् ॥ १५ ॥
शमने शल्लकी लाक्षा पृथ्वीका कमलोत्पलम् ।
न्यग्रोधोदुम्बराश्वत्थप्लक्षरोध्रत्वचः सिता ॥ १६ ॥
यष्टीमधु सुवर्णत्वक् पद्मकं रक्तयष्टिका ।
गन्धाश्चाकुष्ठतगराः

तीक्ष्णे ज्योतिष्मती निशा ॥ १७ ॥
दशमूलमनोह्वालं लाक्षा श्वेता फलत्रयम् ।
गन्धद्रव्याणि तीक्ष्णानि गणो मूर्धविरेचनः ॥ १८ ॥
जले स्थितामहोरात्रमिषीकां द्वादशाङ्गुलाम् ।
पिष्टैर्धूमौषधैरेवं[1] पञ्चकृत्वः प्रलेपयेत् ॥ १९ ॥
वर्तिरङ्गुष्ठकस्थूला[2] यवमध्या यथा भवेत् ।
छायाशुष्कां विगर्भां तां स्नेहाभ्यक्तां यथायथम् ॥ २० ॥
धूमनेत्रार्पितां पातुमग्निप्लुष्टां प्रयोजयेत् ।
शरावसम्पुटच्छिद्रे नाडीं न्यस्य दशाङ्गुलाम् ॥ २१ ॥
अष्टाङ्गुलां वा वक्त्रेण कासवान् धूममापिबेत् ॥ २१½ ॥
कासः श्वासः पीनसो विस्वरत्वं
पूतिर्गन्धः पाण्डुता केशदोषाः ॥ २२ ॥

---

१ 'रेव प' इति पाठः. २ 'ष्ठपर्वस्थूला' इति पाठः.

कर्णास्याक्षिस्रावकण्डूर्तिजाड्यं
तन्द्रा हिध्मा धूमपं न स्पृशन्ति ॥ २२½ ॥"
"हृत्कण्ठेन्द्रियसंशुद्धिर्लाघवं शिरसः शमः ।
यथेरितानां दोषाणां सम्यक्पीतस्य लक्षणम् ॥"

## द्वाविंशतितमोऽध्यायः ।

अथातो गण्डूषादिविधिमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"चतुष्प्रकारो गण्डूषः स्निग्धः शमनशोधनौ ।
रोपणश्च
त्रयस्तत्र त्रिषु योज्याश्चलादिषु ॥ १ ॥
अन्त्यो व्रणघ्नः
स्निग्धोऽत्र स्वाद्वम्लपटुभावितः ।
स्नेहैः
संशमनस्तिक्तकषायमधुरौषधैः ॥ २ ॥
शोधनस्तिक्तकट्वम्लपटूष्णैः
रोपणः पुनः ।
कषायतिक्तकैः
तत्र स्नेहः क्षीरं मधूदकम् ॥ ३ ॥
शुक्तं मद्यं रसो मूत्रं धान्याम्लं च यथायथम् ।
कल्कैर्युक्तं विपक्वं वा यथास्पर्शं प्रयोजयेत् ॥ ४ ॥

दन्तहर्षे दन्तचाले मुखरोगे च वातिके ।
सुखोष्णमथवा शीतं तिलकल्कोदकं हितम् ॥ ५ ॥
गण्डूषधारणे
नित्यं तैलं मांसरसोऽथवा ।
ऊषाद्दाहान्विते पाके क्षते चागन्तुसम्भवे ॥ ६ ॥
विषे क्षाराग्निदग्धे च सर्पिर्धार्यं पयोऽथवा ।
वैशद्यं जनयत्याशु सन्दधाति मुखे व्रणान् ॥ ७ ॥
दाहतृष्णाप्रशमनं मधुगण्डूषधारणम् ।
धान्याम्लमास्यवैरस्यमलदौर्गन्ध्यनाशनम् ॥ ८ ॥
तदेवालवणं शीतं मुखशोषहरं परम् ।
आशु क्षाराम्बुगण्डूषो भिनत्ति श्लेष्मणश्चयम् ॥ ९ ॥
सुखोष्णोदकगण्डूषैर्जायते वक्त्रलाघवम् ।
निवाते सातपे स्विन्नमृदितस्कन्धकन्धरः ॥ १० ॥
गण्डूषमपिबन् किञ्चिदुन्नतास्यो विधारयेत् ।
कफपूर्णास्यता यावत्स्रवद्घ्राणाक्षताऽथवा ॥ ११ ॥
असञ्चार्यो मुखे पूर्णे गण्डूषः, कवलोऽन्यथा ।
मन्याशिरःकर्णमुखाक्षिरोगाः
प्रसेककण्ठामयवक्त्रशोषाः ।
हृल्लासतन्द्रारुचिपीनसाश्च
साध्या विशेषात्कवलग्रहेण ॥ १२ ॥

---

१ 'त्यास्ये स' इति पाठः.   २ 'मुखव्रणान्' इति पाठः.
३ 'मुखेऽपूर्णे' इति हेमाद्रिः.

कल्को रसक्रिया चूर्णंत्रिविधं प्रतिसारणम् ॥ १३ ॥
युञ्ज्यात्तत् कफरोगेषु गण्डूषविहितौषधैः ।
"व्याधेरपचयः पुष्टिर्वैशद्यं वक्त्रलाघवम् ।
इन्द्रियाणां प्रसादश्च कवले शुद्धिलक्षणम् ॥
हीनाज्जाड्य( नात् ध्मान )कफोत्क्लेशावरसज्ञानमेव च ।
अतियोगान्मुखे पाकः शोषतृष्णारुचिक्लमाः ॥"
मुखालेपस्त्रिधा दोषविषहा वर्णकृच्च

स: ॥ १४ ॥

उष्णो वातकफे शस्तः, शेषेष्वत्यर्थशीतलः ।
त्रिप्रमाणश्चतुर्भागत्रिभागार्धाङ्गुलोन्नतिः ॥ १५ ॥
अशुष्कस्य स्थितिस्तस्य, शुष्को दूषयति च्छविम् ।
तमार्द्रयित्वाऽपनयेत्तदन्तेऽभ्यङ्गमाचरेत् ॥ १६ ॥
विवर्जयेद्दिवास्वप्नभाष्याग्न्यातपशुक्क्रुधः ।
न योज्यः पीनसेऽजीर्णे दत्तनस्ये हनुग्रहे ॥ १७ ॥
अरोचके जागरिते

स तु हन्ति सुयोजितः ।
अकालपलितव्यङ्गवलीतिमिरनीलिकाः ॥ १८ ॥
कोलमज्जा वृषान्मूलं शाबरं गौरसर्षपाः ।
सिंहीमूलं तिलाः कृष्णा दार्वीत्वङ्निस्तुषा यवाः ॥ १९ ॥
दर्भमूलहिमोशीरशिरीषमिशितण्डुलाः ।
कुमुदोत्पलकह्लारदूर्वामधुकचन्दनम् ॥ २० ॥

---

१ 'चूर्णं त्रिविध' इति पाठः.

कालीयकतिलोशीरमांसीतगरपद्मकम् ।
तालीसगुन्द्रापुण्ड्राह्वयष्टीकाशनतागुरु ॥ २१ ॥
इत्यर्धार्धोदिता लेपा हेमन्तादिषु षट् स्मृताः ।
मुखालेपनशीलानां दृढं भवति दर्शनम् ॥ २२ ॥
वदनं चापरिम्लानं श्लक्ष्णं तामरसोपमम् ।
अभ्यङ्गसेकपिचवो बस्तिश्चेति चतुर्विधम् ॥ २३ ॥
मूर्धतैलम्

बहुगुणं तद्विद्यादुत्तरोत्तरम् ।
तत्राभ्यङ्गः प्रयोक्तव्यो रौक्ष्य[1]कण्डूमलादिषु ॥ २४ ॥
अरूंषिकाशिरस्तोददाहपाकव्रणेषु तु ।
परिषेकः

पिचुः केशशातस्फुटनधूपने ॥ २५ ॥
नेत्रस्तम्भे च

बस्तिस्तु प्रसुप्त्यर्दितजागरे ।
नासास्यशोषे तिमिरे शिरोरोगे च दारुणे ॥ २६ ॥
विधिस्तस्य निषण्णस्य पीठे जानुसमे मृदौ ।
शुद्धाक्तस्विन्नदेहस्य दिनान्ते गव्यमाहिषम् ॥ २७ ॥
द्वादशाङ्गुलविस्तीर्णं चर्मपट्टं शिरःसमम् ।
आकर्णबन्धनस्थानं ललाटे वस्त्रवेष्टिते ॥ २८ ॥
चैलवेणिकया बद्ध्वा माषकल्केन लेपयेत् ।
ततो यथाव्याधि शृतं स्नेहं कोष्णं निषेचयेत् ॥ २९ ॥

१ 'रूक्षकण्डू' इति पाठः.

ऊर्ध्वं केशभुवो यावदङ्गुलम्

धारयेच्च तम् ।

आवक्त्रनासिकोत्क्लेदाद्दशाष्टौ षट् चलादिषु ॥ ३० ॥

मात्रासहस्राण्यरुजे स्वेकं

स्कन्धादि मर्दयेत् ।

मुक्तस्नेहस्य

परमं सप्ताहं तस्य सेवनम् ॥ ३१ ॥

धारयेत्पूरणं कर्णे कर्णमूलं विमर्दयन् ।

रुजः स्यान्मार्दवं यावन्मात्राशतमवेदने ॥ ३२ ॥

यावत्पर्येति हस्ताग्रं दक्षिणं जानुमण्डलम् ।

निमेषोन्मेषकालेन समं मात्रा तु सा स्मृता ॥ ३३ ॥

कचसदनसितत्वपिञ्जरत्वं

परिफुटनं शिरसः समीररोगान् ।

जयति, जनयतीन्द्रियप्रसादं

स्वरहनुमूर्धबलं च मूर्धतैलम् ॥ ३४ ॥"

---

## त्रयोविंशोऽध्यायः ।

अथात आश्चोतनाञ्जनविधिमध्यायं व्याख्यास्यामः ।

इति ह स्माहुरात्रेयादयो महर्षयः ।

"सर्वेषामक्षिरोगाणामादावाश्चोतनं हितम् ।

---

१ 'सेचनम्' इति पाठः. २ 'मात्रेण स' इति पाठः. ३ 'कचशदन', 'कचशतन' इति पाठौ.

रक्तोदकण्डूघर्षाश्रुदाहरागनिबर्हणम् ॥ १ ॥
उष्णं वाते, कफे कोष्णं, तच्छीतं रक्तपित्तयोः ।
निवातस्थस्य वामेन पाणिनोन्मील्य लोचनम् ॥ २ ॥
शुक्तौ प्रलम्बयाऽन्येन पिचुवर्त्या कनीनिके ।
दश द्वादश वा बिन्दून् द्व्यङ्गुलादवसेचयेत् ॥ ३ ॥
ततः प्रमृज्य मृदुना चैलेन, कफवातयोः ।
अन्येन कोष्णपानीयप्लुतेन स्वेदयेन्मृदु ॥ ४ ॥
अत्युष्णतीक्ष्णं रुग्रागदृङ्नाशायाक्षिसेचनम् ।
अतिशीतं तु कुरुते निस्तोदस्तम्भवेदनाः ॥ ५ ॥
कषायवर्त्मतां घर्षं कृच्छ्रादुन्मेषणं बहु ।
विकारवृद्धिमत्यल्पं संरम्भमपरिस्रुतम् ॥ ६ ॥
गत्वा सन्धिशिरोघ्राणमुखस्रोतांसि भेषजम् ।
ऊर्ध्वगात्रयने न्यस्तमपवर्तयते मलान् ॥ ७ ॥
अथाञ्जनं शुद्धतनोर्नेत्रमात्राश्रये मले ।
पक्वलिङ्गेऽल्पशोफातिकण्डूपैच्छिल्यलक्षिते ॥ ८ ॥
मन्दघर्षाश्रुरागेऽक्षिण प्रयोज्यं घनदूषिके ।
आर्ते पित्तकफासृग्भिर्मारुतेन विशेषतः ॥ ९ ॥
लेखनं रोपणं दृष्टिप्रसादनमिति त्रिधा ।

अञ्जनम्

लेखनं तत्र कषायाम्लपटूषणैः ॥ १० ॥

रोपणं तिक्तकैर्द्रव्यैः

१ 'हृद्रोग' इति पा. २ 'शिराग्रा' पा. ३ 'फातिकण्डू' पा.

स्वादुशीतैः प्रसादनम् ।

तीक्ष्णाञ्जनाभिसन्तप्ते नयने तत्प्रसादनम् ॥ ११ ॥

प्रयुज्यमानं लभते प्रत्यञ्जनसमाह्वयम् ।

वक्त्राकुला तनुर्मध्ये शलाका मुकुलानना ॥ १२ ॥

प्रशस्ता, लेखने ताम्री, रोपणे काललोहजा ।

अङ्गुली च, सुवर्णोत्था रूप्यजा च प्रसादने ॥ १३ ॥

"पिण्डस्य तीक्ष्णद्रव्यस्य मृदुद्रव्यकृतस्य च ।

हरेणुमात्रं द्विगुणं प्रमाणं कथयन्त्यपि ॥

रसक्रियायामप्येवं विडङ्गफलमात्रकम् ।

शलाकां द्विगुणां तीक्ष्णे चूर्णे च त्रिगुणां मृदौ ॥

पिण्डो रसक्रिया चूर्णस्त्रिधैवाञ्जनकल्पना ।

गुरौ मध्ये लघौ दोषे तां क्रमेण प्रयोजयेत् ॥ १४ ॥

हरेणुमात्रा पिण्डस्य वेल्लमात्रा रसक्रिया ।

तीक्ष्णस्य, द्विगुणं तस्य मृदुनः

चूर्णितस्य च ॥ १५ ॥

द्वे शलाके तु तीक्ष्णस्य, तिस्रस्तदितरस्य च ।

निशि स्वप्ने न मध्याह्ने म्लाने नोष्णगभस्तिभिः ॥ १६ ॥

अक्षिरोगाय दोषाः स्युर्वर्धितोत्पीडितद्रुताः ।

प्रातः सायं च तच्छान्त्यै व्यभ्रेऽर्केऽतोऽञ्जयेत्सदा ॥१७॥

वदन्त्यन्ये तु न दिवा प्रयोज्यं तीक्ष्णमञ्जनम् ।

---

१ 'ता' इति पा. २ 'स्वप्नेन मध्याह्ने पानाम्नोष्ण' इति पाठः.

विरेकदुर्बलं चक्षुरादित्यं प्राप्य सीदति ॥ १८ ॥
स्वप्नेन रात्रौ कालस्य सौम्यत्वेन च तर्पिता ।
शीतसात्म्या दृगाग्नेयी स्थिरतां लभते पुनः ॥ १९ ॥
अत्युद्रिक्ते बलासे तु लेखनीयेऽथवा गदे ।
काममह्न्यपि नात्युष्णे तीक्ष्णमक्ष्णि प्रयोजयेत् ॥ २० ॥
अश्मनो जन्म लोहस्य तत एव च तीक्ष्णता ।
उपघातोऽपि तेनैव तथा नेत्रस्य तेजसः ॥ २१ ॥
न रात्रावपि शीतेऽति नेत्रे तीक्ष्णाञ्जनं हितम् ।
दोषम[1]स्रा[2]वयेत्[3]स्तब्धं कण्डूजाड्यादिकारि तत् ॥ २२ ॥
नाञ्जयेद्भीतवमितविरिक्ताशितवेगिते ।
क्रुद्धज्वरिततान्ताक्षिशिरोरुक्शोकजागरे ॥ २३ ॥
अदृष्टेऽर्के शिरःस्नाते पीतयोर्धूममद्ययोः ।
अजीर्णेऽग्न्यर्कसन्तप्ते दिवासुप्ते पिपासिते ॥ २४ ॥
अतितीक्ष्णमृदुस्तोकबहुच्छघनकर्कशम् ।
अत्यर्थशीतलं तप्तमञ्जनं नावचारयेत् ॥ २५ ॥
अथानुन्मीलयन् दृष्टिमन्तः सञ्चारयेच्छनैः ।
अञ्जिते वर्त्मनी किञ्चिच्चालयेच्चैवमञ्जनम् ॥ २६ ॥
तीक्ष्णं व्याप्नोति सहसा, न चोन्मेषनिमेषणम् ।
निष्पीडनं च वर्त्मभ्यां क्षालनं वा समाचरेत् ॥ २७ ॥
अपेतौषधसंरम्भं निर्वृतं नयनं यदा ।
व्याधिदोषर्तुयोग्याभिरद्भिः प्रक्षालयेत्तदा ॥ २८ ॥

---

१ 'दोषं न स्रा' पा. २ 'स्रावयत्स्त' पा. ३ 'स्तम्भकण्डू' पा.

दक्षिणाङ्गुष्ठकेनाक्षि ततो वामं सवाससा ।
ऊर्ध्ववर्त्मनि सङ्गृह्य शोध्यं वामेन चेतरत् ॥ २९ ॥
वर्त्मप्रान्तोऽञ्जनाक्षेपो रोगान् कुर्यादतोऽन्यथा ।
कण्डूजाड्येऽञ्जनं तीक्ष्णं धूमं वा योजयेत् पुनः ॥ ३० ॥
तीक्ष्णाञ्जनाभितप्ते तु चूर्णं प्रत्यञ्जनं हिमम् ॥ ३०½ ॥"

## चतुर्विंशतितमोऽध्यायः ।

अथातस्तर्पणपुटपाकविधिमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥
"नयने ताम्यति स्तब्धे शुष्के रूक्षेऽभिघातिते ।
वातपित्तातुरे जिह्मे शीर्णपक्ष्माविलेक्षणे ॥ १ ॥
कृच्छ्रोन्मीलसिराहर्षसिरोत्पाततमोर्जुनैः ।
स्यन्दमन्थान्यतोवातवातपर्यायशुक्रकैः ॥ २ ॥
आतुरे शान्तरागाश्रुशूलसंरम्भदूषिके ।
निवाते तर्पणं योज्यं शुद्धयोर्मूर्धकाययोः ॥ ३ ॥
काले साधारणे प्रातः सायं चोत्तानशायिनः ।
यवमाषमयीं पालीं नेत्रकोशाद्बहिः समाम् ॥ ४ ॥
व्यङ्गुलोच्चां दृढां कृत्वा यथास्वं सिद्धमावपेत् ।
सर्पिर्निमीलिते नेत्रे तप्ताम्बुप्रविलायितम् ॥ ५ ॥
नक्तान्ध्यवाततिमिरकृच्छ्रबोधादिके वसाम् ।

---

१ 'प्रान्ताञ्जना' इति पाठः. २ 'र्यान्ततो' इति पाठः. ३ 'नातियोगे तु,' 'नातितप्ते' इति पाठौ. ४ 'हितम्' इति पाठः.

आपक्ष्माग्रात्

अथोन्मेषं शनकैस्तस्य कुर्वतः ॥ ६ ॥
मात्रा[1] विगुणयेत्तत्र वर्त्मसन्धिसितासिते ।
दृष्टौ च क्रमशो व्याधौ शतं त्रीणि च पञ्च च ॥ ७ ॥
शतानि सप्त चाष्टौ च, दश मन्थे, दशानिले ।
पित्ते षट्, स्वस्थवृत्ते च बलासे पञ्च धारयेत् ॥ ८ ॥
कृत्वाऽपाङ्गे ततो द्वारं स्नेहं पात्रे निगालयेत् ।
पिबेच्च धूमं, नेक्षेत व्योम रूपं च भास्वरम् ॥ ९ ॥
इत्थं प्रतिदिनं वायौ, पित्ते त्वेकान्तरं, कफे ।
स्वस्थे च द्व्यन्तरं दद्यादातृप्तेरिति योजयेत् ॥ १० ॥
प्रकाशक्षमता स्वास्थ्यं विशदं लघु लोचनम् ।
तृप्ते, विपर्ययोऽतृप्तेऽतितृप्ते श्लेष्मजा रुजः ॥ ११ ॥
स्नेहपीता तनुरिव क्लान्ता दृष्टिर्हि सीदति ।
तर्पणानन्तरं तस्मादृग्बलाधानकारिणम् ॥ १२ ॥
पुटपाकं प्रयुञ्जीत पूर्वोक्तेष्वेव[2] चक्ष्मसु ।
स वाते स्नेहनः, श्लेष्मसहिते लेखनो हितः ॥ १३ ॥
दृग्दौर्बल्येऽनिले पित्ते रक्ते स्वस्थे प्रसादनः ।
भूशयप्रसहानूपमेदोमज्जवसामिषैः ॥ १४ ॥
स्नेहनं पयसा पिष्टैर्जीवनीयैश्च कल्पयेत् ।
मृगपक्षियकृन्मांसमुक्तायस्ताम्रसैन्धवैः ॥ १५ ॥

---

१ 'मात्रां' इति पाठः. २ 'क्तेषु च य' 'क्तेष्वेषु' इति पाठौ.

स्रोतोजशङ्खफेनालैर्लेखनं मस्तुकल्कितैः ।
मृगपक्षियकृन्मज्जवसास्रहृदयामिषैः ॥ १६ ॥
मधुरैः सघृतैः स्तन्यक्षीरपिष्टैः प्रसादनम् ।
बिल्वमात्रं पृथक् पिण्डं मांसभेषजकल्कयोः ॥ १७ ॥
उरुबूकवटाम्भोजपत्रैः स्नेहादिषु क्रमात् ।
वेष्टयित्वा मृदा लिप्तं धवधन्वनगोमयैः ॥ १८ ॥
पचेत्प्रदीप्तैरङ्गाभं पक्वं निष्पीड्य तद्रसम् ।
नेत्रे तर्पणवद्युञ्ज्यात्

शतं द्वे त्रीणि धारयेत् ॥ १९ ॥

लेखनस्नेहनाख्येषु

कोष्णौ पूर्वौ, हिमोऽपरः ।

धूमपोऽन्ते तयोरेव

योगास्तत्र च तृप्तिवत् ॥ २० ॥

तर्पणं पुटपाकं च नस्यानर्हे न योजयेत् ।
यावन्त्यहानि युञ्जीत द्विस्ततो हितभाग्भवेत् ॥ २१ ॥
मालतीमल्लिकापुष्पैर्बद्धाक्षो निवसेन्निशाम् ॥ २१½ ॥

सर्वात्मना नेत्रबलाय यत्नं
कुर्वीत नस्याञ्जनतर्पणाद्यैः ।
दृष्टिश्च नष्टा विविधं जगच्च
तमोमयं जायत एकरूपम् ॥ २२½ ॥"

## पञ्चविंशतितमोऽध्यायः ।

अथातो यन्त्रविधिमध्यायं व्याख्यास्यामः ।

इति ह स्माहुरात्रेयादयो महर्षयः ॥

"नानाविधानां शल्यानां नानादेशप्रबाधिनाम् ।
आहर्तुमभ्युपायो यत्तद्यन्त्रं यच्च दर्शने ॥ १ ॥
अर्शोभगन्दरादीनां शस्त्रक्षाराग्नियोजने ।
शेषाङ्गपरिरक्षायां तथा बस्त्यादिकर्मणि ॥ २ ॥
घटिकालाबुशृङ्गं च जाम्बवौष्ठादिकानि च ।
अनेकरूपकार्याणि यन्त्राणि विविधान्यतः ॥ ३ ॥
विकल्प्य कल्पयेद्बुद्ध्या
यथास्थूलं तु वक्ष्यते ।
तुल्यानि कङ्कसिंहर्क्षकाकादिमृगपक्षिणाम् ॥ ४ ॥
मुखैर्मुखानि यन्त्राणां कुर्यात्तत्संज्ञकानि च ।
अष्टादशाङ्गुलायामान्यायसानि च भूरिशः ॥ ५ ॥
मसूराकारपर्यन्तैः कण्ठे बद्धानि कीलकैः ।
विद्यात्स्वस्तिकयन्त्राणि मूलेऽङ्कुशनतानि च ॥ ६ ॥
तैर्दृढैरस्थिसंलग्नशल्याहरणमिष्यते ।
कीलबद्धविमुक्ताग्रौ सन्दंशौ षोडशाङ्गुलौ ॥ ७ ॥
त्वक्सिरास्नायुपिशितलग्नशल्यापकर्षणौ ।
षडङ्गुलोऽन्यो हरणे सूक्ष्मशल्योपपक्ष्मणाम् ॥ ८ ॥
मुचुण्डी सूक्ष्मदन्तर्जुर्मूले रुचकभूषणा ।

---

१ 'शनिभानि' पा. २ 'मुचुण्टी' 'भ्रुचुण्डी' 'मुचुटी' पाठाः.

गम्भीरव्रणमांसानामर्मणः शोषितस्य च ॥ ९ ॥
द्वे द्वादशाङ्गुले मत्स्यतालवत् ह्येकतालके ।
तालयन्त्रे स्मृते कर्णनाडीशल्यापहारिणी ॥ १० ॥
नाडीयन्त्राणि सुषिराण्येकानेकमुखानि च ।
स्रोतोगतानां शल्यानामामयानां च दर्शने ॥ ११ ॥
क्रियाणां सुकरत्वाय कुर्यादाचूषणाय च ।
तद्विस्तारपरीणाहदैर्घ्यं स्रोतोनुरोधतः ॥ १२ ॥
दशाङ्गुलाऽर्धनाहाऽन्तःकण्ठशल्यावलोकिनी ।
नाडी

पञ्चमुखच्छिद्रा चतुष्कर्णस्य सङ्ग्रहे ॥ १३ ॥
वारङ्गस्य, द्विकर्णस्य त्रिच्छिद्रा तत्प्रमाणतः ।
वारङ्गकर्णसंस्थानानाहदैर्घ्यानुरोधतः ॥ १४ ॥
नाडीरेवंविधाश्चान्या द्रष्टुं शल्यानि कारयेत् ।
पद्मकर्णिकया मूर्ध्नि सदृशी द्वादशाङ्गुला ॥ १५ ॥
चतुर्थसुषिरा नाडी शल्यनिर्घातिनी मता ।
अर्शसां गोस्तनाकारं यन्त्रकं चतुरङ्गुलम् ॥ १६ ॥
नाहे पञ्चाङ्गुलं पुंसां प्रमदानां षडङ्गुलम् ।
द्विच्छिद्रं दर्शने व्याधेरेकच्छिद्रं तु कर्मणि ॥ १७ ॥
मध्येऽस्य त्र्यङ्गुलं छिद्रमङ्गुष्ठोदरविस्तृतम् ।
अर्धाङ्गुलोच्छ्रितोवृत्तकर्णिकं च तदूर्ध्वतः ॥ १८ ॥
शम्याख्यं तादृगच्छिद्रं यन्त्रमर्शःप्रपीडनम् ।

---

१ 'तालु' इति पाठः. २ 'पकर्षणी' इति पाठः.

सर्वथाऽपनयेदोष्ठं छिद्रादूर्ध्वं भगन्दरे ॥ १९ ॥
घ्राणार्बुदार्शसामेकच्छिद्रा नाड्यङ्गुलद्वया ।
प्रदेशिनीपरीणाहा स्याद्भगन्दरयन्त्रवत् ॥ २० ॥
अङ्गुलित्राणकं दान्तं वार्क्षं वा चतुरङ्गुलम् ।
द्विच्छिद्रं गोस्तनाकारं तद्वक्त्रविवृतौ सुखम् ॥ २१ ॥
योनिव्रणेक्षणं मध्ये सुषिरं षोडशाङ्गुलम् ।
मुद्राबद्धं चतुर्भित्तमम्भोजमुकुलाननम् ॥ २२ ॥
चतुःशलाकमाक्रान्तं मूले तद्विकसेन्मुखे ।
यन्त्रे नाडीव्रणाभ्यङ्गक्षालनाय षडङ्गुले ॥ २३ ॥
बस्तियन्त्राकृती मूले मुखेऽङ्गुष्ठकलायखे ।
अग्रतोऽकर्णिके मूले निबद्धमृदुचर्मणी ॥ २४ ॥
द्विद्वारा नलिका पिच्छनलिका वोदकोदरे ।
धूमबस्त्यादियन्त्राणि निर्दिष्टानि यथायथम् ॥ २५ ॥
त्र्यङ्गुलास्यं भवेच्छृङ्गं चूषणेऽष्टादशाङ्गुलम् ।
अग्रे सिद्धार्थकच्छिद्रं सुनद्धं चूचुकाकृति ॥ २६ ॥
स्याद्द्वादशाङ्गुलोऽलाबुर्नाहे त्वष्टादशाङ्गुलः ।
चतुस्त्र्यङ्गुलवृत्तास्यो दीप्तोऽन्तः श्लेष्मरक्तहृत् ॥ २७ ॥
तद्वद्घटी हिता गुल्मविलयोन्नमने च सा ।
शलाकाख्यानि यन्त्राणि नानाकर्माकृतीनि च ॥ २८ ॥

---

१ 'तुर्भिन्नम,' 'तुष्कोणम' इति पाठौ. २ 'का वा दको' इति पाठः. ३ 'तु' इति पाठः.

यथायोगप्रमाणानि
तेषामेषणकर्मणी ।
उभे गण्डूपदमुखे
स्रोतोभ्यः शल्यहारिणी ॥ २९ ॥
मसूरदलवक्त्रे द्वे स्यातामष्टनवाङ्गुले ।
शङ्कवः षट्
उभौ तेषां षोडशद्वादशाङ्गुलौ ॥ ३० ॥
व्यूहनेऽहिफणावक्त्रौ
द्वौ दशद्वादशाङ्गुलौ ।
चालने शरपुङ्खास्यौ
आहार्ये बडिशाकृती ॥ ३१ ॥
नतोऽग्रे शङ्कुना तुल्यो गर्भशङ्कुरिति स्मृतः ।
अष्टाङ्गुलायतस्तेन मूढगर्भं हरेत् स्त्रियाः ॥ ३२ ॥
अश्मर्याहरणं सर्पफणावद्वक्रमग्रतः ।
शरपुङ्खमुखं दन्तपातनं चतुरङ्गुलम् ॥ ३३ ॥
कार्पासविहितोष्णीषाः शलाकाः षट् प्रमार्जने ।
पाय्वास्यकर्णदूरार्थे द्वे दशद्वादशाङ्गुले ॥ ३४ ॥
द्वे षट्सप्ताङ्गुले घ्राणे, द्वे कर्णेऽष्टनवाङ्गुले ।
कर्णशोधनमश्वत्थपत्रप्रान्तं स्रुवाननम् ॥ ३५ ॥
शलाकाजाम्बवौष्ठानां क्षारेऽग्नौ च पृथक् त्रयम् ।

---

१ 'कर्मणि' इति पाठः. २ 'द्वक्रम' इति पाठः.

शुञ्ज्यात् स्थूलाणुदीर्घाणां
शलाकामुखवर्त्मनि ॥ ३६ ॥
मध्योर्ध्ववृत्तदण्डां च मूले चार्धेन्दुसन्निभाम् ।
कोलास्थिदलतुल्यास्या नासार्शोऽर्बुददाहकृत् ॥ ३७ ॥
अष्टाङ्गुला निम्नमुखास्तिस्रः क्षारौषधक्रमे ।
[1]कनीनीमध्यमानामीनखमानसमैर्मुखैः ॥ ३८ ॥
स्वंस्वमुक्तानि यन्त्राणि मेढ्रगुह्यव्रणादिषु ।
[2]अनुयन्त्राण्ययस्कान्तरज्जुवस्त्राश्ममुद्गराः ॥ ३९ ॥
[3]वर्ध्राम्रजिह्वाबालाश्च[4] शाखानखमुखद्विजाः ।
कालः पाकः करः पादो भयं हर्षश्च, तत्क्रियाः ॥ ४० ॥
उपायवित्प्रविभजेदालोच्य निपुणं धिया ॥ ४०½ ॥
निर्घातनोन्मथनपूरणमार्गशुद्धि-
संव्यूहनाहरणबन्धनपीडनानि ।
आचूषणोन्नमननामनचालभङ्ग-
व्यावर्तनर्जुकरणानि च यन्त्रकर्म ॥ ४१½ ॥
विवर्तते साध्ववगाहते च
ग्राह्यं गृहीत्वोद्धरते च यस्मात् ।
यन्त्रेष्वतः कङ्कमुखं प्रधानं
स्थानेषु सर्वेष्वधिकारि[5] यच्च ॥ ४२½ ॥"

---

१ 'कनिष्ठाम' इति पा. २ 'अणुय' इति पा. ३ 'वध्यन्त्र' 'वर्मान्त्र' पाठौ. ४ 'काश्चशाखा' चन्द्रः. ५ 'ष्वविकारि' पा.

## षड्विंशोऽध्यायः ।

अथातः शस्त्रविधिमध्यायं व्याख्यास्यामः ॥

इति ह स्माहुरात्रेयादयो महर्षयः ॥

"षड्विंशतिः सुकर्मारैर्घटितानि यथाविधि ।
शस्त्राणि रोमवाहीनि बाहुल्येनाङ्गुलानि षट् ॥ १ ॥
सुरूपाणि सुधाराणि सुग्रहाणि च कारयेत् ।
अकरालानि सुध्मातसुतीक्ष्णावर्तितेऽयसि ॥ २ ॥
समाहितमुखाग्राणि नीलाम्भोजच्छवीनि च ।
नामानुगतरूपाणि सदा सन्निहितानि च ॥ ३ ॥
स्वोन्मानार्धचतुर्थांशफलान्येकैकशोऽपि च ।
प्रायो द्विशाणि, युञ्जीत तानि स्थानविशेषतः ॥ ४ ॥
( मण्डलाग्रं वृद्धिपत्रमुत्पलाध्यर्धधारके ।
सर्पैषण्यौ वेतसाख्यं शरार्यास्यत्रिकूर्चके ॥ १ ॥
कुशास्यं साटवदनमन्तर्वक्रार्धचन्द्रके ( कम् ) ।
व्रीहिमुखं कुठारी च शलाकाङ्गुलिशस्त्रके ॥ २ ॥
बडिशं करपत्राख्यं कर्तरी नखशस्त्रकम् ।
दन्तलेखनकं सूच्यः कूर्चो नाम खजाह्वयम् ॥ ३ ॥
आरा चतुर्विधाकारा तथा स्यात्कर्णवेधनी ( नम् ) ॥ )
मण्डलाग्रं फले तेषां तर्जन्यन्तर्नखाकृति ।
लेखने छेदने योज्यं पोथकीशुण्डिकादिषु ॥ ५ ॥
वृद्धिपत्रं क्षुराकारं छेदभेदनपाटने ।

---

१ 'समानार्ध' इति पाठः. २ केषुचित्पुस्तकेषूपलभ्योय ( ) चिन्हान्तर्गतः पाठः. २ 'फलं ते' इति पाठः.

ऋज्वग्रमुन्नते शोफे गम्भीरे च तदन्यथा ॥ ६ ॥
नताग्रं पृष्ठतो दीर्घह्रस्ववक्त्रं यथाश्रयम् ।
उत्पलाध्यर्धधाराख्ये भेदने छेदने तथा ॥ ७ ॥
सर्पास्यं घ्राणकर्णार्शश्छेदनेऽर्धाङ्गुलं फले ।
गतेरन्वेषणे श्लक्ष्णा गण्डूपदमुखैषणी ॥ ८ ॥
भेदनार्थेऽपरा सूचीमुखा मूलनिविष्टखा ।
वेतसं व्यधने

स्राव्ये *शरार्यास्यत्रिकूर्चके ॥ ९ ॥
*कुशाटावदने स्राव्ये द्व्यङ्गुलं स्यात्तयोः फलम् ।
तद्वद्दन्तमुखं तस्य फलमध्यर्धमङ्गुलम् ॥ १० ॥
अर्धचन्द्राननं चैतत्

तथाऽध्यर्धाङ्गुलं फले ।
व्रीहिवक्त्रं प्रयोज्यं च तत्सिरोदरयोर्व्यधे ॥ ११ ॥
पृथुः कुठारी गोदन्तसदृशार्धाङ्गुलानना ।
तयोर्ध्वदण्डया विध्येदुपर्यस्थ्नां स्थितां सिराम् ॥ १२ ॥
ताम्री शलाका द्विमुखी मुखे कुरुबकाकृतिः ।
लिङ्गनाशं तया विध्येत्

कुर्यादङ्गुलिशस्त्रकम् ॥ १३ ॥
मुद्रिकानिर्गतमुखं फलं त्वर्धाङ्गुलायतम् ।

---

* अरुणदत्तस्तु 'शरार्यास्यत्रिकूर्चके' इत्यत्र 'कुशाटावदने' इत्यत्र च क्रमेण 'शरार्यास्यं' इति 'कुशाटा' इति च पृथक्पद-मेकैकं च शस्त्रं यन्मन्यते तदसत्, सङ्ग्रहसुश्रुतादिविरुद्धत्वात्,

योगतो वृद्धिपत्रेण मण्डलाग्रेण वा समम् ॥ १४ ॥
तदग्रदेशिन्यग्रपर्वप्रमाणार्पणमुद्रिकम् ।
सूत्रबद्धं गलस्रोतोरोगच्छेदनभेदने ॥ १५ ॥
ग्रहणे शुण्डिकार्मादेर्बडिशं सुनताननम् ।
छेदेऽस्थ्नां करपत्रं तु खरधारं दशाङ्गुलम् ॥ १६ ॥
विस्तारे द्व्यङ्गुलं सूक्ष्मदन्तं सुत्सरुबन्धनम् ।
स्नायुसूत्रकचच्छेदे कर्तरी कर्तरीनिभा ॥ १७ ॥
वक्रर्जुधारं द्विमुखं नखशस्त्रं नवाङ्गुलम् ।
सूक्ष्मशल्योद्धृतिच्छेदभेदप्रच्छानलेखने ॥ १८ ॥
एकधारं चतुष्कोणं प्रबद्धाकृति चैकतः ।
दन्तलेखनकं तेन शोधयेद्दन्तशर्कराम् ॥ १९ ॥
वृत्ता गूढदृढाः पाशे तिस्रः सूच्योऽत्र सीवने ।
मांसलानां प्रदेशानां त्र्यस्रा त्र्यङ्गुलमायता ॥ २० ॥
अल्पमांसास्थिसन्धिस्थव्रणानां द्व्यङ्गुलायता ।
व्रीहिवक्त्रा धनुर्वक्रा पक्वामाशयमर्मसु ॥ २१ ॥
सा सार्धद्व्यङ्गुला

सर्वंवृत्तास्ताश्चतुरङ्गुलाः ।
कूर्चो वृत्तैकपीठस्थाः सप्ताष्टौ वा सुबन्धनाः ॥ २२ ॥
स योज्यो नीलिकाव्यङ्गकेशशातेषु कुट्टने ।
अर्धाङ्गुलमुखैर्वृत्तैरष्टाभिः कण्टकैः खजः ॥ २३ ॥

---

१ 'णार्पितमु' पाठः. २ 'प्रच्छन्नले' पाठः. ३ 'प्रवृद्धा' पाठः. ४ 'सर्वा वृत्ता' पाठः. ५ 'शातनकु' इति पाठः.

पाणिभ्यां मथ्यमानेन घ्राणात्तेन हरेदसृक्।
व्यधनं कर्णपालीनां यूथिकामुकुलाननम्॥ २४॥
आराऽर्धाङ्गुलवृत्तास्या तत्प्रवेशा तथोर्ध्वतः।
चतुरस्रा, तया विध्येच्छोफं पक्वामसंशये॥ २५॥
कर्णपालीं च बहलाम्

बहलायाश्च शस्यते।
सूची त्रिभागसुषिरा ऽ्यङ्गुला कर्णवेधनी॥ २६॥
जलौकःक्षारदहनकाचोपलनखादयः।
अलौहान्यनुशस्त्राणि, तान्येवं च विकल्पयेत्॥ २७॥
अपराण्यपि यन्त्रादीन्युपयोगं च यौगिकम्।
उत्पाट्यपाट्यसीव्यैष्यलेख्यप्रच्छानकुट्टनम्॥ २८॥
छेद्यं भेद्यं व्यधो मन्थो ग्रहो दाहश्च तत्क्रियाः।
कुण्ठखण्डतनुस्थूलह्रस्वदीर्घत्ववक्रताः॥ २९॥
शस्त्राणां खरधारत्वमष्टौ दोषाः प्रकीर्तिताः।
छेदभेदनलेख्यार्थं शस्त्रं वृन्तफलान्तरे॥ ३०॥
तर्जनीमध्यमाङ्गुष्ठैर्गृह्णीयात्सुसमाहितः।
विस्रावणानि वृन्ताग्रे तर्जन्यङ्गुष्ठकेन च॥ ३१॥
तलप्रच्छन्नवृन्ताग्रं ग्राह्यं व्रीहिमुखं मुखे।
मूलेष्वाहरणार्थानि क्रियासौकर्यतोऽपरम्॥ ३२॥
स्यात्षडङ्गुलविस्तारः सुघनो द्वादशाङ्गुलः।
क्षौमपत्रोर्णकौशेयदुकूलमृदुचर्मजः॥ ३३॥

---

१ 'व्यसेव्यै' इति पाठः. २ 'प्रच्छन्नकु' इति पाठः.

विम्बस्तपाशः सुस्यूतः सान्तरोर्णास्थशस्त्रकः ।
शलाकापिहितास्यश्च शस्त्रकोशः सुसञ्चयः ॥ ३४ ॥
जलौकसस्तु सुखिनां रक्तस्रावाय योजयेत् ।
दुष्टाम्बुमत्स्यभेकाहिशवकोथमलोद्भवाः ॥ ३५ ॥
रक्ताः श्वेता भृशं कृष्णाश्चपलाः स्थूलपिच्छिलाः ।
इन्द्रायुधविचित्रोर्ध्वराजयो रोमशाश्च ताः ॥ ३६ ॥
सविषा वर्जयेत्

ताभिः कण्डूपाकज्वरभ्रमाः ।

विषपित्तास्रनुत्कार्यं तत्र

शुद्धाम्बुजाः पुनः ॥ ३७ ॥

निर्विषाः शैवलश्यावा वृत्ता नीलोर्ध्वराजयः ।
कषायपृष्ठास्तन्वङ्ग्यः किंचित्पीतोदराश्च याः ॥ ३८ ॥
ता अप्यसम्यग्वमनात् प्रततं च निपातनात् ।
सीदन्तीः सलिलं प्राप्य रक्तमत्ता इति त्यजेत् ॥ ३९ ॥
अथेतरा निशाकल्कयुक्तेऽम्भसि परिप्लुताः ।
अवन्तिसोमे तक्रे वा पुनश्चाश्वासिता जले ॥ ४० ॥
लागयेद्धृतमृत्स्तन्यरक्तशस्त्रनिपातनैः ।
पिबन्तीरुन्नतस्कन्धाश्छादयेन्मृदुवाससा ॥ ४१ ॥
सम्पृक्ताद्दुष्टशुद्धास्राज्जलौका दुष्टशोणितम् ।
आदत्ते प्रथमं हंसः क्षीरं क्षीरोदकादिव ॥ ४२ ॥

---

१ 'कादिशव' इति पाठः. २ 'सीदन्ती स' इति पाठः.
३ 'काञ्जिकेये कालशेये' इति पा. ४ 'गयेत्पलमृ' इति पाठः.

(गुल्मार्शोविद्रधीन् कुष्ठवातरक्तगलामयान् ।
नेत्ररुग्विषवीसर्पान् शमयन्ति जलौकसः ॥)
दंशस्य तोदे कण्डूां वा मोक्षयेत्
वामयेच्च ताम् ।
पटुतैलाक्तवदनां श्लक्ष्णकण्डनरूषिताम् ॥ ४३ ॥
रक्षन् रक्तमदाद्भूयः सप्ताहं ता न पातयेत् ।
पूर्ववत् पटुता दार्ढ्यं सम्यग्वान्ते जलौकसाम् ॥ ४४ ॥
क्लमोऽतियोगान्मृत्युर्वा
दुर्वान्ते स्तब्धता मदः ।
अन्यत्रान्यत्र ताः स्थाप्या घटे मृत्स्नाम्बुगर्भिणि ॥ ४५ ॥
लालादिकोथनाशार्थं, सविषाः स्युस्तदन्वयात् ।
अशुद्धौ स्रावयेद्दंशान् हरिद्रागुडमाक्षिकैः ॥ ४६ ॥
शतधौताज्यपिचवस्ततो लेपाश्च शीतलाः ।
दुष्टरक्तापगमनात्सद्यो रागरुजां शमः ॥ ४७ ॥
अशुद्धं चलितं स्थानात्स्थितं रक्तं व्रणाशये ।
स्यैम्लीभवेत्पर्युषितं तस्मात्तत्स्रावयेत्पुनः ॥ ४८ ॥
शृङ्गजालाबुघटिका रक्ते पित्तेन दूषिते ।
तासामनलसंयोगात्
युञ्ज्यात्तु कफवायुना ॥ ४९ ॥
कफेन दुष्टं रुधिरं न शृङ्गेण विनिर्हरेत् ।

---

१ श्लोकोऽयमुपलभ्यते क्वचित्. २ 'रूक्षि' इति पाठः. ३ 'अम्ली' इति पाठः.

स्कन्नत्वात्

वातपित्ताभ्यां दुष्टं शृङ्गेण निर्हरेत् ॥ ५० ॥

गात्रं बद्धोपरि दृढं रज्ज्वा पट्टेन वा समम् ।

स्नायुसन्ध्यस्थिमर्माणि त्यजन् प्रच्छानमाचरेत् ॥ ५१ ॥

अधोदेशप्रविसृतैः पदैरुपरिगामिभिः ।

न गाढघनतिर्यग्भिर्न पदे पदमाचरन् ॥ ५२ ॥

प्रच्छानेनैकदेशस्थं ग्रथितं[1] जलजन्मभिः ।

हरेच्छृङ्गादिभिः सुप्तमसृग्व्यापि सिराव्यधैः ॥ ५३ ॥

प्रच्छानं पिण्डिते वा स्यात्

अवगाढे जलौकसः ।

त्वक्स्थेऽलाबुघटीशृङ्गम्

सिरैव व्यापकेऽसृजि ॥ ५४ ॥

वातादिधाम वा शृङ्गजलौकोलाबुभिः क्रमात् ।

स्रुतासृजः प्रदेहाद्यैः शीतैः स्याद्वायुकोपतः ॥ ५५ ॥

सतोदकण्डूः शोफस्तं सर्पिषोष्णेन सेचयेत् ॥ ५५½ ॥"

---

## सप्तविंशोऽध्यायः ।

अथातः सिराव्यधविधिमध्यायं व्याख्यास्यामः ।

इति ह स्माहुरात्रेयादयो महर्षयः ।

"मधुरं लवणं किंचिदशीतोष्णमसंहतम् ।

पद्मेन्द्रगोपहेमाविशशलोहितलोहितम् ॥ १ ॥

---

१ 'ग्रन्थितं' इति पाठः.

लोहितं प्रभवः[1] शुद्धं, तनोस्तेनैव च स्थितिः ।
तत्पित्तश्लेष्मलैः प्रायो दूष्यते
कुरुते ततः ॥ २ ॥
विसर्पविद्रधिप्लीहगुल्माग्निसदनज्वरान् ।
मुखनेत्रशिरोरोगमदतृड्लवणास्यताः ॥ ३ ॥
कुष्ठवातास्रपित्तास्रकट्वम्लोद्गिरणभ्रमान् ।
शीतोष्णस्निग्धरूक्षाद्यैरुपक्रान्ताश्च ये गदाः ॥ ४ ॥
सम्यक्साध्या न सिध्यन्ति[2] ते च रक्तप्रकोपजाः ।
तेषु स्रावयितुं रक्तमुद्रिक्तं व्यधयेत्सिराम् ॥ ५ ॥
न[3] तूनषोडशातीतसप्तत्यब्दस्रुतासृजाम् ।
अस्निग्धास्वेदितात्यर्थस्वेदितानिलरोगिणाम् ॥ ६ ॥
गर्भिणीसूतिकाजीर्णपित्तास्रश्वासकासिनाम् ।
अतीसारोदरच्छर्दिपाण्डुसर्वाङ्गशोफिनाम् ॥ ७ ॥
स्नेहपीते प्रयुक्तेषु तथा पञ्चसु कर्मसु ।
नायन्त्रितां सिरां विध्येन्न तिर्यङ्नाप्यनुत्थिताम्[4] ॥ ८ ॥
नातिशीतोष्णवाताभ्रेष्वन्यत्रात्ययिकाद्गदात् ।
शिरोनेत्रविकारेषु[5] ललाट्यां मोक्षयेत्सिराम् ॥ ९ ॥
अपाङ्ग्यामुपनास्यां[6] वा
कर्णरोगेषु कर्णजाम् ।

---

१ 'प्रवदेच्छुद्धं' इति पाठः. २ 'न्ति रक्तजांस्तान् विभावयेत्' इति पाठः. ३ 'न न्यून' पाठः. ४ 'नुच्छ्रिताम्' पाठः. ५ 'षु लालाट्या' इति पाठः. ६ 'ङ्ग्या उपनास्या वा' पाठः.

नासारोगेषु नासाग्रे स्थिताम्

नासाललाटयोः ॥ १० ॥

पीनसे

मुखरोगेषु जिह्वौष्ठहनुतालुगाः ।

जत्रूर्ध्वग्रन्थिषु ग्रीवाकर्णशङ्खशिरःश्रिताः ॥ ११ ॥

उरोपाङ्गललाटस्था[1] उन्मादे

ऽपस्मृतौ पुनः ।

हनुसन्धौ समस्ते वा सिरां भ्रूमध्यगामिनीम् ॥ १२ ॥

विद्रधौ पार्श्वशूले च पार्श्वकक्षास्तनान्तरे ।

तृतीयकेंऽसयोर्मध्ये

स्कन्धस्याधश्चतुर्थके ॥ १३ ॥

प्रवाहिकायां शूलिन्यां श्रोणितो द्व्यङ्गुले स्थिताम् ।

शुक्रमेढ्रामये मेढ्रे

ऊरुगां गलगण्डयोः ॥ १४ ॥

गृध्रस्यां जानुनोऽधस्तादूर्ध्वं वा चतुरङ्गुले ।

इन्द्रबस्तेरधोऽपच्यां द्व्यङ्गुले

चतुरङ्गुले ॥ १५ ॥

ऊर्ध्वं गुल्फस्य संधयतौ[2], तथा क्रोष्टुकशीर्षके ।

पाददाहे खुडे हर्षे विपाद्यां वातकण्टके ॥ १६ ॥

चिप्पे च द्व्यङ्गुले विध्येदुपरि क्षिप्रमर्मणः ।

---

१ 'स्थामुन्मादे' इति पाठः. २ 'सन्ध्यतौ' इति पाठः.

गृध्रस्यामिव विध्याध्याम्
यथोक्तानामदर्शने ॥ १७ ॥
मर्महीने यथासन्ने देशेऽन्यां व्यधयेत् सिराम् ।
अथ स्निग्धतनुः सज्जसर्वोपकरणो बली ॥ १८ ॥
कृतस्वस्त्ययनः स्निग्धरसान्नप्रतिभोजितः ।
अग्नितापातपस्विन्नो जानूच्चासनसंस्थितः ॥ १९ ॥
मृदुपट्टात्तकेशान्तो जानुस्थापितकूर्परः ।
मुष्टिभ्यां वस्त्रगर्भाभ्यां मन्ये गाढं निपीडयेत् ॥ २० ॥
दन्तप्रपीडनोत्कासगण्डाध्मानानि चाचरेत् ।
पृष्ठतो यन्त्रयेच्चैनं वस्त्रमावेष्टयन्नरः ॥ २१ ॥
कन्धरायां परिक्षिप्य[1] न्यस्यान्तर्वामतर्जनीम् ।
एषोऽन्तर्मुखवर्ज्यानां सिराणां यन्त्रणे विधिः ॥ २२ ॥
ततो मध्यमयाऽङ्गुल्या वैद्योऽङ्गुष्ठविमुक्तया ।
ताडयेत्
उत्थितां ज्ञात्वा स्पर्शाद्वाऽङ्गुष्ठपीडनैः[2] ॥ २३ ॥
कुठारीं लक्षयेन्मध्ये वामहस्तगृहीतया ।
फलोद्देशे सुनिष्कम्पं सिरां, तद्वच्च मोक्षयेत् ॥ २४ ॥
ताडयन् पीडयंश्चैनां[3]
विध्येद्व्रीहिमुखेन तु ।
अङ्गुष्ठेनोन्नमय्याग्रे नासिकामुपनासिकाम् ॥ २५ ॥

---

१ 'प्य तस्या' इति पाठः. २ 'स्पर्शाङ्गुष्ठप्रपीडनैः' इति पाठः. ३ 'पीडयन् वैनां' इति पाठः.

अभ्युन्नतविदष्टाग्रजिह्वस्याधस्तदाश्रयाम् ।
यन्त्रयेत्स्तनयोरूर्ध्वं ग्रीवाश्रितसिराव्यधे ॥ २६ ॥
पाषाणगर्भहस्तस्य जानुस्थे प्रसृते भुजे ।
कुक्षेरारभ्य मृदिते विध्येद्बद्धोर्ध्वपट्टके ॥ २७ ॥
विध्येद्धस्तसिरां बाहावनाकुञ्चितकूर्परे ।
बद्ध्वा सुखोपविष्टस्य मुष्टिमङ्गुष्ठगर्भिणम् ॥ २८ ॥
ऊर्ध्वं वेध्यप्रदेशाच्च पट्टिकां चतुरङ्गुले ।
विध्येदालम्बमानस्य बाहुभ्यां पार्श्वयोः सिराम् ॥ २९ ॥
प्रहृष्टे मेहने

जङ्घासिरां जानुन्यकुञ्चिते ।
पादे तु सुस्थितेऽधस्ताज्जानुसन्धेर्निपीडिते ॥ ३० ॥
गाढं कराभ्यामागुल्फं चरणे तस्य चोपरि ।
द्वितीये कुञ्चिते किंचिदारूढे हस्तवत्ततः ॥ ३१ ॥
बद्ध्वा विध्येत्सिराम्

इत्थमनुक्तेष्वपि कल्पयेत् ।
तेषु तेषु प्रदेशेषु तत्तद्यन्त्रमुपायवित् ॥ ३२ ॥
मांसले निक्षिपेद्देशे व्रीह्यास्यं व्रीहिमात्रकम् ।
यवार्धमस्थ्नामुपरि सिरां विध्येत् कुठारिकाम् ॥ ३३ ॥
सम्यग्विद्धा स्रवेद्धारां यन्त्रे मुक्ते तु न स्रवेत् ।

---

१ 'गर्भिणीम्' इति पाठः. २ 'तु भूस्थिते' इति पाठः. ३ 'विध्येत्' इति पाठः. ४ 'कुठारया' इति पाठः. ५ 'सम्यग्विद्धे स्रवेद्धारा' इति पाठः.

अल्पकालं वहत्यल्पं, दुर्विद्धा तैलचूर्णनैः[1] ॥ ३४ ॥
सशब्दमतिविद्धा तु स्रवेद्दुःखेन धार्यते ।
भीमूर्च्छायन्त्रशैथिल्यकुण्ठशस्त्रातितृप्तयः ॥ ३५ ॥
क्षामत्ववेगिताऽस्वेदा रक्तस्यास्रुतिहेतवः ।
असम्यगस्रे स्रवति वेल्लव्योषनिशानतैः ॥ ३६ ॥
सागारधूमलवणतैलैर्दिह्यात्सिरामुखम् ।
सम्यक्प्रवृत्ते कोष्णेन तैलेन लवणेन च ॥ ३७ ॥
अग्रे स्रवति दुष्टास्रं कुसुम्भादिव पीतिका ।
सम्यक्स्रुत्वा स्वयं तिष्ठेच्छुद्धं तदिति नाहरेत् ॥ ३८ ॥
यन्त्रं विमुच्य मूर्च्छायां वीजिते व्यजनैः पुनः ।
स्रावयेन्मूर्च्छति पुनस्त्वपरेद्युस्त्र्यहेऽपि वा ॥ ३९ ॥
वाताच्छ्यावारुणं रूक्षं वेगस्राव्यच्छफेनिलम् ।
पित्तात् पीतासितं विस्रमस्कन्द्यौष्ण्यात्सचन्द्रिकम्[2] ॥४०॥
कफात् स्निग्धमसृक्पाण्डु तन्तुमत्पिच्छिलं घनम् ।
संसृष्टलिङ्गं संसर्गात्
त्रिदोषं मलिनाविलम् ॥ ४१ ॥[3]
अशुद्धौ[4] बलिनोऽप्यस्रं न प्रस्थात्स्रावयेत्परम् ।

---

१ 'चूर्णितैः' इति पाठः. २ 'चन्द्रकम्' इति पाठः. ३ 'वातिकं शोणितं शीघ्रं भूमिः पिबति चावृतम् । मक्षिकाणामकान्तं च रक्तं भवति पैत्तिकम् ॥ श्लैष्मिकं मक्षिकाक्रान्तं शुष्यत्यपि न चेणयत् (?) ।' एतत्पाठान्तरीभूतोऽयं वर्तते. ४ अशुद्धं इति पाठः.

अतिस्रुतौ हि मृत्युः स्याद्दारुणा वा चलामयाः ॥ ४२ ॥
तत्राभ्यङ्गरसक्षीररक्तपानानि भेषजम् ।
स्रुते रक्ते शनैर्यन्त्रमपनीय हिमाम्बुना ॥ ४३ ॥
प्रक्षाल्य तैलप्लोताक्तं बन्धनीयं सिरामुखम् ।
अशुद्धं[1] स्रावयेद्भूयः सायमह्न्यपरेऽपि वा ॥ ४४ ॥
स्नेहोपस्कृतदेहस्य पक्षाद्वा भृशदूषितम् ।
किंचिद्धि शेषे दुष्टास्रे नैव रोगोऽतिवर्तते ॥ ४५ ॥
सशेषमप्यतो धार्यं न चातिस्रुतिमाचरेत् ।
हरेच्छृङ्गादिभिः शेषम्

प्रसादमथवा नयेत् ॥ ४६ ॥
शीतोपचारपित्तास्रक्रियाशुद्धिविशोषणैः ।
दुष्टं रक्तमनुद्रिक्तमेवमेव प्रसादयेत् ॥ ४७ ॥
रक्ते त्वतिष्ठति क्षिप्रं स्तम्भनीमाचरेत्क्रियाम् ।
रोध्रप्रियङ्गुपत्तङ्गमाषयष्ट्याह्वगैरिकैः ॥ ४८ ॥
मृत्कपालाञ्जनक्षौममषीक्षीरित्वगङ्कुरैः ।
विचूर्णयेद्व्रणमुखं पद्मकादिहिमं पिबेत् ॥ ४९ ॥
तामेव वा सिरां विध्येद्व्यधात्तस्मादनन्तरम् ।
सिरामुखं वा त्वरितं दहेत्तप्तशलाकया ॥ ५० ॥

उन्मार्गगा यन्त्रनिपीडनेन
स्वस्थानमायान्ति पुनर्न यावत् ।

---

१ 'अशुद्धौ' इति पाठः.

दोषाः प्रदुष्टा रुधिरं प्रपन्ना-
स्तावद्धिताहारविहारभाक् स्यात् ॥ ५१ ॥
नात्युष्णशीतं लघु दीपनीयं
रक्तेऽपनीते हितमन्नपानम् ।
तदा शरीरं ह्यनवस्थितासृ-
गग्निर्विशेषादिति रक्षितव्यः ॥ ५२ ॥
प्रसन्नवर्णेन्द्रियमिन्द्रियार्था-
निच्छन्तमव्याहतपक्तृवेगम् ।
सुखान्वितं पुष्टिबलोपपन्नं
विशुद्धरक्तं पुरुषं वदन्ति ॥ ५३ ॥"

"रक्तजा व्यङ्गकुष्ठाद्याः कण्ठास्याक्षिशिरोगदाः ।
पलितालम्बिकाबाधाः शाम्यन्त्येते सिराव्यधात् ॥
निर्व्याधिनीलोत्पलपत्रनेत्रं सुव्यक्तमूलासितबद्धकेशम् ।
चन्द्रोपमं पद्मसुगन्धि वक्त्रं भवेल्ललाटे तु सिराव्यधेन ॥"

## अष्टाविंशतितमोऽध्यायः ।

अथातः शल्याहरणविधिमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।

"वक्रर्जुतिर्यगूर्ध्वाधः शल्यानां पञ्चधा गतिः ।
श्यामं शोफरुजावन्तं स्रवन्तं शोणितं मुहुः ॥ १ ॥
अभ्युन्नतं बुद्बुदवत्पिटिकोपचितं व्रणम् ।
मृदुमांसं च जानीयादन्तःशल्यं समासतः ॥ २ ॥

विशेषास्त्वग्गते शल्ये विवर्णः कठिनायतः ।
शोफो भवति
मांसस्थे चोषः शोफो विवर्धते ॥ ३ ॥
पीडनाक्षमता पाकः शल्यमार्गो न रोहति ।
पेश्यन्तरगते मांसप्राप्तवच्छ्वयथुं विना ॥ ४ ॥
आक्षेपः स्नायुजालस्य संरम्भस्तम्भवेदनाः ।
स्नायुगे दुर्हरं चैतत्
सिराध्मानं सिराश्रिते ॥ ५ ॥
स्वकर्मगुणहानिः स्यात्स्रोतसां स्रोतसि स्थिते ।
धमनीस्थेऽनिलो रक्तं फेनयुक्तमुदीरयेत् ॥ ६ ॥
निर्याति शब्दवान् स्याच्च हृल्लासः साङ्गवेदनः ।
सङ्घर्षो बलवानस्थिसन्धिप्राप्तेऽस्थिपूर्णता ॥ ७ ॥
नैकरूपा रुजोऽस्थिस्थे शोफः
तद्वच्च सन्धिगे ।
चेष्टानिवृत्तिश्च भवेत्
आटोपः कोष्ठसंश्रिते ॥ ८ ॥
आनाहोऽन्नशकृन्मूत्रदर्शनं च व्रणानने ।
विद्यान्मर्मगतं शल्यं मर्मविद्धोपलक्षणैः ॥ ९ ॥
यथास्वं च परिस्रावैस्त्वगादिषु विभावयेत् ।
स्रवते शुद्धदेहानामनुलोमस्थितं तु तत् ॥ १० ॥
दोषकोपाभिघातादिक्षोभाद्भूयोऽपि बाधते ।

१ 'स्नावगे' इति पाठः. २ 'संहर्षो' इति पाठः.

त्वङ्नष्टे यत्र तत्र स्युरभ्यङ्गस्वेदमर्दनैः ॥ ११ ॥
रागरुग्दाहसंरम्भा यत्र चाज्यं विलीयते ।
आशु शुष्यति लेपो वा तत्स्थानं शल्यवद्वदेत् ॥ १२ ॥
मांसप्रणष्टं संशुष्या कर्शनाच्छ्लथतां गतम् ।
क्षोभाद्रागादिभिः शल्यं लक्षयेत्

तद्वदेव च ॥ १३ ॥

पेश्यस्थिसन्धिकोष्ठेषु नष्टम्

अस्थिषु लक्षयेत् ।

अस्थ्नामभ्यञ्जनस्वेदबन्धपीडनमर्दनैः ॥ १४ ॥
प्रसारणाकुञ्चनतः सन्धिनष्टं तथाऽस्थिवत् ।
नष्टे स्नायुसिरास्रोतोधमनीष्वसमे पथि ॥ १५ ॥
अश्वयुक्तं रथं खण्डचक्रमारोप्य रोगिणम् ।
शीघ्रं नयेत्ततस्तस्य संरम्भाच्छल्यमादिशेत् ॥ १६ ॥
मर्मनष्टं पृथङ्नोक्तं तेषां मांसादिसंश्रयात् ।
सामान्येन सशल्यं तु क्षोभिण्या क्रियया सरुक् ॥ १७ ॥
वृत्तं पृथु चतुष्कोणं त्रिपुटं च समासतः ।
अदृश्यशल्यसंस्थानं व्रणाकृत्या विभावयेत् ॥ १८ ॥
तेषामाहरणोपायौ प्रतिलोमानुलोमकौ ।
अर्वाचीनपराचीने निर्हरेत्तद्विपर्ययात् ॥ १९ ॥
सुखाहार्यं यतश्छित्त्वा ततस्तिर्यग्गतं हरेत् ।

---

१ 'यत्र वाऽऽज्यं' इति अरुणः. २ 'आशुष्यति प्रलेपो वा' इति पाठः. ३ 'कर्षणाच्छु' इति पाठः. ४ 'अवाचीन' पाठः.

शल्यं न निर्घात्यमुरःकक्षावङ्क्षणपार्श्वगम् ॥ २० ॥
प्रतिलोममनूत्तुण्डं छेद्यं पृथुमुखं च यत् ।
नैवाहरेद्विशल्यघ्नं नष्टं वा निरुपद्रवम् ॥ २१ ॥
अथाहरेत्करप्राप्यं करेणैव

इतरत्पुनः ।
दृश्यं सिंहाहिमकरर्वामिककंटकाननैः ॥ २२ ॥
अदृश्यं व्रणसंस्थानाद्ग्रहीतुं शक्यते यतः ।
कङ्कभृङ्गाह्वकुररशरारीवायसाननैः ॥ २३ ॥
सन्दंशाभ्यां त्वगादिस्थम्

तालाभ्यां सुषिरं[1] हरेत् ।
सुषिरस्थं तु नलकैः

शेषं शेषैर्यथायथम् ॥ २४ ॥
शस्त्रेण वा विशस्यादौ ततो निर्लोहितं व्रणम् ।
कृत्वा घृतेन संस्वेद्य बद्ध्वाऽऽचारिकमादिशेत् ॥ २५ ॥
सिरास्नायुविलग्नं[2] तु चालयित्वा शलाकया ।
हृदये संस्थितं शल्यं त्रासितस्य हिमाम्बुना ॥ २६ ॥
ततः स्थानान्तरं प्राप्तमाहरेत्तद्यथायथम् ।
यथामार्गं दुराकर्षम्

अन्यतोऽप्येवमाहरेत् ॥ २७ ॥
अस्थिदष्टे[3] नरं पद्भ्यां पीडयित्वा विनिर्हरेत् ।

---

१ 'शुषिर' इति पाठः. २ 'स्नावि' इति पाठः. ३ 'अस्थि-नष्टे,' 'अस्थिस्थं न परं', 'अस्थिदष्टे' 'अस्थिलग्नं नरं' पाठाः.

इत्यशक्ये सुबलिभिः सुगृहीतस्य किङ्करैः ॥ २८ ॥
तथाऽप्यशक्ये वारङ्गं वक्रीकृत्य धनुर्ज्यया ।
सुबद्धं वक्रकटके बध्नीयात्सुसमाहितः ॥ २९ ॥
सुसंयतस्य पञ्चाङ्ग्या वाजिनः कशयाऽथ तम् ।
ताडयेदिति मूर्धानं वेगेनोन्नमयन्[1] यथा ॥ ३० ॥
उद्धरेच्छल्यम्

एवं वा शाखायां कल्पयेत्तरोः ।
बद्ध्वा दुर्बलवारङ्गं कुशाभिः शल्यमाहरेत् ॥ ३१ ॥
श्वयथुग्रस्तवारङ्गं शोफमुत्पीड्य युक्तितः ।
मुद्गराहतया नाड्या निर्घात्योत्तुण्डितं हरेत् ॥ ३२ ॥
[2]तैरेव चानयेन्मार्गममार्गोत्तुण्डितं तु यत् ।
मृदित्वा कर्णिनां कर्णं नाड्यास्येन निगृह्य वा ॥ ३३ ॥
अयस्कान्तेन निष्कर्णं विवृतास्यमृजुस्थितम् ।
पक्वाशयगतं शल्यं विरेकेण विनिर्हरेत् ॥ ३४ ॥
दुष्टवातविषस्तन्यरक्ततोयादि चूषणैः ।
कण्ठस्रोतोगते शल्ये सूत्रं कण्ठे प्रवेशयेत् ॥ ३५ ॥
बिसेनाक्ते ततः शल्ये बिसं सूत्रं समं हरेत् ।
नाड्याऽग्नितापितां क्षिप्त्वा शलाकामप्स्थिरीकृताम् ॥३६॥
आनयेज्जातुषं कण्ठात्

जतुदिग्[3]धामजातुषम् ।

---

१ 'मयेद्यथा' इति पाठः. २ 'तेनैव वा नये' इति हेमाद्रिः. ३ 'दिग्धम' इति पाठः.

केशोन्दुकेन[1] पीतेन द्रवैः कण्टकमाक्षिपेत् ॥ ३७ ॥
सहसा सूत्रबद्धेन वमतः

तेन चेतरत् ।
अशक्यं मुखनासाभ्यामाहर्तुं परतो नुदेत् ॥ ३८ ॥
अप्पानस्कन्धघाताभ्यां ग्रासशल्यं प्रवेशयेत् ।
सूक्ष्माक्षिव्रणशल्यानि क्षौमवालजलैर्हरेत् ॥ ३९ ॥
अपां पूर्णं विधुनुयादवाक्शिरसमायतम् ।
वामयेद्वामुखं[2] भस्मराशौ वा निखनेन्नरम् ॥ ४० ॥
कर्णेऽम्बुपूर्णे हस्तेन मथित्वा तैलवारिणी ।
क्षिपेदधोमुखं कर्णं हन्याद्वाऽऽचूषयेत्[3] वा ॥ ४१ ॥
कीटे स्रोतोगते कर्णं पूरयेल्लवणाम्बुना ।
सुक्तेन[4] वा सुखोष्णेन मृते क्लेदहरो विधिः ॥ ४२ ॥
जातुषं हेमरूप्यादिधातुजं च चिरस्थितम् ।
ऊष्मणा प्रायशः शल्यं देहजेन विलीयते ॥ ४३ ॥
मृद्वेणुदारुश्रृङ्गास्थिदन्तवालोपलानि[5] न ।
विषाणवेण्वयस्तालदारुशल्यं चिरादपि ॥ ४४ ॥
प्रायो निर्भुज्यते तद्धि पचत्याशु पलासृजी ।
शल्ये मांसावगाढे[6] चेत्स देशो न विदह्यते ॥ ४५ ॥

---

१ 'केशोण्डुकेन,' 'केशाण्डुकेन,' 'केशाण्डकेन' इति पाठाः. २ 'वामयेद्वाऽऽमुखं,' 'वामयेदामुखं,' 'वामयेद्वा सुखं' इति पाठाः. ३ 'येत्तदा' इति पाठः. ४ 'शुक्तेन' इति पाठः, ५ 'लादि न' इति पाठः. ६ 'ढे च स' इति पाठः.

ततस्तं मर्दनस्वेदशुद्धिकर्षण[1]बृंहणैः ।
तीक्ष्णोपनाहपानान्नघनशस्त्रपदाङ्कनैः ॥ ४६ ॥
पाचयित्वा हरेच्छल्यं पाटनैषण[2]भेदनैः ।
शल्यप्रदेशयन्त्राणामवेक्ष्य बहुरूपताम् ॥ ४७ ॥
तैस्तैरुपायैर्मतिमान् शल्यं विद्यात्तथा[3]ऽऽहरेत् ॥ ४७½ ॥"

---

## एकोनत्रिंशोऽध्यायः ।

अथातः शस्त्रकर्मविधिमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"व्रणः सञ्जायते प्रायः पाकाच्छ्वयथुपूर्वकात् ।
तमेवोपचरेत्तस्माद्रक्षन् पाकं प्रयत्नतः ॥ १ ॥
सुशीतलेपसेकास्रमोक्षसंशोधनादिभिः ।
शोफोऽल्पोऽल्पोष्मरुक्साम[4]ः सवर्णः कठिनः स्थिरः ॥ २ ॥
पच्यमानो विवर्णस्तु रागी बस्तिरिवाततः ।
स्फुटतीव सनिस्तोदः साङ्गमर्दविजृम्भिकः ॥ ३ ॥
संरम्भारुचिदाहोषातृड्ज्वरानिद्रतान्वितः ।
स्थानं विष्यन्दयत्याज्यं व्रणवत्स्पर्शनासहः ॥ ४ ॥
पक्वेऽल्पवेगता[5] म्लानिः[6] पाण्डुता वलिसम्भवः ।
नामोऽन्तेषून्नतिर्मध्ये कण्डूशोफादिमार्दवम् ॥ ५ ॥

---

१ 'कर्शनबृं' इति पाठः. २ 'णपीडनैः' इति पाठः. ३ 'त्ततो हरेत्' इति पाठः. ४ 'रुक्चाम' इति पाठः. ५ 'ल्पवेदना' इति पाठः. ६ 'ग्लानि' इति पाठः.

स्पृष्टे पूयस्य सञ्चारो भवेद्वस्ताविवाम्भसः ।
शूलं नर्तेऽनिलाद्दाहः पित्ताच्छोफः कफोदयात् ॥ ६ ॥
रागो रक्ताच्च पाकः स्यादतो दोषैः सशोणितैः ।
पाकेऽतिवृत्ते सुषिरस्तनुत्वग्दोषभक्षितः ॥ ७ ॥
वलीभिरान्वितः श्यावः[1] शीर्यमाणतनूरुहः ।
कफजेषु तु शोफेषु गम्भीरं पाकमेत्यसृक् ॥ ८ ॥
पक्वलिङ्गं ततोऽस्पष्टं यत्र स्याच्छीतशोफता ।
त्वक्सावर्ण्यं रुजोऽल्पत्वं घनस्पर्शत्वमश्मवत् ॥ ९ ॥
रक्तपाकमिति ब्रूयात्तं प्राज्ञो मुक्तसंशयः ।
अल्पसत्त्वेऽबले बाले पाकाद्वाऽत्यर्थमुद्धते[2] ॥ १० ॥
दारणं मर्मसन्ध्यादिस्थिते चान्यत्र पाटनम् ।
आमच्छेदे सिरास्नायुव्यापदोऽसृगतिस्रुतिः ॥ ११ ॥
रुजोऽतिवृद्धिर्दरणं विसर्पो वा क्षतोद्भवः ।
तिष्ठन्नन्तः पुनः पूयः सिरास्नाय्वसृगामिषम् ॥ १२ ॥
विवृद्धो दहति क्षिप्रं तृणोलपमिवानलः[3] ।
यश्छिनत्त्याममज्ञानाद्यश्च पक्वमुपेक्षते ॥ १३ ॥
श्वपचाविव विज्ञेयौ तावनिश्चितकारिणौ ।
प्राक् शस्त्रकर्मणश्चेष्टं[4] भोजयेदन्नमातुरम् ॥ १४ ॥
पानपं पाययेन्मद्यं तीक्ष्णं यो वेदनाक्षमः ।
न मूर्च्छत्यन्नसंयोगान्मत्तः शस्त्रं न बुध्यते ॥ १५ ॥

१ 'श्याम' पाठः. २ 'पाके चात्यर्थं' पाठः. ३ 'तृणोलुप', 'तृणोच्चय', 'तृणोपल' पाठाः. ४ "णश्रेष्ठं' पाठः.

अन्यत्र मूढगर्भाश्मसुखरोगोदरातुरात् ।
अथाहृतोपकरणं वैद्यः प्राङ्मुखमातुरम् ॥ १६ ॥
सम्मुखो यन्त्रयित्वाऽऽशु न्यस्येन्मर्मादि वर्जयन् ।
अनुलोमं सुनिशितं शस्त्रमापूयदर्शनात् ॥ १७ ॥
सकृदेवाहरेत्तच्च

पाके तु सुमहत्यपि ।
पाटयेत् व्यङ्गुलं सम्यग्व्यङ्गुलत्र्यङ्गुलान्तरम् ॥ १८ ॥
एषित्वा सम्यगेषिण्या परितः सुनिरूपितम् ।
अङ्गुलीनालवालैर्वा यथादेशं यथाशयम् ॥ १९ ॥
यतो[1] गतां गतिं विद्यादुत्सङ्गो यत्र यत्र च ।
तत्र तत्र व्रणं कुर्यात्सुविभक्तं निराशयम् ॥ २० ॥
आयतं च विशालं च यथा दोषो न तिष्ठति ।
शौर्यमाशुक्रिया तीक्ष्णं शस्त्रमस्वेदवेपथू ॥ २१ ॥
असम्मोहश्च वैद्यस्य शस्त्रकर्मणि शस्यते ।
तिर्यक्छिन्द्याल्ललाटभ्रूदन्तवेष्टकजत्रुणि ॥ २२ ॥
कुक्षिकक्षाक्षिकूटौष्ठकपोलगलवङ्क्षणे ।
अन्यत्र छेदनात्तिर्यक् सिरास्नायुविपाटनम् ॥ २३ ॥
शस्त्रेऽवचारिते वाग्भिः शीताम्भोभिश्च रोगिणम् ।
आश्वास्य परितोऽङ्गुल्या परिपीड्य व्रणं ततः ॥ २४ ॥
क्षालयित्वा कषायेण प्लोतेनाम्भोऽपनीय च ।

---

१ 'यतो यतो गतिं,' 'यतो दोषगतिं' इति पाठौ.

गुग्गुल्वगुरुसिद्धार्थहिङ्गुसर्जरसान्वितैः ॥ २५ ॥
धूपयेत्पटुपङ्ग्रन्थानिम्बपत्रैर्घृतप्लुतैः ।
तिलकल्काज्यमधुभिर्यथास्वं भेषजेन च ॥ २६ ॥
दिग्धां वर्तिं ततो दद्यात्तैरेवाच्छादयेच्च ताम् ।
घृताक्तैः सक्तुभिश्चोर्ध्वं घनां कवलिकां ततः ॥ २७ ॥
निधाय युक्त्या बध्नीयात्पट्टेन सुसमाहि[1]तम् ।
पार्श्वं सव्येऽपसव्ये वा नाधस्तान्नैव चोपरि ॥ २८ ॥
शुचि[2]सूक्ष्मदृढाः पट्टाः कवल्यः सविकेशिकाः ।
धूपिता मृदवः श्लक्ष्णा निर्वलीका व्रणे हिताः ॥ २९ ॥
कुर्वीतानन्त[3]रं तस्य रक्षां रक्षोनिषि[4]द्धये ।
बलिं चोपहरेत्तेभ्यः

सदा मूर्ध्ना च धारयेत् ॥ ३० ॥
लक्ष्मीं गुहामतिगुहां जटिलां ब्रह्मचारिणीम् ।
वचां छत्रामतिच्छत्रां दूर्वां सिद्धार्थकानपि ॥ ३१ ॥
ततः [5]स्नेहदिनेहोक्तं तस्याचारं समादिशेत् ।
दिवास्वप्नो व्रणे कण्डूरागरुक्शोफपूयकृत् ॥ ३२ ॥
स्त्रीणां तु स्मृतिसंस्पर्शदर्शनैश्चलितस्रुते ।
शुक्रे व्यवायजान् दोषानसंसर्गेऽप्यवाप्नुयात् ॥ ३३ ॥
( [6]व्रणे श्वयथुरायासात् स च रागश्च जागरात् ।

---

१ 'हित' इति पाठः. २ 'शुचि' पाठः. ३ 'रं सम्यग्रक्षां' पाठः. ४ 'निवृत्तये' पाठः. ५ 'स्नेहविधानोक्तं' पाठः. ६ सुश्रुतानुसारी ( ) चिह्नितोयं श्लोकः क्वचित्पठ्यते.

तौ च रुक् च दिवास्वापात्ताश्च मृत्युश्च मैथुनात् ॥ )
भोजनं च यथासात्म्यं यवगोधूमषष्टिकाः।
मसूरमुद्गतुवरीजीवन्तीसुनिषण्णकाः ॥ ३४ ॥
बालमूलकवार्ताकतण्डुलीयकवास्तुकम्।
कारवेल्लककर्कोटपटोलकटुकाफलम् ॥ ३५ ॥
सैन्धवं दाडिमं धात्री घृतं तप्तहिमं जलम्।
जीर्णशाल्योदनं स्निग्धमल्पमुष्णोदकोत्तरम् ॥ ३६ ॥
भुञ्जानो जाङ्गलैर्मांसैः शीघ्रं व्रणमपोहति।
अशितं मात्रया काले पथ्यं याति जरां सुखम् ॥ ३७ ॥
अजीर्णात्त्वनिलादीनां विभ्रमो बलवान् भवेत्।
ततः शोफरुजापाकदाहानाहानवाप्नुयात् ॥ ३८ ॥
नवं धान्यं तिलान् माषान् मद्यं मांसमजाङ्गलम्।
क्षीरेक्षुविकृतीरम्लं लवणं कटुकं त्यजेत् ॥ ३९ ॥
यच्चान्यदपि विष्टम्भि विदाहि गुरु शीतलम्।
वर्गोऽयं नवधान्यादिर्व्रणिनः सर्वदोषकृत् ॥ ४० ॥
मद्यं तीक्ष्णोष्णरूक्षाम्लमाशु व्यापादयेद्व्रणम्।
वालोशीरैश्च वीज्येत न चैनं परिघट्टयेत् ॥ ४१ ॥
न तुदेन्न च कण्डूयेच्चेष्टमानश्च पालयेत्।
स्निग्धवृद्धद्विजातीनां कथाः शृण्वन्मनःप्रियाः ॥ ४२ ॥

१ 'मुष्णं द्रवोत्तरम्' पा. २ 'अजीर्णे त्व' पा. ३ 'जास्रावदा' पाठः. ४ 'बालो' पाठः. ५ 'येच्छयानः परिपाल' पाठः. ६ 'सिद्धवृद्ध' इति पाठः.

आश्वासवान् व्याधिमोक्षाय क्षिप्रं व्रणमपोहति ।
तृतीयेऽह्नि पुनः कुर्याद्व्रणकर्म च पूर्ववत् ॥ ४३ ॥
प्रक्षालनादि, दिवसे द्वितीये नाचरेत्तथा ।
तीव्रव्यथो विग्रथितश्चिरात्संरोहति व्रणः ॥ ४४ ॥
स्निग्धां रूक्षां श्लथां गाढां दुर्न्यस्तां च विकेशिकाम् ।
व्रणे न दद्यात्कल्कं वा

स्नेहात्क्लेदो विवर्धते ॥ ४५ ॥
मांसच्छेदोऽतिरौक्ष्याद्दरणं शोणितागमः ।
श्लथातिगाढदुर्न्यासैर्व्रणवर्त्मावघर्षणम् ॥ ४६ ॥
सपूतिमांसं सोत्सङ्गं सगतिं पूयगर्भिणम् ।
व्रणं विशोधयेच्छीघ्रं स्थिता ह्यन्तर्विकेशिका ॥ ४७ ॥
व्यम्लं तु पाटितं शोफं पाचनैः समुपाचरेत् ।
भोजनैरुपनाहैश्च नातिव्रणविरोधिभिः ॥ ४८ ॥
सद्यः सद्योव्रणान् सीव्येद्विवृतानभिघातजान् ।
मेदोजांल्लिखितान् ग्रन्थीन् ह्रस्वाः पालीश्च कर्णयोः ४९
शिरोक्षिकूटनासौष्ठगण्डकर्णोरुबाहुषु ।
ग्रीवाललाटमुष्कस्फिङ्मेढ्रपायूदरादिषु ॥ ५० ॥
गम्भीरेषु प्रदेशेषु मांसलेष्वचलेषु च ।
न तु वङ्क्षणकक्षादावल्पमांसे चले व्रणान् ॥ ५१ ॥
वायुनिर्वाहिणः शल्यगर्भान् क्षारविषाग्निजान् ।

---

१ 'दुर्न्यस्तैर्व्र' इति पा. २ 'व्रणं शोधयते शीघ्रं' इति पा.
३ 'विशोधिभिः' इति पा. ४ 'मांसचलान् व्र' इति पाठः.

सीव्येद्बलास्थिशुष्कास्रतृणरोमापनीय तु ॥ ५२ ॥
प्रलम्बि मांसं विच्छिन्नं निवेश्य स्वनिवेशने।
सन्ध्यस्थि च स्थिते रक्ते बाद्ध्वा सूत्रेण वल्कलैः ॥ ५३ ॥
सीव्येन्न दूरे नासन्ने गृह्णन्नाल्पं न वा बहु।
सान्त्वयित्वा ततश्चार्तं व्रणे मधुघृतद्रुतैः ॥ ५४ ॥
अञ्जनक्षौमजमषीफलिनीशल्लकीफलैः।
सरोध्रमधुकैर्दिग्धे युञ्ज्याद्बन्धादि पूर्ववत् ॥ ५५ ॥
व्रणो निःशोणितौष्ठो यः किंचिदेवावलिख्य तम्।
सञ्जातरुधिरं सीव्येत्सन्धानं ह्यस्य शोणितम् ॥ ५६ ॥
बन्धनानि तु देशादीन् वीक्ष्य युञ्जीत तेषु च।
आविकाजिनकौशेयमुष्णं, क्षौमं तु शीतलम् ॥ ५७ ॥
शीतोष्णं तूलसन्तानकार्पासस्नायुवल्कजम्।
ताम्रायस्त्रपुसीसानि व्रणे मेदःकफाधिके ॥ ५८ ॥
भङ्गे च युञ्ज्यात्फलकं चर्मवल्ककुशादि च।
स्वनामानुगताकारा बन्धास्तु दश पञ्च च ॥ ५९ ॥
कोशस्वस्तिकमुत्तोलीचीनदामानुवेल्लितम्।
खट्वाविबन्धस्थगिकावितानोत्सङ्गगोष्फणाः ॥ ६० ॥
यमकं मण्डलाख्यं च पञ्चाङ्गी चेति योजयेत्।
(*विदध्यात्तेषु तेष्वेव कोशमङ्गुलिपर्वसु।

१ 'साता' इति पाठः. २ 'सान्तयि,' 'शान्तयि' इति पाठौ. ३ 'स्नावबल्क' इति पाठः. *( ) चिन्हिताः श्लोकाः क्वचिदत्र पठ्यन्ते.

स्वस्तिकं कर्णकक्षादिस्तनेषूक्तं च सन्धिषु ॥
मुत्तोलीं मेढ्रग्रीवादौ युञ्ज्याच्चीनमपाङ्गयोः ।
सम्बाधेऽङ्के तथा दाम, शाखास्वेवानुवेल्लितम् ॥
खट्वां गण्डे हनौ शङ्खे, विबन्धं पृष्ठकोदरे ।
अङ्गुष्ठाङ्गुलिमेढ्राग्रे स्थगिकामन्त्रवृद्धिषु ॥
वितानं पृथुलाङ्गादौ तथा शिरसि चेरयेत् ।
विलम्बिनि तथोत्सङ्गं, नासौष्ठचिबुकादिषु ॥
गोष्फणं सन्धिषु तथा, यमकं यमिके व्रणे ।
वृत्तेऽङ्के मण्डलाख्यं च, पञ्चाङ्गीं चोर्ध्वजत्रुषु ॥ )
यो यत्र सुनिविष्टः स्यात्तं तेषां तत्र बुद्धिमान् ॥ ६१ ॥
बध्नीयाद्गाढमूरुस्फिक्कक्षावङ्क्षणमूर्धसु ।
शाखावदनकर्णोरःपृष्ठपार्श्वगलोदरे ॥ ६२ ॥
समं मेहनमुष्के च, नेत्रे सन्धिषु च श्लथम् ।
बध्नीयाच्छिथिलस्थाने वातश्लेष्मोद्भवे समम् ॥ ६३ ॥
गाढमेव समस्थाने, भृशं गाढं तदाशये[1] ।
शीते वसन्तेऽपि[2] च तौ मोक्षणीयौ त्र्यहात्त्र्यहात् ॥ ६४ ॥
पित्तरक्तोत्थयोर्बन्धो गाढस्थाने समो मतः ।
समस्थाने श्लथो, नैव शिथिलस्याशये तथा ॥ ६५ ॥
सायंप्रातस्तयोर्मोक्षो ग्रीष्मे शरदि चेष्यते ।
अबद्धो दंशमशकशीतवातादिपीडितः ॥ ६६ ॥
दुष्टीभवेच्चिरं चात्र न तिष्ठेत्स्नेहभेषजम् ।

---

१ 'तदाश्रये' इति पाठः. २ 'न्ते च तथा मो' इति पाठः.

कृच्छ्रेण शुद्धिं रूढिं वा याति रूढो विवर्णताम् ॥ ६७ ॥
बद्धस्तु चूर्णितो भग्नो विश्लिष्टः पाटितोऽपि वा ।
छिन्नस्नायुसिरोऽप्याशु सुखं संरोहति व्रणः ॥ ६८ ॥
उत्थानशयनाद्यासु सर्वेहासु न [1]पीड्यते ।
[2]उद्वृत्तौष्ठः समुत्सन्नो विषमः कठिनोऽतिरुक् ॥ ६९ ॥
समो मृदुररुक् शीघ्रं व्रणः शुध्यति रोहति ।
स्थिराणामल्पमांसानां रौक्ष्यादनुपरोहताम् ॥ ७० ॥
प्रच्छाद्यमौषधं पत्रैर्यथादोषं यथर्तु च ।
[3]अजीर्णतरुणाच्छिद्रैः समन्तात्सुनिवेशितैः ॥ ७१ ॥
धौतैरकर्कशैः क्षीरिभूर्जार्जुनकदम्बजैः ।
कुष्ठिनामग्निदग्धानां पिटिकामधुमेहिनाम् ॥ ७२ ॥
कर्णिकाश्चोन्दुरुविषे क्षारदग्धा विषान्विताः ।
बन्धनीया न मांसपाके गुदपाके च दारुणे ॥ ७३ ॥
शीर्यमाणाः सरुग्दाहाः शोफावस्थाविसर्पिणः ।
अरक्षया व्रणे यस्मिन् मक्षिका निक्षिपेत्कृमीन् ॥ ७४ ॥
ते भक्षयन्तः कुर्वन्ति रुजाशोफास्रसंस्रवान् ।
सुरसादिं प्रयुञ्जीत तत्र धावनपूरणे ॥ ७५ ॥
सप्तपर्णकरञ्जार्कनिम्बराजादनत्वचः ।
गोमूत्रकल्कितो लेपः सेकः क्षाराम्बुना हितः ॥ ७६ ॥
प्रच्छाद्य मांसपेश्या वा व्रणं तानाशु निर्हरेत् ।
न चैनं त्वरमाणोऽन्तः सदोषमुपरोहयेत् ॥ ७७ ॥

---

१ 'पीडयेत्' पा. २ 'उद्धृतौष्ठः' पाठः. ३ 'अजीर्णातरु' पाठः.

सोऽल्पेनाप्यपचारेण भूयो विकुरुते यतः ।
रूढेऽप्यजीर्णव्यायामव्यवायादीन् विवर्जयेत् ॥ ७८ ॥
हर्षं क्रोधं भयं चापि यावदास्थैर्यसम्भवात् ।
आदरेणानुवर्त्योऽयं मासान् षट् सप्त वा विधिः ॥ ७९ ॥
उत्पद्यमानासु च तासु तासु
वार्तासु दोषादिबलानुसारी ।
तैस्तैरुपायैः प्रयतश्चिकित्से-
दालोचयन् विस्तरमुत्तरोक्तम् ॥ ८० ॥"

## त्रिंशोऽध्यायः ।

अथातः क्षाराग्निकर्मविधिमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥
"सर्वशस्त्रानुशस्त्राणां क्षारः श्रेष्ठो बहूनि यत् ।
छेद्यभेद्यादिकर्माणि कुरुते विषमेष्वपि ॥ १ ॥
दुःखावचार्यशस्त्रेषु तेन सिद्धिमथाल्सु च ।
अतिकृच्छ्रेषु रोगेषु यच्च पानेऽपि युज्यते ॥ २ ॥
स पेयोऽर्शोऽग्निसादाश्मगुल्मोदरगरादिषु ।
योज्यः साक्षान्मषश्वित्रबाह्यार्शःकुष्ठसुप्तिषु ॥ ३ ॥
भगन्दरार्बुदग्रन्थिदुष्टनाडीव्रणादिषु ।
न तूभयोऽपि योक्तव्यः पित्ते रक्ते चलेऽबले ॥ ४ ॥
ज्वरेऽतिसारे हृन्मूर्धरोगे पाण्ड्वामयेऽरुचौ ।

१ 'रापचीग्र' इति पाठः. २ 'बलेऽबले' इति पाठः.

तिमिरे कृतसंशुद्धौ श्वयथौ सर्वगात्रगे ॥ ५ ॥
भीरुगर्भिण्यृतुमतीप्रोद्वृत्तफलयोनिषु ।
अजीर्णेऽन्ने शिशौ वृद्धे धमनीसन्धिमर्मसु ॥ ६ ॥
तरुणास्थिसिरास्नायुसेवनीगलनाभिषु ।
देशेऽल्पमांसे वृषणमेढ्रस्रोतोनखान्तरे ॥ ७ ॥
वर्त्मरोगादृतेऽक्ष्णोश्च शीतवर्षोष्णदुर्दिने ।
कालमुष्ककशम्याककदलीपारिभद्रकान् ॥ ८ ॥
अश्वकर्णमहावृक्षपलाशास्फोतवृक्षकान् ।
इन्द्रवृक्षार्कपूतीकनक्तमालाश्वमारकान् ॥ ९ ॥
काकजङ्घामपामार्गमग्निमन्थाग्नितिल्वकान् ।
सार्द्रान् समूलशाखादीन् खण्डशः परिकल्पितान् ॥ १० ॥
कोशातकीश्चतस्रश्च शूकं[1] नालं यवस्य च ।
निवाते निचयीकृत्य पृथक् तानि शिलातले ॥ ११ ॥
प्रक्षिप्य मुष्ककचये सुधाश्मानि च दीपयेत् ।
ततस्तिलानां कुतलै[2]र्दग्ध्वाऽग्नौ विगते पृथक् ॥ १२ ॥
कृत्वा सुधाश्मनां भस्म द्रोणं त्वितरभस्मनः ।
मुष्ककोत्तरमादाय प्रत्येकं जलमूत्रयोः ॥ १३ ॥
गालयेदर्धभारेण महता वाससा च तत् ।
यावत्पिच्छिलरक्ताच्छस्तीक्ष्णो जातस्तदा च तम् ॥ १४ ॥
गृहीत्वा क्षारनिष्यन्दं पचेल्लौहीं विघट्टयन् ।
पच्यमाने ततस्तस्मिंस्ताः सुधाभस्मशर्कराः ॥ १५ ॥

---

१ 'शूकनालं' इति पाठः. २ 'कुन्तालै', 'कुतिलै' इति पाठौ.

शुक्तीः क्षीरपकं शङ्खनाभीश्चायसभाजने।
कृत्वाऽग्निवर्णान्बहुशः क्षारोत्थे कुडवोन्मिते ॥ १६ ॥
निर्वाप्य पिष्ट्वा तेनैव प्रतीवापं विनिक्षिपेत्।
श्लक्ष्णं शकृद्दक्षशिखिगृध्रकङ्ककपोतजम् ॥ १७ ॥
चतुष्पात्पक्षिपित्तालमनोह्वालवणानि च।
परितः सुतरां चातो दर्व्या समवघट्टयेत् ॥ १८ ॥
सवाष्पैश्च यदोत्तिष्ठेद्बुद्बुदैर्लेहवद्घनः।
अवतार्य तदा शीतो यवराशावयोमये ॥ १९ ॥
स्थाप्योऽयं मध्यमः क्षारो

न तु पिष्ट्वा क्षिपेन्मृदौ।
निर्वाप्यापनयेत्तीक्ष्णे पूर्ववत् प्रतिवापनम् ॥ २० ॥
तथा लाङ्गलिकादन्तीचित्रकातिविषावचाः।
स्वर्जिकाकनकक्षीरीहिङ्गुपूतीकपल्लवाः ॥ २१ ॥
तालपत्री विडं चेति, सप्तरात्रात्परं तु सः।
योज्यः

तीक्ष्णोऽनिलश्लेष्ममेदोजेष्वर्बुदादिषु ॥ २२ ॥
मध्येष्वेष्वेव मध्योऽन्यः पित्तास्रगुदजन्मसु।
बलार्थं क्षीणपानीये क्षाराम्बु पुनरावपेत् ॥ २३ ॥

१ 'नाभींश्चा' इति पाठः. २ 'क्षाराच्छे' इति पाठः. ३ 'यदा तिष्ठे' इति पाठः. ४ 'शीते' इति पाठः. ५ 'विडङ्गं च सप्त' इति पाठः. ६ 'मध्येष्वेव च मध्यो', 'मध्येष्वेषु च मध्यो' इति पाठौ.

नातितीक्ष्णमृदुः श्लक्ष्णः पिच्छिलः शीघ्रगः सितः।
शिखरी सुखनिर्वाप्यो न विष्यन्दी न चातिरुक् ॥ २४ ॥
क्षारो दशगुणः शस्त्रतेजसोरपि कर्मकृत्।
आचूषन्निव संरम्भाद्गात्रमापीडयन्निव ॥ २५ ॥
सर्वतोऽनुसरन् दोषानुन्मूलयति मूलतः।
कर्म कृत्वा गतरुजः स्वयमेवोपशाम्यति ॥ २६ ॥
क्षारसाध्ये गदे छिन्ने लिखिते स्राविते ऽथवा।
क्षारं शलाकया दद्यात् प्लोत[1]प्रावृतदेहया ॥ २७ ॥
मात्राशतमुपेक्षेत

तत्रार्शःस्वावृताननम्।

हस्तेन यन्त्रं कुर्वीत

वर्त्मरोगेषु वर्त्मनी ॥ २८ ॥

निर्भुज्य पिचुनाऽऽच्छाद्य कृष्णभागं विनिक्षिपेत्।
पद्मपत्रतनुः क्षारलेपो, घ्राणार्बुदेषु च ॥ २९ ॥
प्रत्यादित्यं निषण्णस्य समु[2]न्नम्याग्रनासिकाम्।
मात्रा वि[3]धार्यः पञ्चाशत्

तद्वदर्शांसि कर्णजे ॥ ३० ॥

क्षारं प्रमार्जनेना[4]नु परिमृज्यावगम्य च।
सुदग्धं घृतमध्वक्तं तत्पयोमस्तुकाञ्जिकैः ॥ ३१ ॥

---

१ 'तप्लावित' इति पाठः. २ 'न्नम्याग्र' इति पाठः.
३ 'धार्य', 'धार्याः' इति पाठौ. ४ 'नाशु प' इति पाठः.

निर्वापयेत्ततः साज्यैः स्वादुशीतैः प्रदेहयेत् ।
अभिष्यन्दीनि भोज्यानि भोज्यानि क्लेदनाय च ॥ ३२ ॥
यदि च स्थिरमूलत्वात्क्षारदग्धं न शीर्यते ।
धान्याम्लबीजयष्ट्याह्वतिलैरालेपयेत्ततः ॥ ३३ ॥
तिलकल्कः समधुको घृताक्तो व्रणरोपणः ।
पक्वजम्ब्वसितं सन्नं सम्यग्दग्धम्

विपर्यये ॥ ३४ ॥

ताम्रतातोदकण्ड्वाद्यैर्दुर्दग्धम्

[२]तं पुनर्दहेत् ।

अतिदग्धे स्रवेद्रक्तं मूर्च्छादाहज्वरादयः ॥ ३५ ॥
गुदे विशेषाद्विण्मूत्रसंरोधोऽतिप्रवर्तनम् ।
पुंस्त्वोपघातो मृत्युर्वा गुदस्य [३]शातनाद्ध्रुवम् ॥ ३६ ॥
नासायां नासिकावंशदरणाकुञ्चनोद्भवः ।
भवेच्च विषयाज्ञानम्

तद्वच्छ्रोत्रादिकेष्वपि ॥ ३७ ॥

विशेषादत्र सेकोऽम्लैर्लेपो मधु घृतं तिलाः ।
वातपित्तहरा चेष्टा सर्वैव शिशिरा क्रिया ॥ ३८ ॥
अम्लो हि शीतः स्पर्शेन क्षारस्तेनोपसंहितः ।
यात्याशु स्वादुतां तस्मादम्लैर्निर्वापयेत्तराम् ॥ ३९ ॥

---

१ 'जम्बूनिभं स' इति पाठः. २ 'तत्पुन' इति पाठः. ३ शातनं ध्रुवम्', 'सदनाद्ध्रु,' 'सदनं ध्रु' इति पाठाः.

( विषाग्निशस्त्राशनिमृत्युतुल्यः[2]
क्षारो भवेदल्पमतिप्रयुक्तः ।
स धीमता सम्यगनुप्रयुक्तो
रोगान्निहन्यादचिरेण घोरान् ॥ )[1]

अग्निः क्षारादपि श्रेष्ठस्तद्दग्धानामसम्भवात् ।
भेषजक्षारशस्त्रैश्च न सिद्धानां प्रसाधनात् ॥ ४० ॥
त्वचि मांसे सिरास्नायुसन्ध्यस्थिषु स युज्यते ।
मषाङ्गग्लानिमूर्धार्तिमन्थकीलतिलादिषु ॥ ४१ ॥
त्वग्दाहो वर्तिगोदन्तसूर्यकान्तशरादिभिः ।
अर्शोभगन्दरग्रन्थिनाडीदुष्टव्रणादिषु ॥ ४२ ॥
मांसदाहो मधुस्नेहजाम्बवौष्ठगुडादिभिः ।
श्लिष्टवर्त्मन्यसृक्स्रावनील्यसम्यग्व्यधादिषु ॥ ४३ ॥
सिरादिदाहस्तैरेव
न दहेत्क्षारवारितान्[3] ।
अन्तःशल्यासृजो भिन्नकोष्ठान् भूरिव्रणातुरान् ॥ ४४ ॥
सुदग्धं घृतमध्वक्तं स्निग्धशीतैः प्रदेहयेत् ।
तस्य लिङ्गं स्थिते रक्ते शब्दवल्लसिकान्वितम् ॥ ४५ ॥
पक्वतालकपोताभं सुरोहं नातिवेदनम् ।
प्रमाददग्धवत्सर्वं दुर्दग्धात्यर्थदग्धयोः ॥ ४६ ॥

---

१ ( ) सुश्रुतानुसारी श्लोकोऽयं क्वचित् पठ्यते. २ 'त्युकल्पः क्षारो भवत्यल्प' इति पाठः. ३ 'रवर्जितान्' इति पाठः.

चतुर्धा तत्तु तुच्छेन[1] सह

तुच्छस्य लक्षणम् ।

त्वग्विवर्णोष्यतेऽत्यर्थं न च स्फोटसमुद्भवः ॥ ४७ ॥

सस्फोटदाहतीव्रोषं दुर्दग्धम्

अतिदाहतः ।

मांसलम्बनसङ्कोचदाहधूपनवेदनाः ॥ ४८ ॥

सिरादिनाशस्तृण्मूर्च्छाव्रणगाम्भीर्यमृत्यवः ।

तुच्छस्याग्निप्रतपनं[2] कार्यमुष्णं च भेषजम् ॥ ४९ ॥

स्त्यानेऽस्रे वेदनाऽत्यर्थं विलीने मन्दता रुजः ।

दुर्दग्धे शीतमुष्णं च युञ्ज्यादादौ ततो हिमम् ॥ ५० ॥

सम्यग्दग्धे तैवक्षीरि[3]प्लक्षचन्दनगैरिकैः ।

लिम्पेत्साज्यामृतैरूर्ध्वं पित्तविद्रधिवत्क्रिया ॥ ५१ ॥

अतिदग्धे द्रुतं कुर्यात्सर्वं पित्तविसर्पवत् ।

स्नेहदग्धे भृशतरं रूक्षं तत्र तु योजयेत् ॥ ५२ ॥

([4]शस्त्रक्षाराग्नयो यस्मान्मृत्योः परममायुधम् ।

अप्रमत्तो भिषक् तस्मात्तान् सम्यगवचारयेत् ॥)

समाप्यते स्थानमिदं हृदयस्य रहस्यवत् ।

अत्रार्थाः सूत्रिताः[5] सूक्ष्माः प्रतन्यन्ते हि सर्वतः ॥५३॥"

## समाप्तं चेदं प्रथमं सूत्रस्थानम् ।

---

१ 'तुत्थेन' इति पाठः. २ 'तुत्थस्या' इति पाठः. ३ 'तुगाक्षीरि' इति पाठः. ४ ( ) चिह्नितः श्लोकोयं केषुचित्पुस्तकेषु पठ्यते. ५ 'सूचिताः' इति पाठः.

# अष्टाङ्गहृदयम् ।

## शारीरस्थानम् ।

### प्रथमोऽध्यायः ।

अथातो गर्भावक्रान्ति शारीरं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥

"शुद्धे शुक्रार्तवे सत्त्वः स्वकर्मक्लेशचोदितः[1] ।
गर्भः सम्पद्यते युक्तिवशादग्निरिवारणौ ॥ १ ॥
बीजात्मकैर्महाभूतैः सूक्ष्मैः सत्त्वानुगैश्च सः ।
मातुश्चाहाररसजैः क्रमात्कुक्षौ विवर्धते ॥ २ ॥
तेजो यथाऽर्करश्मीनां स्फटिकेन तिरस्कृतम् ।
नेन्धनं दृश्यते गच्छत्सत्त्वो गर्भाशयं तथा ॥ ३ ॥
कारणानुविधायित्वात्कार्याणां तत्स्वभावता ।
नानायोन्याकृतीः सत्त्वो धत्तेऽतो द्रुतलोहवत् ॥ ४ ॥
अत एव च शुक्रस्य बाहुल्याज्जायते पुमान् ।
रक्तस्य स्त्री, तयोः साम्ये क्लीबः

शुक्रार्तवे पुनः ॥ ५ ॥

---

१ 'कर्मफलनोदि' इति पाठः.

वायुना बहुशो भिन्ने यथास्वं बह्वपत्यता ।
वियोनिविकृताकारा जायन्ते विकृतैर्मलैः ॥ ६ ॥
मासि मासि रजः स्त्रीणां रसजं स्रवति त्र्यहम् ।
वत्सराद्द्वादशादूर्ध्वं याति पञ्चाशतः क्षयम् ॥ ७ ॥
पूर्णषोडशवर्षा स्त्री पूर्णविंशेन सङ्गता ।
शुद्धे गर्भाशये मार्गे रक्ते शुक्रेऽनिले हृदि ॥ ८ ॥
वीर्यवन्तं सुतं सूते

ततो न्यूनाब्दयोः पुनः ।
रोग्यल्पायुरधन्यो वा गर्भो भवति नैव वा ॥ ९ ॥
वातादिकुणपग्रन्थिपूयक्षीणमलाह्वयम् ।
[1]बीजासमर्थं रेतोस्रम्

स्वलिङ्गैर्दोषजं वदेत् ॥ १० ॥
रक्तेन कुणपं, श्लेष्मवाताभ्यां ग्रन्थिसन्निभम् ।
पूयाभं रक्तपित्ताभ्यां, क्षीणं मारुतपित्ततः ॥ ११ ॥
कृच्छ्राण्येतान्यसाध्यं तु त्रिदोषं मूत्रविट्प्रभम् ।
कुर्याद्वातादिभिर्दुष्टे स्वौषधम्

कुणपे पुनः ॥ १२ ॥
धातकीपुष्पखदिरदाडिमार्जुनसाधितम् ।
पाययेत्सर्पिरथवा विपक्कमसनादिभिः ॥ १३ ॥
पलाशभस्माश्मभिदा ग्रन्थ्याभे

पूयरेतसि ।

---

१ 'प्रजास' इति पाठः.

परुषकवटादिभ्याम्

क्षीणे शुक्रकरी क्रिया ॥ १४ ॥

"स्निग्धं वान्तं विरिक्तं च निरूढमनुवासितम् ।
योजयेच्छुक्रदोषार्तं सम्यगुत्तरबस्तिभिः ॥"

संशुद्धो विद्प्रभे सर्पिर्हिङ्गुसेव्यादि(भि)साधितम् ।
पिबेत्

ग्रन्थ्यार्तवे पाठाव्योषवृक्षकजं जलम् ॥ १५ ॥

पेयं कुणपपूयास्ते चन्दनं वक्ष्यते तु यत् ।
गुह्यरोगे च तत्सर्वं कार्यं सोत्तरबस्तिकम् ॥ १६ ॥

[1]शुक्रं शुक्लं गुरु स्निग्धं मधुरं बहलं बहु ।
घृतमाक्षिकतैलाभं सद्गर्भाय

आर्तवं पुनः ॥ १७ ॥

लाक्षारसशशास्राभं धौतं यच्च विरज्यते ।
शुद्धशुक्रार्तवं स्वस्थं संरक्तं मिथुनं मिथः ॥ १८ ॥

स्नेहैः पुंसवनैः स्निग्धं शुद्धं शीलितबस्तिकम् ।
नरं विशेषात्क्षीराज्यैर्मधुरौषधसंस्कृतैः[2] ॥ १९ ॥

नारीं तैलेन माषैश्च पित्तलैः समुपाचरेत् ।
[3]क्षामप्रसन्नवदनां स्फुरच्छ्रोणिपयोधराम् ॥ २० ॥

स्रस्ताक्षिकुक्षिं पुंस्कामां विद्यादृतुमतीं स्त्रियम् ।
पद्मं सङ्कोचमायाति दिनेऽतीते यथा, तथा ॥ २१ ॥

---

१ 'शुद्धं शुक्रं गु' इति पाठः, २ 'धसाधितैः' इति पाठः,
३ 'क्षामां प्र' इति पाठः.

ऋतावतीते योनिः, सा शुक्रं नातः प्रतीच्छति ।
मासेनोपचितं रक्तं धमनीभ्यामृतौ पुनः ॥ २२ ॥
ईषत्कृष्णं विगन्धं च वायुर्योनिमुखान्नुदेत् ।
ततः पुष्पेक्षणादेव कल्याणध्यायिनी त्र्यहम् ॥ २३ ॥
मृजालङ्काररहिता दर्भसंस्तरशायिनी ।
क्षैरेयं यावकं स्तोकं कोष्ठशोधनकर्षणम् ॥ २४ ॥
पर्णे शरावे हस्ते वा भुञ्जीत ब्रह्मचारिणी ।
चतुर्थेऽह्नि ततः स्नाता शुक्लमाल्याम्बरा शुचिः ॥ २५ ॥
इच्छन्ती भर्तृसदृशं पुत्रं पश्येत्पुरः पतिम् ।
ऋतुस्तु द्वादश निशाः पूर्वास्तिस्रोऽत्र निन्दिताः ॥ २६ ॥
एकादशी च, युग्मासु स्यात्पुत्रोऽन्यासु कन्यका ।
उपाध्यायोऽथ पुत्रीयं कुर्वीत विधिवद्विधिम् ॥ २७ ॥
नमस्कारपरायास्तु शूद्राया मन्त्रवर्जितम् ।
अवन्ध्य एवं संयोगः स्यादपत्यं च कामतः ॥ २८ ॥
सन्तो ह्याहुरपत्यार्थं दम्पत्योः सङ्गतिं रहः ।
दुरपत्यं कुलाङ्गारो गोत्रे जातं महत्यपि ॥ २९ ॥
इच्छेतां यादृशं पुत्रं तद्रूपचरितांश्च तौ ।
चिन्तयेतां जनपदांस्तदाचारपरिच्छदौ ॥ ३० ॥
कर्मान्ते च पुमान् सर्पिःक्षीरशाल्योदनाशितः ।

---

१ 'योनिः स्याच्छुक्रं' इति पाठः. २ 'नान्तः' इति पाठः. ३ 'मुखं नयेत्' इति पाठः. ४ 'कर्शनम्' इति पाठः. ५ 'सङ्गतं इति पाठः.

प्राग्दक्षिणेन पादेन शय्यां मौहूर्तिकाज्ञया ॥ ३१ ॥
आरोहेत् स्त्री तु वामेन तस्य दक्षिणपार्श्वतः ।
तैलमाषोत्तराहारा तत्र मन्त्रं प्रयोजयेत् ॥ ३२ ॥
ॐ[1]अहिरसि आयुरसि सर्वतः प्रतिष्ठासि धाता[2] त्वां
दधातु विधाता त्वा दधातु ब्रह्मवर्चसा भवेति ।
ब्रह्मा बृहस्पतिर्विष्णुः सोमः सूर्यस्तथाऽश्विनौ ।
भगोऽथ मित्रावरुणौ[3] वीरं ददतु मे सुतम् ॥ ३३ ॥
सान्त्वयित्वा ततोऽन्योन्यं [4]संविशेतां मुदान्वितौ ।
उत्ताना तन्मना योषित्तिष्ठेदङ्गैः सुसंस्थितैः ॥ ३४ ॥
तथा हि बीजं गृह्णाति दोषैः स्वस्थानमास्थितैः[5] ।
लिङ्गं तु सद्योगर्भाया योन्यां[6] बीजस्य सङ्ग्रहः ॥ ३५ ॥
तृप्तिर्गुरुत्वं स्फुरणं शुक्रास्रानुबन्धनम् ।
हृदयस्पन्दनं तन्द्रा तृड्ग्लानिर्लोमहर्षणम् ॥ ३६ ॥
अव्यक्तः प्रथमे मासि सप्ताहात्कललीभवेत् ।
गर्भः पुंसवनान्यत्र पूर्वं व्यक्तेः प्रयोजयेत् ॥ ३७ ॥
बली पुरुषकारो हि दैवमप्यतिवर्तते ।
पुष्ये पुरुषकं हैमं राजतं वाऽथवाऽऽयसम् ॥ ३८ ॥
कृत्वाऽग्निवर्णं निर्वाप्य क्षीरे तस्याञ्जलिं पिबेत् ।
गौरदण्डमपामार्गं जीवकर्षभसैर्यकान् ॥ ३९ ॥

---

१ 'अहि' इति पाठः. २ 'ता वाग्दधातु' इति पाठः. ३ 'णौ पुत्रं वीरं दधातु मे' इति चरकः. ४ 'संवसेतां' इति ५ 'माश्रितैः' इति पाठः. ६ 'योन्यां इति पाठः.

पिबेत्पुष्ये जले पिष्टानेकद्वित्रिसमस्तशः ।
क्षीरेण श्वेतबृहतीमूलं नासापुटे स्वयम् ॥ ४० ॥
पुत्रार्थं दक्षिणे सिञ्चेद्वामे दुहितृवाञ्छया ।
पयसा लक्ष्मणामूलं पुत्रोत्पादस्थितिप्रदम् ॥ ४१ ॥
नासयाऽऽस्येन वा पीतं वटशुङ्गाष्टकं तथा ।
ओषधीर्जीवनीयाश्च बाह्यान्तरुपयोजयेत् ॥ ४२ ॥
उपचारः प्रियहितैर्भर्त्रा भृत्यैश्च गर्भधृक् ।
नवनीतघृतक्षीरैः सदा चैनामुपाचरेत् ॥ ४३ ॥
अतिव्यवायमायासं भारं प्रावरणं गुरु ।
अकालजागरस्वप्नं कठिनोत्कटकासनम् ॥ ४४ ॥
शोकक्रोधभयोद्वेगवेगश्रद्धाविधारणम् ।
उपवासाध्वतीक्ष्णोष्णगुरुविष्टम्भिभोजनम् ॥ ४५ ॥
रक्तं निवसनं श्वभ्रकूपेक्षां मद्यमामिषम् ।
उत्तानशयनं यच्च स्त्रियो नेच्छन्ति तत्त्यजेत् ॥ ४६ ॥
तथा रक्तस्रुतिं शुद्धिं बस्तिमामासतोऽष्टमात् ।
एभिर्गर्भः स्रवेदामः कुक्षौ शुष्येन्म्रियेत वा ॥ ४७ ॥
वातलैश्च भवेद्गर्भः कुब्जान्धजडवामनः ।
पित्तलैः खलतिः पिङ्गः, श्वित्री पाण्डुः कफात्मभिः ॥४८॥
व्याधींश्चास्या मृदुसुखैरतीक्ष्णैरौषधैर्जयेत् ।

---

१ 'वटसुङ्गा', 'वटशृङ्गा' इति पाठौ. २ 'वायं व्यायामं भा' इति पाठः. ३ 'रकटुका', 'नोत्कुट' इति पाठौ. ४ 'सादिनी' इति पाठः. ५ 'विवसनं' इति पाठः. ६ 'एव गर्भः' इति पाठः.

द्वितीये मासि कललाद्घनः पेश्यथवाऽर्बुदम् ॥ ४९ ॥
पुंस्त्रीक्लीबाः क्रमात्तेभ्यः

तत्र व्यक्तस्य लक्षणम् ।

क्षामता गरिमा कुक्षेर्मूर्च्छा च्छर्दिररोचकः ॥ ५० ॥
जृम्भा प्रसेकः सदनं रोमराज्याः प्रकाशनम् ।
अम्लेष्टता स्तनौ पीनौ सस्तन्यौ कृष्णचूचुकौ ॥ ५१ ॥
पादशोफो विदाहोऽन्ये श्रद्धाश्च विविधात्मिकाः ।
मातृजं ह्यस्य हृदयं मातुश्च हृदयेन तत् ॥ ५२ ॥
सम्बद्धं तेन गर्भिण्या नेष्टं श्रद्धाविमाननम् ।
देयमप्यहितं तस्यै हितोपहितमल्पकम् ॥ ५३ ॥
श्रद्धाविघाताद्गर्भस्य विकृतिश्च्युतिरेव वा ।
व्यक्तीभवति मासेऽस्य तृतीये गात्रपञ्चकम् ॥ ५४ ॥
मूर्धा द्वे सक्थिनी बाहू सर्वसूक्ष्माङ्गजन्म च ।
सममेव हि मूर्धाद्यैर्ज्ञानं च सुखदुःखयोः ॥ ५५ ॥
गर्भस्य नाभौ मातुश्च हृदि नाडी निबध्यते ।
यया स पुष्टिमाप्नोति केदार इव कुल्यया ॥ ५६ ॥
चतुर्थे व्यक्तताऽङ्गानां, चेतनायाश्च पञ्चमे ।
षष्ठे स्नायुसिरारोमबलवर्णनखत्वचाम् ॥ ५७ ॥
सर्वैः सर्वाङ्गसम्पूर्णो भावैः पुष्यति सप्तमे ।
गर्भेणोत्पीडिता दोषास्तस्मिन् हृदयमाश्रिताः ।

---

१ 'कुक्षौ मू' इति पाठः. २ 'होऽन्ने' इति पाठः. ३ 'विधारणम्' इति पाठः. ४ 'धैर्विज्ञानं सु' इति पाठः.

कण्डूं विदाहं कुर्वन्ति गर्भिण्याः किक्किसानि च ॥ ५८ ॥
नवनीतं हितं तत्र कोलाम्बुमधुरौषधैः ।
सिद्धमल्पपटुस्नेहं लघु स्वादु च भोजनम् ॥ ५९ ॥
चन्दनोशीरकल्केन लिम्पेदूरुस्तनोदरम् ।
श्रेष्ठया वैणहरिणशशशोणितयुक्तया ॥ ६० ॥
अश्वघ्नपत्रसिद्धेन तैलेनाभ्यज्य मर्दयेत् ।
पटोलनिम्बमञ्जिष्ठासुरसैः सेचयेत्पुनः ॥ ६१ ॥
दार्वीमधुकतोयेन मृजां च परिशीलयेत् ।
ओजोऽष्टमे सञ्चरति मातापुत्रौ मुहुः क्रमात् ॥ ६२ ॥
तेन तौ म्लानमुदितौ[1] तत्र जातो न जीवति ।
शिशुरोजोनवस्थानान्नारी संशयिता भवेत् ॥ ६३ ॥
क्षीरपेया च पेयाऽत्र सघृताऽन्वासनं घृतम् ।
मधुरैः साधितं शुद्ध्यै पुराणशकृतस्तथा ॥ ६४ ॥
शुष्कमूलककोलाम्लकषायेण प्रशस्यते ।
शताह्वाकल्कितो बस्तिः सतैलघृतसैन्धवः ॥ ६५ ॥
तस्मिंस्त्वेकाहयातेऽपि कालः सूतेरतः परम् ।
वर्षाद्विकारकारी स्यात्कुक्षौ वातेन धारितः ॥ ६६ ॥
शस्तश्च नवमे मासि स्निग्धो मांसरसौदनः ।
बहुस्नेहा यवागूर्वा पूर्वोक्तं चानुवासनम् ॥ ६७ ॥
तत एव पिचुं चास्या योनौ नित्यं निधापयेत् ।
वातघ्नपत्रभङ्गाम्भः शीतं स्नाने[2]ऽन्वहं हितम् ॥ ६८ ॥

---

१ 'तौ स्यातामत्र न' इति पाठः. २ 'हितम्' इति पाठः.

निःस्नेहाङ्गी न नवमान्मासात्प्रभृति वासयेत् ।
प्राग्दक्षिणस्तनस्तन्या पूर्वं तत्पार्श्वचेष्टिनी ॥ ६९ ॥
पुन्नामदौर्हृदप्रश्नरता पुंस्वप्नदर्शिनी ।
उन्नते दक्षिणे कुक्षौ गर्भे च परिमण्डले ॥ ७० ॥
पुत्रं सूतेऽन्यथा कन्यां या चेच्छति नृसङ्गतिम् ।
नृत्यवादित्रगान्धर्वगन्धमाल्यप्रिया च या ॥ ७१ ॥
क्लीबं तत्सङ्करे, तत्र मध्यं कुक्षेः समुन्नतम् ।
यमौ पार्श्वद्वयोन्नामात्कुक्षौ द्रोण्यामिव स्थिते ॥ ७२ ॥
प्राक् चैव नवमान्मासात् सा सूतिगृहमाश्रयेत् ।
देशे प्रशस्ते सम्भारैः सम्पन्नं साधकेऽहनि ॥ ७३ ॥
तत्रोदीक्षेत सा सूतिं सूतिकापरिवारिता ।
[1]अद्यश्वःप्रसवे ग्लानिः कुक्ष्यक्षिश्लथता क्लमः ॥ ७४ ॥
अधोगुरुत्वमरुचिः प्रसेको बहुमूत्रता ।
वेदनोरूदरकटीपृष्ठहृद्बस्तिवङ्क्षणे ॥ ७५ ॥
योनिभेदरुजातोदस्फुरणस्रवणानि च ।
आवीनामनु जन्मातस्ततो गर्भोदकस्रुतिः ॥ ७६ ॥
अथोपस्थितगर्भां तां कृतकौतुकमङ्गलाम् ।
हस्तस्थपुन्नामफलां [2]स्वभ्यक्तोष्णाम्बुसेचिताम् ॥ ७७ ॥
पाययेत्सघृतां पेयां

तनौ भूशयने स्थिताम् ।

---

१ 'आसन्नप्रसवे' इति पाठः. २ 'स्वक्तामुष्णाम्बु' इति पाठः.

आभुग्नसक्थिमुत्तानामभ्यक्ताङ्गीं पुनः पुनः ॥ ७८ ॥
अधो नाभेर्विमृद्नीयात्कारयेज्जृम्भचङ्क्रमम् ।
गर्भः प्रयात्यवागेवं, तल्लिङ्गं हृद्विमोक्षतः ॥ ७९ ॥
आविश्य जठरं गर्भो बस्तेरुपरि तिष्ठति ।
आव्योऽभित्वरयन्त्येनां खट्वामारोपयेत्ततः ॥ ८० ॥
अथ सम्पीडिते गर्भे योनिमस्याः प्रसारयेत्[1] ।
मृदु पूर्वं प्रवाहेत बाढमाप्रसवाच्च सा ॥ ८१ ॥
हर्षयेत्तां मुहुः पुत्रजन्मशब्दजलानिलैः ।
प्रत्यायान्ति तथा प्राणाः सूतिक्लेशावसादिताः ॥ ८२ ॥
धूपयेद्गर्भसङ्गे तु योनिं कृष्णाहिकञ्चुकैः ।
हिरण्यपुष्पीमूलं च पाणिपादेन धारयेत् ॥ ८३ ॥
सुवर्चलां विशल्यां वा जराय्वपतनेऽपि च ।
कार्यमेतत्तथोत्क्षिप्य[2] बाह्वोरेनां विकम्पयेत् ॥ ८४ ॥
कटीमाकोटयेत्पाष्र्ण्या स्फिजौ गाढं निपीडयेत् ।
तालुकण्ठं स्पृशेद्वेण्या मूर्ध्नि दद्यात्स्नुहीपयः ॥ ८५ ॥
भूर्जलाङ्गलिकीतुम्बीसर्पत्वक्कुष्ठसर्षपैः ।
पृथग्द्वाभ्यां समस्तैर्वा योनिलेपनधूपनम् ॥ ८६ ॥
कुष्ठतालीसकल्कं वा सुरामण्डेन पाययेत् ।
यूषेण वा कुलत्थानां बैल्वजेनासवेन[3] वा ॥ ८७ ॥
शताह्वासर्षपाजाजीकिण्वतीक्ष्णकचित्रकैः ।

---

१ 'साधयेत्' इति पाठः. २ 'थोत्कृष्य' इति पाठः.
३ 'बिल्व' इति हेमाद्रिः.

सहिङ्गुकुष्ठमदनैर्मूत्रे क्षीरे च सार्षपम् ॥ ८८ ॥
तैलं सिद्धं हितं पायौ योन्यां वाऽप्यनुवासनम्।
शतपुष्पावचाकुष्ठकणासर्षपकल्कितः ॥ ८९ ॥
निरूहः पातयत्याशु सस्नेहलवणोऽपराम्।
तत्सङ्गे ह्यनिलो हेतुः सा निर्यात्याशु तज्जयात् ॥ ९० ॥
कुशला पाणिनाऽक्तेन हरेत्कृत्तनखेन वा।
मुक्तगर्भापरां योनिं तैलेनाङ्गं च मर्दयेत् ॥ ९१ ॥
मक्कल्लाख्ये शिरोबस्तिकोष्ठशूले तु पाययेत्।
सुचूर्णितं यवक्षारं घृतेनोष्णजलेन वा ॥ ९२ ॥
धान्याम्बु वा गुडव्योषत्रिजातकरजोन्वितम्।
अथ बालोपचारेण बालं योषिदुपाचरेत् ॥ ९३ ॥
सूतिका क्षुद्वती तैलाद्घृताद्वा महतीं पिबेत्।
पञ्चकोलकिनीं मात्रामनु चोष्णं गुडोदकम् ॥ ९४ ॥
वातघ्नौषधतोयं वा, तथा वायुर्न कुप्यति।
विशुध्यति च दुष्टास्रं द्वित्रिरात्रमयं क्रमः ॥ ९५ ॥
स्नेहायोग्या तु निःस्नेहममुमेव विधिं भजेत्।
पीतवत्याश्च जठरं यमकाक्तं विवेष्टयेत् ॥ ९६ ॥
जीर्णे स्नाता पिबेत्पेयां पूर्वोक्तौषधसाधिताम्।
त्र्यहादूर्ध्वं विदार्यादिवर्गकाथेन साधिता ॥ ९७ ॥
हिता यवागूः स्नेहाढ्या सात्म्यतः पयसाऽथवा।
सप्तरात्रात्परं चास्यै क्रमशो बृंहणं हितम् ॥ ९८ ॥

---

१ 'यथा' इति पाठः. २ 'त्रास्याः', 'याऽस्याः' इति पाठौ.

द्वादशाहेऽनतिक्रान्ते पिशितं नोपयोजयेत्[1] ।
यत्नेनोपचरेत्सूतां, दुःसाध्यो हि तदामयः ॥ ९९ ॥
गर्भवृद्धिप्रसवरुक्क्लेदास्रस्रुतिपीडनैः ।
एवं च मासादध्यर्धान्मुक्ताहारादियन्त्रणा ॥ १०० ॥
गतसूताभिधाना स्यात्पुनरार्तवदर्शनात् ॥ $१००\frac{१}{२}$ ॥"

## द्वितीयोऽध्यायः ।

अथातो गर्भव्यापदं शारीरं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥
"गर्भिण्याः परिहार्याणां सेवया रोगतोऽथ[2] वा ।
पुष्पे दृष्टेऽथवा शूले बाह्यान्तः स्निग्धशीतलम् ॥ १ ॥
सेव्याम्भोजहिमक्षीरिवल्ककल्काज्यलेपितान् ।
धारयेद्योनिबस्तिभ्यामार्द्रानार्द्रान् पिचुनक्तकान् ॥ २ ॥
शतधौतघृताक्तां वा तदम्भस्यवगाहयेत् ।
ससिताक्षौद्रकुमुदकमलोत्पलकेसरम् ॥ ३ ॥
लिह्यात् क्षीरघृतं खादेच्छृङ्गाटककसेरुकम् ।
पिबेत्कान्ताब्जशालूकबालोदुम्बरवत्पयः ॥ ४ ॥
शृतेन शालिकाकोलीद्विबलामधुकेक्षुभिः ।
पयसा रक्तशाल्यन्नमद्यात्समधुशर्करम् ॥ ५ ॥
रसैर्वा जाङ्गलैः

१ 'नैव योज' इति पाठः. २ 'तोऽपि वा' इति पाठः.

शुद्धिवर्जं चाऽशोकमाचरेत् ।
असम्पूर्णत्रिमासायाः प्रत्याख्याय प्रसाधयेत् ॥ ६ ॥
आमान्वये च
तत्रेष्टं शीतं रूक्षोपसंहितम् ।
उपवासो घनोशीरगुडूच्यरलुधान्यकाः ॥ ७ ॥
दुरालभापर्पटकचन्दनातिविषाबलाः ।
कथिताः सलिले पानं तृणधान्यानि भोजनम् ॥ ८ ॥
मुद्गादियूषैरामे तु जिते स्निग्धादि पूर्ववत् ।
गर्भे निपतिते तीक्ष्णं मद्यं सामर्थ्यतः पिबेत् ॥ ९ ॥
गर्भकोष्ठविशुद्ध्यर्थमर्तिविस्मरणाय च ।
लघुना पञ्चमूलेन रूक्षां पेयां ततः पिबेत् ॥ १० ॥
पेयाममद्यपा कल्के साधितां पाञ्चकौलिके ।
बिल्वादिपञ्चककाथे तिलोद्दालकतण्डुलैः ॥ ११ ॥
मासतुल्यदिनान्येवं पेयादिः पतिते क्रमः ।
लघुरस्नेहलवणो दीपनीययुतो हितः ॥ १२ ॥
दोषधातुपरिक्लेदशोषार्थं विधिरित्ययम् ।
स्नेहाद्यबस्तयश्चोर्ध्वं बल्यदीपनजीवनाः ॥ १३ ॥
सञ्जातसारे महति गर्भे योनिपरिस्रवात् ।
वृद्धिमप्राप्नुवन् गर्भः कोष्ठे तिष्ठति सस्फुरः ॥ १४ ॥
उपविष्टकमाहुस्तं, वर्धते तेन नोदरम् ।

---

१ 'वाऽस्रो' इति पाठः, २ 'न्यादिभ्यो' इति पाठः.
३ 'हि सः' इति पाठः.

शोकोपवासरूक्षाद्यैरथवा योन्यतिस्रवात् ॥ १५ ॥
वाते क्रुद्धे कृशः शुष्येद्गर्भो नागोदरं तु तम् ।
उदरं वृद्धमप्यत्र हीयते स्फुरणं चिरात् ॥ १६ ॥
तयोर्बृंहणवातघ्नमधुरद्रव्यसंस्कृतैः ।
घृतक्षीररसैस्तृप्तिरामगर्भांश्च खादयेत् ॥ १७ ॥
तैरेव च सुभिक्षायाः क्षोभणं यानवाहनैः ।
लीनाख्ये निस्फुरे श्येनगोमत्स्योत्क्रोशबर्हिजाः ॥ १८ ॥
रसा बहुघृता देया माषमूलकजा अपि ।
बालबिल्वं तिलान्माषान्सक्तूंश्च पयसा पिबेत् ॥ १९ ॥
समेध्यमांसं मधु वा कट्यभ्यङ्गं च शीलयेत् ।
हर्षयेत्सततं चैनामेवं गर्भः प्रवर्धते ॥ २० ॥
पुष्टोऽन्यथा वर्षगणैः कृच्छ्राज्जायेत, नैव वा ।
उदावर्तं तु गर्भिण्याः स्नेहैराशुतरां जयेत् ॥ २१ ॥
योग्यैश्च बस्तिभिर्हन्यात्सगर्भां स हि गर्भिणीम् ।
गर्भेऽतिदोषोपचयादपथ्यैर्दैवतोऽपि वा ॥ २२ ॥
मृतेऽन्तरुदरं शीतं स्तब्धं ध्मातं भृशव्यथम् ।
गर्भास्पन्दो भ्रमतृष्णा कृच्छ्रादुच्छ्वसनं क्लमः ॥ २३ ॥
अरतिः स्रस्तनेत्रत्वमावीनामसमुद्भवः ।
तस्याः कोष्णाम्बुसिक्तायाः पिष्ट्वा योनिं प्रलेपयेत् ॥२४॥
गुडं किण्वं सलवणं तथान्तः पूरयेन्मुहुः ।
घृतेन कल्कीकृतया शाल्मल्यतसिपिच्छया ॥ २५ ॥

१ 'तत्' इति पाठः. २ 'सुतृप्तायाः' इति पाठः.

मन्त्रैर्योगैर्जरायूक्तैर्मूढगर्भो न चेत्पतेत् ।
अथापृच्छ्येश्वरं वैद्यो यत्नेनाशु तमाहरेत् ॥ २६ ॥
हस्तमभ्यज्य योनिं च साज्यशाल्मलिपिच्छया ।
हस्तेन शक्यं तेनैव
गात्रं च विषमं[1] स्थितम् ॥ २७ ॥
आञ्छनोत्पीडसम्पीडविक्षेपोत्क्षेपणादिभिः ।
आनुलोम्य[2] समाकर्षेद्योनिं प्रत्यार्जवागतम् ॥ २८ ॥
हस्तपादशिरोभिर्यो योनिं भुग्नः प्रपद्यते ।
पादेन योनिमेकेन भुग्नोऽन्येन गुदं च यः ॥ २९ ॥
विष्कम्भौ नाम तौ मूढौ शस्त्रदारणमर्हतः ।
मण्डलाङ्गुलिशस्त्राभ्यां तत्र कर्म प्रशस्यते ॥ ३० ॥
वृद्धिपत्रं हि तीक्ष्णाग्रं न योनाववचारयेत् ।
पूर्वं शिरःकपालानि दारयित्वा विशोधयेत् ॥ ३१ ॥
कक्षोरस्तालुचिबुकप्रदेशेऽन्यतमे ततः ।
समालम्ब्य दृढं कर्षेत्कुशलो गर्भशङ्कुना ॥ ३२ ॥
अभिन्नशिरसं त्वक्षिकूटयोर्गण्डयोरपि ।
बाहुं छित्वांऽससक्तस्य वाताध्मातोदरस्य तु ॥ ३३ ॥
विदार्य कोष्ठमन्त्राणि बहिर्वा सन्निरस्य च ।
कटीसक्तस्य तद्वच्च तत्कपालानि दारयेत् ॥ ३४ ॥
यद्यद्वायुवशादङ्गं सज्जेद्गर्भस्य खण्डशः ।
तत्तच्छित्त्वाऽऽहरेत्सम्यग्रक्षेन्नारीं च यत्नतः ॥ ३५ ॥

---

१ 'षमस्थि' इति पाठः. २ 'आनुलोम्ये स' इति पाठः.

गर्भस्य हि गतिं चित्रां करोति विगुणोऽनिलः ।
तत्रानल्पमतिस्तस्मादवस्थापेक्षमाचरेत् ॥ ३६ ॥
छिन्द्याद्गर्भं न जीवन्तं मातरं स हि मारयेत् ।
सहात्मना, न चोपेक्ष्यः क्षणमप्यस्तजीवितः ॥ ३७ ॥
योनिसंवरणभ्रंशमक्कल्लश्वासपीडिताम्[1] ।
पूत्युद्गारां हिमाङ्गीं च मूढगर्भां परित्यजेत् ॥ ३८ ॥
अथापतन्तीमपरां पातयेत्पूर्ववद्भिषक् ।
एवं निर्हृतशल्यां तु सिञ्चेदुष्णेन वारिणा ॥ ३९ ॥
दद्यादभ्यक्तदेहायै योनौ स्नेहपिचुं ततः ।
योनिर्मृदुर्भवेत्तेन शूलं चास्याः प्रशाम्यति ॥ ४० ॥
दीप्यकातिविषारास्नाहिङ्ग्वेलापञ्चकोलकात् ।
चूर्णं स्नेहेन कल्कं वा क्वाथं वा(तां)पाययेत्ततः॥ ४१ ॥
कटुकातिविषापाठाशाकत्वग्घिङ्गुतेजिनीः[2] ।
तद्वच्च दोषस्यन्दार्थं वेदनोपशमाय च ॥ ४२ ॥
त्रिरात्रमेवं, सप्ताहं स्नेहमेव ततः पिबेत् ।
सायं पिबेदरिष्टं च तथा सुकृतमासवम् ॥ ४३ ॥
शिरीषककुभक्वाथपिचून् योनौ विनिक्षिपेत् ।
उपद्रवाश्च येऽन्ये स्युस्तान् यथास्वमुपाचरेत् ॥ ४४ ॥
पयो वातहरैः सिद्धं दशाहं भोजने हितम् ।
रसो दशाहं च परं लघुपथ्याल्पभोजना ॥ ४५ ॥

---

१ 'मक्कल्ल', 'मक्कल', 'मक्कल्ल' इति पाठाः. २ 'तेजनीः' इति पाठः.

स्वेदाभ्यङ्गपरा स्नेहान् बलातैलादिकान् भजेत्।
ऊर्ध्वं चतुर्भ्यो मासेभ्यः सा क्रमेण सुखानि च ॥ ४६ ॥
बलामूलकषायस्य भागाः षट् पयसस्तथा।
यवकोलकुलत्थानां दशमूलस्य चैकतः ॥ ४७ ॥
निष्क्काथभागो भागश्च तैलस्य तु चतुर्दशः।
द्विमेदादारुमञ्जिष्ठाकाकोलीद्वयचन्दनैः ॥ ४८ ॥
सारिवाकुष्ठतगरजीवकर्षभसैन्धवैः।
कालानुसार्यांशैलेयवचागुरुपुनर्नवैः ॥ ४९ ॥
अश्वगन्धावरीक्षीरशुक्लायष्टीवरारसैः।
शताह्वाशूर्पपर्ण्येलात्वक्पत्रैः श्लक्ष्णकल्कितैः ॥ ५० ॥
पक्कं मृद्वग्निना तैलं सर्ववातविकारजित्।
सूतिकाबालमर्मास्थिहतक्षीणेषु पूजितम् ॥ ५१ ॥
ज्वरगुल्मग्रहोन्मादमूत्राघाताऽन्त्रवृद्धिजित्।
धन्वन्तरेरभिमतं योनिरोगक्षयापहम् ॥ ५२ ॥
बस्तिद्वारे विपन्नायाः कुक्षिः प्रस्पन्दते यदि।
जन्मकाले ततः शीघ्रं पाटयित्वोद्धरेच्छिशुम् ॥ ५३ ॥
मधुकं शाकबीजं च पयस्या सुरदारु च।
अश्मन्तकः कृष्णतिलास्ताम्रवल्ली शतावरी ॥ ५४ ॥
वृक्षादनी पयस्या च लता सोत्पलसारिवा।

---

१ 'सायंशे', 'सारांशे' इति पाठौ. २ 'स्थिक्षत' इति पाठः. ३ 'स्याऽमर.' इति पाठः. ४ 'ता चोत्पल' इति पाठः.

अनन्ता सारिवा रास्ना पद्मा च मधुयष्टिका ॥ ५५ ॥
बृहतीद्वयकाश्मर्यक्षीरिशुङ्गत्वचा घृतम् ।
पृश्निपर्णी बला शिग्रुः श्वदंष्ट्रा मधुपर्णिका ॥ ५६ ॥
शृङ्गाटकं बिसं द्राक्षा कसेरु मधुकं सिता ।
सप्तैतान् पयसा योगानर्धश्लोकसमापनान् ॥ ५७ ॥
क्रमात्सप्तसु मासेषु गर्भे स्रवति योजयेत् ।
कपित्थबिल्वबृहतीपटोलेक्षुनिदिग्धिकात् ॥ ५८ ॥
मूलैः शृतं प्रयुञ्जीत क्षीरं मासे तथाऽष्टमे ।
नवमे सारिवानन्तापयस्यामधुयष्टिभिः ॥ ५९ ॥
योजयेद्दशमे मासि सिद्धं क्षीरं पयस्यया ।
अथवा यष्टिमधुकनागरामरदारुभिः ॥ ६० ॥

अवस्थितं लोहितमङ्गनाया
वातेन गर्भं ब्रुवतेऽनभिज्ञाः ।
गर्भाकृतित्वात्कटुकोष्णतीक्ष्णैः
स्रुते पुनः केवल एव रक्ते ॥ ६१ ॥
गर्भं जडा भूतहृतं वदन्ति
मूर्तैर्न दृष्टं हरणं यतस्तैः ।
ओजोशनत्वादथवाऽव्यवस्थै-
र्भूतैरुपेक्ष्येत न गर्भमाता ॥ ६२ ॥"

---

१ 'ग्राहमधु' इति पाठः. २ 'रिशृङ्ग' इति पाठः. ३ 'बल्या' इति पाठः. ४ 'ग्धिजैः' इति पाठः.

## तृतीयोऽध्यायः ।

अथातोऽङ्गविभागं शारीरं व्याख्यास्यामः ।

इति ह स्माहुरात्रेयादयो महर्षयः ॥

"शिरोऽन्तराधिर्द्वौ बाहू सक्थ्नीति समासतः ।
षडङ्गमङ्गं प्रत्यङ्गं तस्याक्षिहृदयादिकम् ॥ १ ॥
शब्दः स्पर्शश्च रूपं च रसो गन्धः क्रमाद्गुणाः ।
खानिलाग्न्यब्भुवाम्
एकगुणवृद्ध्यन्वयः परे ॥ २ ॥
तत्र खात् खानि देहेऽस्मिन् श्रोत्रं शब्दो विविक्तता ।
वातात्स्पर्शस्त्वगुच्छ्वासा वह्नेर्दृग्रूपपक्तयः ॥ ३ ॥
आप्या जिह्वारसक्लेदा घ्राणगन्धास्थि पार्थिवम् ।
मृद्वत्र मातृजं रक्तमांसमज्जगुदादिकम् ॥ ४ ॥
पैतृकं तु स्थिरं शुक्रधमन्यस्थिकचादिकम् ।
चैतनं चित्तमक्षाणि नानायोनिषु जन्म च ॥ ५ ॥
सात्म्यजं त्वायुरारोग्यमनालस्यं प्रभा बलम् ।
रसजं वपुषो जन्म वृत्तिर्वृद्धिरलोलता ॥ ६ ॥
सात्त्विकं शौचमास्तिक्यं शुक्लधर्मरुचिर्मतिः ।
राजसं बहुभाषित्वं मानक्रुद्दम्भमत्सरम् ॥ ७ ॥
तामसं भयमज्ञानं निद्राऽऽलस्यं विषादिता ।
इति भूतमयो देहः
तत्र सप्त त्वचोऽसृजः ॥ ८ ॥

---

१ 'खाग्न्यम्बुभूष्वेक' पा. २ 'वृद्ध्याऽन्वयः' पा. ३ 'आत्मजं चि' पा.

पच्यमानात्प्रजायन्ते क्षीरात्सन्तानिका इव ।
धात्वाशयान्तरक्लेदो विपक्वः स्वंस्वमूष्मणा ॥ ९ ॥
श्लेष्मस्नाय्वपराच्छन्नः कलाख्यः काष्ठसारवत् ।
ताः सप्त

सप्त चाधारा रक्तस्याद्यः क्रमात् परे ॥ १० ॥
कफामपित्तपक्वानां वायोर्मूत्रस्य च स्मृताः ।
गर्भाशयोऽष्टमः स्त्रीणां पित्तपक्वाशयान्तरे ॥ ११ ॥
कोष्ठाङ्गानि स्थितान्येषु हृदयं क्लोम फुप्फुसम् ।
यकृत्प्लीहोन्दुकं वृक्कौ नाभिडिम्भान्त्रबस्तयः ॥ १२ ॥
दश जीवितधामानि शिरोरसनबन्धनम् ।
कण्ठोऽस्रं हृदयं नाभिर्बस्तिः शुक्रौजसी गुदम् ॥ १३ ॥
जालानि कण्डराश्चाङ्गे पृथक् षोडश निर्दिशेत् ।
षट् कूर्चाः सप्त सीवन्यो मेढ्रजिह्वाशिरोगताः ॥ १४ ॥
शस्त्रेण ताः परिहरेच्चतस्रो मांसरज्जवः ।
चतुर्दशास्थिसङ्घाताः, सीमन्ता द्विगुणा नव ॥ १५ ॥
अस्थ्नां शतानि षष्टिश्च त्रीणि दन्तनखैः सह ।
धन्वन्तरिस्तु त्रीण्याह, सन्धीनां च शतद्वयम् ॥ १६ ॥
दशोत्तरं

सहस्रे द्वे निजगादात्रिनन्दनः ।

---

१ 'स्याधः क्र' इति पाठः. २ 'सेवन्यो' 'सेविन्यो' इति पाठौ. ३ 'शस्त्रेणैताः' इति पाठः. ४ 'षष्ठीनि त्री' इति पाठः.

स्नाम्नां नवशती

पञ्च पुंसां पेशीशतानि तु ॥ १७ ॥
अधिका विंशतिः स्त्रीणां योनिस्तनसमाश्रिताः।
दश मूलसिरा हृत्स्थास्ताः सर्वं सर्वतो वपुः ॥ १८ ॥
रसात्मकं वहन्त्योजस्तन्निबद्धं हि चेष्टितम्।
स्थूलमूलाः सुसूक्ष्माग्राः पत्ररेखाप्रतानवत् ॥ १९ ॥
भिद्यन्ते तास्ततः सप्तशतान्यासां भवन्ति तु।
तत्रैकैकं च शाखायां शतं, तस्मिन्न वेधयेत् ॥ २० ॥
सिरां जालन्धरां नाम तिस्रश्चाभ्यन्तराश्रिताः।
षोडशद्विगुणाः श्रोण्यां, तासां द्वे द्वे तु वङ्क्षणे ॥ २१ ॥
द्वे द्वे कटिकतरुणे शस्त्रेणाष्टौ स्पृशेन्न ताः।
पार्श्वयोः षोडशैकैकामूर्ध्वगां वर्जयेत्तयोः ॥ २२ ॥
द्वादशद्विगुणाः पृष्ठे पृष्ठवंशस्य पार्श्वयोः।
द्वे द्वे तत्रोर्ध्वगामिन्यौ न शस्त्रेण परामृशेत् ॥ २३ ॥
पृष्ठवज्जठरे तासां मेहनस्योपरि स्थिते।
रोमराजीमुभयतो द्वे द्वे शस्त्रेण न स्पृशेत् ॥ २४ ॥
चत्वारिंशदुरस्यासां चतुर्दश न वेधयेत्।
स्तनरोहिततन्मूलहृदये तु पृथग्द्वयम् ॥ २५ ॥
अपस्तम्भाख्ययोरेकां तथाऽपालापयोरपि।
ग्रीवायां पृष्ठवत्तासां नीले मन्ये कृकाटिके ॥ २६ ॥

---

१ 'स्नायोर्नव' इति पाठः. २ 'कैकन्न शा' इति पाठः. ३ 'येत्सिराम्' इति पाठः. ४ 'पार्श्वगे' इति पाठः.

विधुरे मातृकाश्चाष्टौ षोडशेति[1] परित्यजेत् ।
हन्वोः षोडश, तासां द्वे सन्धिबन्धनकर्मणी ॥ २७ ॥
जिह्वायां हनुवत्तासामधो द्वे रसबोधने ।
द्वे च वाचःप्रवर्तिन्यौ
नासायां चतुरुत्तरा ॥ २८ ॥
विंशतिर्गन्धवेदिन्यौ तासामेकां च तालुगाम् ।
षट्पञ्चाशन्नयनयोर्निमेषोन्मेषकर्मणी ॥ २९ ॥
द्वे द्वे, अपाङ्गयोर्द्वे च तासां षडिति वर्जयेत् ।
नासानेत्राश्रिताः षष्टिर्ललाटे, स्थपनीश्रिताम् ॥ ३० ॥
तत्रैकां, द्वे तथाऽऽवर्तौ, चतस्रश्च कचान्तगाः ।
सप्तैवं वर्जयेत्तासाम्
कर्णयोः षोडशात्र तु ॥ ३१ ॥
द्वे शब्दबोधने शङ्खौ सिरास्ता एव चाश्रिताः ।
द्वे शङ्खसन्धिगे तासाम्
मूर्ध्नि द्वादश तत्र तु ॥ ३२ ॥
एकैकां पृथगुत्क्षेपसीमन्ताधिपतिस्थिताम् ।
इत्यवेध्यविभागार्थं प्रत्यङ्गं वर्णिताः सिराः ॥ ३३ ॥
अवेध्यास्तत्र कार्त्स्न्येन देहेऽष्टानवतिस्तथा ।
सङ्कीर्णा ग्रथिताः क्षुद्रा वक्राः सन्धिषु चाश्रिताः ॥३४॥
तासां शतानां सप्तानां पादोऽस्रं वहते पृथक् ।
वातपित्तकफैर्जुष्टं शुद्धं चैवं स्थिरा मलाः ॥ ३५ ॥

१ 'डशैता प' इति पाठः.

शरीरमनुगृह्णन्ति पीडयन्त्यन्यथा पुनः ।
तत्र श्यावारुणाः सूक्ष्माः पूर्णरिक्ताः क्षणात्सिराः ॥ ३६ ॥
प्रस्पन्दिन्यश्च वातास्रं वहन्ते
पित्तशोणितम् ।
स्पर्शोष्णाः शीघ्रवाहिन्यो नीलपीताः
कफं पुनः ॥ ३७ ॥
गौर्यः स्निग्धाः स्थिराः शीताः
संसृष्टं लिङ्गसङ्करे ।
गूढाः समस्थिताः स्निग्धा रोहिण्यः शुद्धशोणितम् ॥३८॥
धमन्यो नाभिसम्बद्धा विंशतिश्चतुरुत्तरा ।
ताभिः परिवृ[1]ता नाभिश्चक्रनाभिरिवारकैः ॥ ३९ ॥
ताभिश्चोर्ध्वमधस्तिर्यग्देहोऽयमनुगृह्यते ।
स्रोतांसि नासिके कर्णौ नेत्रे पाय्वास्यमेहनम् ॥ ४० ॥
स्तनौ रक्तपथश्चेति नारीणामधिकं त्रयम् ।
जीवितायतनान्यन्तः स्रोतांस्याहुस्त्रयोदश ॥ ४१ ॥
प्राणधातुमलाम्भोऽन्नवाहीनि
अहितसेवनात् ।
तानि दुष्टानि रोगाय, विशुद्धानि सुखाय च ॥ ४२ ॥
स्वधातुसमवर्णानि वृत्तस्थूलान्यणूनि च ।
स्रोतांसि दीर्घाण्याकृत्या प्रतानसदृशानि च ॥ ४३ ॥
आहारश्च विहारश्च यः स्याद्दोषगुणैः समः ।

---

१ 'वृतो' इति पाठः.

धातुभिर्विगुणो यश्च स्रोतसां स प्रदूषकः ॥ ४४ ॥
अतिप्रवृत्तिः सङ्गो वा सिराणां ग्रन्थयोऽपि वा ।
विमार्गतो वा गमनं स्रोतसां दुष्टिलक्षणम् ॥ ४५ ॥
बिसानामिव सूक्ष्माणि दूरं प्रविसृतानि च ।
द्वाराणि स्रोतसां देहे रसो यैरुपचीयते ॥ ४६ ॥
व्यधे तु स्रोतसां मोहकम्पाध्मानवमिज्वराः ।
प्रलापशूलविण्मूत्ररोधा मरणमेव वा ॥ ४७ ॥
स्रोतोविद्धमतो वैद्यः प्रत्याख्याय प्रसाधयेत् ।
उद्धृत्य शल्यं यत्नेन सद्यःक्षतविधानतः ॥ ४८ ॥
अन्नस्य पक्ता पित्तं तु पाचकाख्यं पुरेरितम् ।
दोषधातुमलादीनामूष्मेत्यात्रेयशासनम् ॥ ४९ ॥
"वामपार्श्वाश्रितं नाभेः किंचित्सूर्यस्य मण्डलम् ।
तन्मध्ये मण्डलं सौम्यं तन्मध्येऽग्निर्व्यवस्थितः ॥
जरायुमात्रप्रच्छन्नः काचकोशस्थदीपवत् ।"
तदधिष्ठानमन्नस्य ग्रहणाद्ग्रहणी मता ।
सैव धन्वन्तरिमते कला पित्तधराह्वया ॥ ५० ॥
आयुरारोग्यवीर्यौजोभूतधात्वग्निपुष्टये ।
स्थिता पक्वाशयद्वारि भुक्तमार्गार्गलेव सा ॥ ५१ ॥
भुक्तमामाशये रुद्ध्वा सा विपाच्य नयत्यधः ।
बलवत्यबला त्वन्नमाममेव विमुञ्चति ॥ ५२ ॥
ग्रहण्या बलमग्निर्हि स चापि ग्रहणीबलः ।

२ 'दुष्टल' इति पाठः. २ 'या' इति पाठः.

दूषितेऽग्नावतो दुष्टा ग्रहणी रोगकारिणी ॥ ५३ ॥
यदन्नं देहधात्वोजोबलवर्णादिपोषणम् ।
तत्राग्निर्हेतुराहारान्न ह्यपक्वाद्रसादयः ॥ ५४ ॥
अन्नं कालेऽभ्यवहृतं कोष्ठं[1] प्राणानिलाहृतम् ।
द्रवैर्विभिन्नसङ्घातं नीतं स्नेहेन मार्दवम् ॥ ५५ ॥
सन्धुक्षितः समानेन पचत्यामाशयस्थितम् ।
औदर्योऽग्निर्यथा बाह्यः स्थालीस्थं तोयतण्डुलम् ॥ ५६ ॥
आदौ षड्रसमप्यन्नं मधुरीभूतमीरयेत् ।
[2]फेनीभूतं कफं, यातं विदाहादम्लतां ततः ॥ ५७ ॥
पित्तमामाशयात्कुर्याच्च्यवमानं, च्युतं पुनः ।
अग्निना शोषितं पक्वं पिण्डितं कटु मारुतम् ॥ ५८ ॥
भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः ।
पञ्चाहारगुणान्स्वान् स्वान् पार्थिवादीन् पचन्त्यनु ॥ ५९ ॥
यथास्वं ते च पुष्णन्ति[3] पक्वा भूतगुणान् पृथक् ।
पार्थिवाः पार्थिवानेव शेषाः शेषांश्च देहगान् ॥ ६० ॥
किट्टं सारश्च[4] तत्पक्वमन्नं सम्भवति द्विधा ।
तत्राच्छं किट्टमन्नस्य मूत्रं विद्याद्घनं शकृत् ॥ ६१ ॥
सारस्तु सप्तभिर्भूयो यथास्वं पच्यतेऽग्निभिः ।
रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि[5] च ॥ ६२ ॥
अस्थ्नो मज्जा ततः शुक्रं शुक्राद्गर्भः प्रजायते[6] ।

---

१ 'कोष्ठे' इति पा. २ 'फेनभूतं' इति पा. ३ 'पुष्यन्ति' पा.
४ 'रसधा पक्व' पा. ५ 'मेदोऽस्थि मेदसः' पा. ६ 'प्रसादजः' पा.

कफः पित्तं मलाः[1] खेषु प्रस्वेदो नखरोम च ॥ ६३ ॥
स्नेहोऽक्षित्वग्विशामोजो धातूनां क्रमशो मलाः ।
प्रसादकिट्टौ धातूनां पाकादेवं द्विधर्च्छतः ॥ ६४ ॥
परस्परोपसंस्तम्भाद्धातुस्नेहपरम्परा[2] ।
केचिदाहुरहोरात्रात्षडहादपरे, परे ॥ ६५ ॥
[3]मासेन याति शुक्रत्वमन्नं पाकक्रमादिभिः[4] ।
[5]सन्तता भोज्यधातूनां परिवृत्तिस्तु चक्रवत् ॥ ६६ ॥
वृष्यादीनि प्रभावेण[6] सद्यः शुक्रादि[7] कुर्वते ।
प्रायः करोत्यहोरात्रात्कर्मान्यदपि भेषजम् ॥ ६७ ॥
व्यानेन रसधातुर्हि विक्षेपोचितकर्मणा ।
युगपत्सर्वतोऽजस्रं देहे विक्षिप्यते सदा ॥ ६८ ॥
क्षिप्यमाणः खवैगुण्याद्रसः सजति यत्र सः ।
तस्मिन्विकारं कुरुते खे वर्षमिव तोयदः ॥ ६९ ॥
दोषाणामपि चैवं स्यादेकदेशप्रकोपणम् ।
भक्षभौतिकधात्वग्निकर्मेति परिभाषितम् ॥ ७० ॥
अन्नस्य पक्ता सर्वेषां पक्तॄणामधिको मतः ।
तन्मूलास्ते हि तद्वृद्धिक्षयवृद्धिक्षयात्मकाः ॥ ७१ ॥
तस्मात्तं विधिवद्युक्तैरन्नपानेन्धनैर्हितैः ।
पालयेत्प्रयतस्तस्य स्थितौ ह्यायुर्बलस्थितिः ॥ ७२ ॥

---

१ 'मलः' इत्यरुणः. २ 'म्भा धातु' इति पाठः. ३ 'मासाऽप्ययाति' इति पाठः. ४ 'मादिति' इति पाठः. ५ 'सन्तत्या' इति पाठः. ६ 'प्रभावात्तु' पाठः. ७ 'शुक्रं प्रकु' पाठः.

समः समाने स्थानस्थे विषमोऽग्निर्विमार्गगे ।
पित्ताभिमूर्च्छिते तीक्ष्णो मन्दोऽग्निःकफपीडिते ॥ ७३ ॥
समोऽग्निर्विषमस्तीक्ष्णो मन्दश्चैवं चतुर्विधः ।
यः पचेत्सम्यगेवान्नं भुक्तं सम्यक् समस्त्वसौ[1] ॥ ७४ ॥
विषमोऽसम्यगप्याशु[2] सम्यग्वाऽपि चिरात्पचेत् ।
तीक्ष्णो वह्निः पचेच्छीघ्रमसम्यगपि भोजनम् ॥ ७५ ॥
मन्दस्तु सम्यगप्यन्नमुपयुक्तं[3] चिरात्पचेत् ।
कृत्वाऽऽस्यशोषाटोपान्त्रकूजनाध्मानगौरवम् ॥ ७६ ॥
"शान्तेऽग्नौ म्रियते, युक्ते चिरं जीवत्यनामयः ।
रोगी स्याद्विकृते, मूलमग्निस्तस्मान्निरुच्यते ॥"
सहजं कालजं युक्तिकृतं देहबलं त्रिधा ।
तत्र सत्त्वशरीरोत्थं प्राकृतं सहजं बलम् ॥ ७७ ॥
वयस्कृतमृतूत्थं च कालजं, युक्तिजं पुनः ।
विहाराहारजनितं तथोर्जस्करयोगजम् ॥ ७८ ॥
देशोऽल्पवारिद्रुनगो जाङ्गलः स्वल्परोगदः ।
आनूपो विपरीतोऽस्मात्समः साधारणः स्मृतः ॥ ७९ ॥
मज्जमेदोवसामूत्रपित्तश्लेष्मशकृन्त्यसृक् ।
रसो जलं च देहेऽस्मिन्नेकैकाञ्जलिवर्धितम् ॥ ८० ॥
पृथक् स्वप्रसृतं प्रोक्तमोजोमस्तिष्करेतसाम् ।
द्वावञ्जली तु स्तन्यस्य चत्वारो रजसः स्त्रियाः ॥ ८१ ॥

---

१ 'समस्तु सः' अरुणः. २ 'म्यगेवाशु सम्यगेव चि' इति पाठः. ३ 'पभुक्तं' इति पाठः.

समधातोरिदं मानं विद्याद्वृद्धिक्षयावतः ॥ ८२ ॥
शुक्रासृग्गर्भिणीभोज्यचेष्टागर्भाशयर्तुषु ।
यः स्याद्दोषोऽधिकस्तेन प्रकृतिः सप्तधोदिता ॥ ८३ ॥
विभुत्वादाशुकारित्वाद्बलित्वादन्यकोपनात् ।
स्वातन्त्र्याद्बहुरोगत्वाद्दोषाणां प्रबलोऽनिलः ॥ ८४ ॥

प्रायोऽत एव पवनाध्युषिता मनुष्या
दोषात्मकाः स्फुटितधूसरकेशगात्राः ।
शीतद्विषश्चलधृतिस्मृतिबुद्धिचेष्टा-
सौहार्ददृष्टिगतयोऽतिबहुप्रलापाः ॥ ८५ ॥
अल्प[1]वित्त[2]बलजीवितनिद्राः
सन्नसक्तचलजर्जरवाचः ।
नास्तिका बहुभुजः सविलासा
गीतहासमृगयाकलिलोलाः ॥ ८६ ॥
मधुराम्लपटूष्णसात्म्यकाङ्क्षाः
कृशदीर्घाकृतयः सशब्द[3]याताः ।
न दृढा न जितेन्द्रिया न चार्या
न च कान्तादयिता बहुप्रजा वा ॥ ८७ ॥
नेत्राणि [4]चैषां खरधूसराणि
वृत्तान्यचारूणि मृतोपमानि ।

---

१ 'ल्पपित्त' इति पाठः. २ 'त्तकफजी' इति पाठः
३ 'याना' इति पा. ४ 'वैषां' इति पाठः.

उन्मीलितानीव भवन्ति सुप्ते

शैलद्रुमांस्ते गगनं च यान्ति ॥ ८८ ॥

धन्या मत्सराध्माताः स्तेनाः [1]प्रोद्धद्धपिण्डिकाः ।

शृगालोष्ट्रगृध्राखुकाकानूकाश्च वातिकाः ॥ ८९ ॥

पित्तं वह्निर्वह्निजं वा यदस्मा-

त्पित्तोद्रिक्त[2]स्तीक्ष्णतृष्णाबुभुक्षः ।

गौरोष्णाङ्गस्ताम्रहस्ताङ्घ्रिवक्त्रः

शूरो मानी पिङ्गकेशोऽल्परोमा ॥ ९० ॥

दयितमाल्यविलेपनमण्डनः

सुचरितः शुचिराश्रितवत्सलः ।

विभवसाहसबुद्धिबलान्वितो

भवति भीषु गतिर्द्विषतामपि ॥ ९१ ॥

मेधावी प्रशिथिलसन्धिबन्धमांसो

नारीणामनभिमतोऽल्पशुक्रकामः ।

आवासः पलिततरङ्गनीलिकानां

भुङ्क्तेऽन्नं मधुरकषायतिक्तशीतम् ॥ ९२ ॥

घर्मद्वेषी स्वेदनः पूतिगन्धि-

र्भूर्युच्चारक्रोधपानाशनेर्ष्यः ।

सुप्तः पश्येत्कर्णिकारान्पलाशान्

दिग्दाहोल्काविद्युदर्कानलांश्च ॥ ९३ ॥

१ 'प्रोद्धृत्तपि' इति पाठः. २ 'स्तीव्रतृ' इति पाठः.

तनूनि पिङ्गानि चलानि चैषां
तन्वल्पपक्ष्माणि हिमप्रियाणि ।
क्रोधेन मद्येन रवेश्च भासा
रागं व्रजन्त्याशु विलोचनानि ॥ ९४ ॥

मध्यायुषो मध्यबलाः पण्डिताः क्लेशभीरवः ।
व्याघ्रर्क्षकपिमार्जारयक्षानूकाश्च पैत्तिकाः ॥ ९५ ॥

श्लेष्मा सोमः श्लेष्मलस्तेन सौम्यो
गूढस्निग्धश्लिष्टसन्ध्यस्थिमांसः ।
क्षुत्तृड्दुःखक्लेशघर्मैरतप्तो
बुद्ध्या युक्तः सात्त्विकः सत्यसन्धः ॥ ९६ ॥

प्रियङ्गुदूर्वाशरकाण्डशस्त्र-
गोरोचनापद्मसुवर्णवर्णः ।
प्रलम्बबाहुः पृथुपीनवक्षा
महाललाटो घननीलकेशः ॥ ९७ ॥

मृद्वङ्गः समसुविभक्तचारुदेहो
बह्वोजोरतिरसशुक्रपुत्रभृत्यः ।
धर्मात्मा वदति न निष्ठुरं च जातु
प्रच्छन्नं वहति दृढं चिरं च वैरम् ॥ ९८ ॥

समदद्विरदेन्द्रतुल्ययातो
जलदाम्भोधिमृदङ्गसिंहघोषः ।

---

१ 'वैषा' इति पाठः. २ 'रक्षुकातु' इति पाठः ३ 'रुवष्मा' इति पाठः. ४ 'यानो' इति पाठः. ५ 'ङ्गशङ्खघो' इति पाठः.

स्मृतिमानभियोगवान् [illegible]गवान् विनीतो
न च बाल्ये[illegible]ऽप्यतिरोदनो न लोलः ॥ ९९ ॥

तिक्तं कषायं [illegible] कटुकोष्णरूक्ष-
मल्पं [illegible] भुङ्क्ते बलवांस्तथाऽपि ।
रक्तान्त[illegible]सुस्निग्धविशालदीर्घ-
सुवं[illegible]व्यक्तशुक्लासितपक्ष्मलाक्षः ॥ १०० ॥

अल्प[illegible]व्याहारक्रोधपानाशनेहः
[illegible] प्राज्यायुर्वित्तो दीर्घदर्शी वदान्यः ।
[illegible]श्राद्धो गम्भीरः स्थूललक्षः क्षमावा-
नार्यो निद्रालुर्दीर्घसूत्रः कृतज्ञः ॥ १०१ ॥
ऋजुर्विपश्चित्सुभगः सुलज्जो
भक्तो गुरूणां स्थिरसौहृदश्च ।
स्वप्ने सपद्मान्सविहङ्गमालां-
स्तोयाशयान् पश्यति तोयदांश्च ॥ १०२ ॥
[illegible] [illegible]न्द्रवरुणतार्क्ष्यहंसगजाधिपैः ।
[illegible] [illegible]कृतयस्तुल्यास्तथा सिंहाश्वगोवृषैः ॥ १०३ ॥
प्रकृती[illegible]यसर्वोत्था द्वन्द्वसर्वगुणोदये ।
शौचा[illegible]स्तिक्यादिभिश्चैवं गुणैर्गुणमयीर्वदेत् ॥ १०४ ॥
वयस्त[illegible]षोडशाद्बालं तत्र धात्विन्द्रियौजसाम् ।
वृद्धिरा[illegible]सप्ततेर्मध्यं तत्रावृद्धिः परं क्षयः ॥ १०५ ॥

---

१ '[illegible]र्ष्यः' इति पा. २ 'युर्युक्तो दी' इति पा. ३ 'लक्ष्यः' पा. ४ '[illegible]शी' पाठः. ५ 'सलज्जो' पा. ६ '[illegible]'

स्वं स्वं हस्तत्रयं सार्धं वपुः पात्रं ... ।
न च यद्युक्तमुद्दिष्टैरष्टाभिर्निन्दितैर्नि...
अरोमशासितस्थूलदीर्घत्वैः सविपर्ययैः ...णि ।
सुस्निग्धा मृदवः सूक्ष्मा नैकमूलाः स्थि... ॥ १४ ॥
ललाटमुन्नतं श्लिष्टशङ्खमर्धेन्दुसन्निभम् ।
कर्णौ नीचोन्नतौ पश्चान्महान्तौ श्लिष्टमांसलौ ॥ १५ ॥
नेत्रे व्यक्तासितासिते सुबद्धघनपक्ष्मणी ।
उन्नताग्रा महोच्छ्वासा पीनर्जुर्नासिका समा ॥
ओष्ठौ रक्तावनुद्वृत्तौ, महत्यौ नोल्बणे हनू ।
महदास्यं, घना दन्ताः स्निग्धाः श्लक्ष्णाः सिताः सम... ॥ १६ ॥
जिह्वा रक्ताऽऽयता तन्वी, मांसलं चिबुकं महत् ।
ग्रीवा ह्रस्वा घना वृत्ता, स्कन्धावुन्नतपीवरौ ॥ १११ ॥
उदरं दक्षिणावर्तगूढनाभि समुन्नतम् ।
तनुरक्तोन्नतनखं स्निग्धमाताम्रमांसलम् ॥ ११२ ॥
दीर्घाच्छिद्राङ्गुलि महत्पाणिपादं प्रतिष्ठितम् ।
गूढवंशं बृहत्पृष्ठं[1], निगूढाः सन्धयो दृढाः ॥ ११३ ॥
धीरः स्वरोऽनुनादी च, वर्णः स्निग्धः स्थिरप्रभः ।
स्वभावजं स्थिरं सत्त्वमविकारि विपत्स्वपि ॥ ११४ ॥
उत्तरोत्तरसुक्षेत्रं[2] वपुर्गर्भादिनीरुजम् ।
आयामज्ञानविज्ञानैर्वर्धमानं शनैः शुभम् ॥ ११५ ॥
इति सर्वगुणोपेते शरीरे शरदां शतम् ।

१ 'महत्पृष्ठं' इति पाठः. २ 'त्रं गर्भात्प्रभृति नी' इति पाठः. ३ 'ह... ' इति पाठः.

१ पुण्यायु सर्वे भावाः प्रतिष्ठिताः ॥ ११६ ॥
ऐः म्कान्यक्रयाण्यष्टौ यथोत्तरम्।
नित्कं कः सारात्युक्तानि देहिनाम् ॥ ११७ ॥
मल्पं अल्परं गौरवसंयुतः।
रक्तान्तशवान्सहिष्णुः सन्मतिः स्थिरः ॥ ११८ ॥
सुखं च सुखं दुःखं च सेवते।
अल्पवानस्तु राजसो नैव तामसः ॥ ११९ ॥
सत्यब्रह्मचर्यकृतज्ञता।
मि मैत्री च पुण्यायुर्वृद्धिकृद्गुणः ॥ १२० ॥"

---

## चतुर्थोऽध्यायः।

अथातो मर्मविभागं शारीरं व्याख्यास्यामः ॥
इति ह स्माहुरात्रेयादयो महर्षयः ॥
"सप्तोत्तरं मर्मशतम्
तेषामेकादशादिशेत्।
पृथक्सक्थ्नोस्तथा बाह्वोस्त्रीणि कोष्ठे नवोरसि ॥ १ ॥
पृष्ठे चतुर्दशोर्ध्वं तु जत्रोस्त्रिंशच्च सप्त च।
मध्ये पादतलस्याहुरभितो मध्यमाङ्गुलिम् ॥ २ ॥
तलहृन्नाम रुजया तत्र विद्धस्य पञ्चता।
अङ्गुष्ठाङ्गुलिमध्यस्थं क्षिप्रमाक्षेपमारणम् ॥ ३ ॥
तस्योर्ध्वं द्व्यङ्गुले कूर्चः पादभ्रमणकम्पकृत्।

---

१ 'म्यमाण्य' इति चन्द्रः, 'स्तभ्यमान' इति चन्द्रः.

गुल्फसन्धेरधः कूर्चशिरःशोफरुजाकरम् ॥ ४ ॥
जङ्घाचरणयोः सन्धौ गुल्फो रुक्स्तम्भमान्द्यकृत्[1]।
जङ्घान्तरे त्विन्द्रबस्तिर्मारयत्यसृजः क्षयात् ॥ ५ ॥
जङ्घोर्वोः सङ्गमे जानु खञ्जता तत्र जीवतः ।
आनुनरूयकुक्लादूर्ध्वमाण्यूरुस्तम्भशोफकृत् ॥ ६ ॥
उर्व्यूरुमध्ये तद्वेधात्सक्थिशोषोऽस्रसङ्क्षयात् ।
ऊरुमूले लोहिताक्षं हन्ति पक्षमसृक्क्षयात् ॥ ७ ॥
मुष्कवङ्क्षणयोर्मध्ये विटपं[3] षण्ढताकरम् ।
इति सक्थ्नोस्तथा बाह्वोर्मणिबन्धोऽत्र गुल्फवत् ॥ ८ ॥
कूर्परं जानुवत्कौण्यं तयोर्विटपवत्पुनः ।
कक्षाक्षमध्ये कक्षाधृक् कुणित्वं तत्र जायते ॥ ९ ॥
स्थूलान्त्रबद्धः सद्योघ्नो विड्वातवमनो गुदः ।
मूत्राशयो धनुर्वक्रो बस्तिरल्पास्रमांसगः ॥ १० ॥
एकाधोवदनो मध्ये कट्याः सद्यो निहन्त्यसून् ।
ऋतेऽश्मरीव्रणाद्विद्धस्तत्राप्युभयतश्च सः[4] ॥ ११ ॥
मूत्रस्राव्येकतो भिन्ने व्रणो रोहेच्च यत्नतः ।
देहामपक्वस्थानानां मध्ये सर्वसिराश्रयः ॥ १२ ॥
नाभिः, सोऽपि हि सद्योघ्नो
द्वारमामाशयस्य च ।
सत्वादिधाम हृदयं स्तनोरःकोष्ठमध्यगम् ॥ १३ ॥

---

१ 'म्भसाण्ड्यकृत्', 'म्भजाड्यकृत्' 'म्भखाञ्ज्यकृत्' पाठाः
२ 'नाल्यं' पा. ३ 'विटिपं' इति चन्द्रः. ४ 'सः' चन्द्रः.

स्तनरोहितमूलाख्ये द्व्यङ्गुले स्तनयोर्वदेत् ।
ऊर्ध्वाधोऽस्रकफापूर्णकोष्ठो नश्येत्तयोः क्रमात् ॥ १४ ॥
अपस्तम्भावुरःपार्श्वे नाड्यावनिलवाहिनी ।
[1]रक्तेन पूर्णकोष्ठोऽत्र श्वासात्कासाच्च नश्यति ॥ १५ ॥
पृष्ठवंशोरसोर्मध्ये तयोरेव च पार्श्वयोः ।
अधोंऽसकूटयोर्विद्यादपालापाख्यमर्मणी ॥ १६ ॥
तयोः कोष्ठेऽसृजा पूर्णे नश्येद्यातेन पूयताम् ।
पार्श्वयोः पृष्ठवंशस्य श्रोणीकर्णौ [2]प्रति स्थिते ॥ १७ ॥
वंशाश्रिते स्फिजोरूर्ध्वं कटीकतरुणे स्मृते ।
तत्र रक्तक्षयात्पाण्डुर्हीनरूपो विनश्यति ॥ १८ ॥
पृष्ठवं[3]शं ह्युभयतो यौ सन्धी कटिपार्श्वयोः ।
जघनस्य बहिर्भागे मर्मणी तौ कुकुन्दरौ ॥ १९ ॥
चेष्टाहानिरधःकाये स्पर्शाज्ञानं च तद्व्यधात् ।
पार्श्वान्तरनिबद्धौ यावुपरि श्रोणिकर्णयोः ॥ २० ॥
आ[4]शयच्छादनौ तौ तु नितम्बौ तरुणास्थिगौ ।
अधःशरीरे शोफोऽत्र दौर्बल्यं मरणं ततः ॥ २१ ॥
पार्श्वान्तरनिबद्धौ च मध्ये जघनपार्श्वयोः ।
तिर्यगूर्ध्वं च निर्दिष्टौ पार्श्वसन्धी तयोर्व्यधात् ॥ २२ ॥
रक्तपूरितकोष्ठस्य शरीरान्तरसम्भवः ।
स्तनमूलार्जवे भागे पृष्ठवंशाश्रये सिरे ॥ २३ ॥

---

१ 'रक्तस्य पू' इति पाठः. २ 'प्रतिष्ठितौ', 'कर्णप्रतिष्ठिते' इति क्वचित् । ३ 'वंशस्युभ' इति पाठः. ४ 'शयाच्छा' पाठः.

बृहत्यौ, तत्र विद्धस्य मरणं रक्तसङ्क्षयात् ।
बाहुमूलाभिसम्बद्धे पृष्ठवंशस्य पार्श्वयोः ॥ २४ ॥
अंसयोः फलके बाहुस्वापशोषौ तयोर्व्यधात् ।
ग्रीवामुभयतः स्नाव्नी ग्रीवाबाहुशिरोन्तरे ॥ २५ ॥
स्कन्धांसपीठसम्बन्धावंसौ बाहुक्रियाहरौ ।
कण्ठनाडीमुभयतः सिरा हनुसमाश्रिताः ॥ २६ ॥
चतस्रस्तासु नीले द्वे मन्ये द्वे मर्मणी स्मृते ।
स्वरप्रणाशवैकृत्यं रसाज्ञानं च तद्व्यधे ॥ २७ ॥
कण्ठनाडीमुभयतो जिह्वानासागताः सिराः ।
पृथक् चतस्रस्ताः सद्यो घ्नन्त्यसून्मातृकाह्वयाः ॥ २८ ॥
कृकाटिके शिरोग्रीवासन्धौ, तत्र चलं शिरः ।
अधस्तात्कर्णयोर्निम्ने विधुरे श्रुतिहारिणी ॥ २९ ॥
फणावुभयतो घ्राणमार्गं श्रोत्रपथानुगौ ।
अन्तर्गलस्थितौ वेधाद्गन्धविज्ञानहारिणौ ॥ ३० ॥
नेत्रयोर्बाह्यतोऽपाङ्गौ भ्रुवोः पुच्छान्तयोरधः ।
तथोपरि भ्रुवोर्निम्नावावर्तावान्ध्यमेषु तु ॥ ३१ ॥
अनुकर्णं ललाटान्ते शङ्खौ सद्योविनाशनौ ।
केशान्ते शङ्खयोरूर्ध्वमुत्क्षेपौ, स्थपनी पुनः ॥ ३२ ॥

---

१ 'शोफौ' इति चन्द्रः. २ 'र्व्यधे' इति चन्द्रः. ३ ('ठबन्धार्थावंसौ' इति चन्द्रः;) 'ठबद्धार्थावंसौ', 'ठसम्बद्धावंसौ' इति च पाठौ. ४ 'णाशो वै' इति पाठः. ५ 'कृत्यरसाज्ञानानि त' इति चन्द्रः. ६ 'सन्धी' इति पाठः.

भ्रुवोर्मध्ये, अयेऽप्यत्र शल्ये जीवेदनुद्धृते ।
स्वयं वा पतिते पाकात्सद्यो नश्यति तूद्धृते ॥ ३३ ॥
जिह्वाक्षिनासिकाश्रोत्रखचतुष्टयसङ्गमे ।
तालुन्यास्यानि चत्वारि स्रोतसां, तेषु मर्मसु ॥ ३४ ॥
विद्धः शृङ्गाटकाख्येषु सद्यस्त्यजति जीवितम् ।
कपाले सन्धयः पञ्च सीमन्तास्तिर्यगूर्ध्वगाः ॥ ३५ ॥
भ्रमोन्मादमनोनाशैस्तेषु विद्धेषु नश्यति ।
अन्तरो मस्तकस्योर्ध्वं सिरासन्धिसमागमः ॥ ३६ ॥
रोमावर्तोऽधिपो नाम मर्म सद्यो हरत्यसून् ।
विषमं स्पन्दनं यत्र पीडिते रुक् च मर्म तत् ॥ ३७ ॥
मांसास्थिस्नायुधमनीसिरासन्धिसमागमः ।
स्यान्मर्मेति च तेनात्र सुतरां जीवितं स्थितम् ॥ ३८ ॥
बाहुल्येन तु निर्देशः षोढैवं मर्मकल्पना ।
प्राणायतनसामान्यादैक्यं वा मर्मणां मतम् ॥ ३९ ॥
मांसजानि दशेन्द्राख्यतलहृत्स्तनरोहिताः ।
शङ्खौ कटीकतरुणे नितम्बावंसयोः फले ॥ ४० ॥
अस्थ्न्यष्टौ
स्नावमर्माणि त्रयोविंशतिराणयः ।
कूर्चकूर्चशिरोऽपाङ्गक्षिप्रोत्क्षेपांसबस्तयः ॥ ४१ ॥
गुदापस्तम्भविधुरशृङ्गाटानि नवादिशेत् ।

---

१ 'अन्तरे म' इति पाठः. २ 'स्नायुम' इति पाठः. ३ 'गुदोऽप' इति चन्द्रः ।

मर्माणि धमनीस्थानि

सप्तत्रिंशत्सिराश्रयाः ॥ ४२ ॥
बृहत्यौ मातृका नीले मन्ये कक्षाधरौ फणौ ।
विटपे हृदयं नाभिः पार्श्वसन्धी स्तनाधरे ॥ ४३ ॥
अपालापौ स्थपन्युर्वश्च तस्रो लोहितानि च ।
सन्धी विंशतिरावर्तौ मणिबन्धौ कुकुन्दरौ ॥ ४४ ॥
सीमन्ताः कूर्परौ गुल्फौ कृकाट्यौ जानुनी पतिः ।
मांसमर्म गुदोऽन्येषां, स्नायु कक्षाधरौ तथा ॥ ४५ ॥
विटपौ विधुराख्ये च, शृङ्गाटानि सिरासु तु ।
अपस्तम्भावपाङ्गौ च, धमनीस्थं न तैः स्मृतम् ॥ ४६ ॥
विद्धेऽजस्रमसृक्स्रावो मांसधावनवत्तनुः ।
पाण्डुत्वमिन्द्रियाज्ञानं मरणं चाशु मांसजे ॥ ४७ ॥
मज्जान्वितोऽच्छो विच्छिन्नः
स्रावो रुक् चास्थिमर्मणि ।
आयामाक्षेपकस्तम्भाः स्नावजेऽभ्यधिकं रुजा ॥ ४८ ॥
यानस्थानासनाशक्तिर्वैकल्यमथवाऽन्तकः ।
रक्तं सशब्दफेनोष्णं धमनीस्थे विचेतसः ॥ ४९ ॥
सिरामर्मव्यधे सान्द्रमजस्रं बह्वसृक्स्रवेत् ।
तत्क्षयात्तृड्भ्रमश्वासमोहहिध्माभिरन्तकः ॥ ५० ॥

---

१ 'स्तनान्तरे' इति पाठः. २ 'स्नायु' इति क्वचित्. ३ 'वाऽऽशु' इति पाठः. ४ 'स्नायुगेऽ' इति पाठः. ५ 'धिका रुजः' 'कं रुजः' इति पाठौ.

पाठः. ७ ......
चन्द्रः. ६ 'सन्धी' इति पाठः.

वस्तु शूकैरिवाकीर्णं रूढे च कुणिखञ्जता ।
बलचेष्टाक्षयः शोषः पर्वशोफश्च सन्धिजे ॥ ५१ ॥
नाभिशङ्खाधिपापानहृच्छृङ्गाटकबस्तयः ।
अष्टौ च मातृकाः सद्यो निघ्नन्त्येकोनविंशतिः ॥ ५२ ॥
सप्ताहः परमस्तेषां कालः कालस्य कर्षणे ।
त्रयस्त्रिंशदपस्तम्भतलहृत्पार्श्वसन्धयः ॥ ५३ ॥
कटीतरुणसीमन्तस्तनमूलेन्द्रबस्तयः ।
क्षिप्रापालापबृहतीनितम्बस्तनरोहिताः ॥ ५४ ॥
कालान्तरप्राणहरा मासमासार्धजीविताः ।
उत्क्षेपौ स्थपनी त्रीणि विशल्यघ्नानि, तत्र हि ॥ ५५ ॥
वायुर्मांसवसामज्जमस्तुलुङ्गानि शोषयन् ।
शल्यापाये विनिर्गच्छन् श्वासात्कासाच्च हन्त्यसून् ॥ ५६ ॥
फणावपाङ्गौ विधुरे नीले मन्ये कृकाटिके ।
अंसांसफलकावर्तविटपोर्वीकुकुन्दराः ॥ ५७ ॥
सजानुलोहिताक्षाणिकक्षाधरकूर्चकूर्पराः ।
वैकल्यमिति चत्वारि चत्वारिंशच्च कुर्वते ॥ ५८ ॥
हरन्ति तान्यपि प्राणान् कदाचिदभिघाततः ।
अष्टौ कूर्चशिरोगुल्फमणिबन्धा रुजाकराः ॥ ५९ ॥
तेषां विटपकक्षाधरगुर्व्यः कूर्चशिरांसि च ।

१ 'कोनविं' इति पाठः. २ 'परमं' इति चन्द्रः. ३ 'विधुरौ' इति पाठः. ४ 'ताख्याणि' इति पाठः.

द्वादशाङ्गुलमानानि
त्र्यङ्गुले मणिबन्धने ॥ ६० ॥
गुल्फौ च स्तनमूले च
ऽघ्यङ्गुलं जानुकूर्परम् ।
अपानवस्तिहृन्नाभिनीलाः सीमन्तमातृकाः ॥ ६१ ॥
कूर्चशृङ्गाटकमन्याश्च त्रिंशदेकेन वर्जिताः ।
आत्मपाणितलोन्मानाः
शेषाण्यर्धाङ्गुलं वदेत् ॥ ६२ ॥
पञ्चाशत्षट् च मर्माणि, तिलव्रीहिसमान्यपि ।
इष्टानि मर्माण्यन्येषाम्
चतुर्धोक्ताः सिरास्तु याः ॥६३॥
तर्पयन्ति वपुः कृत्स्नं ता मर्माण्याश्रितास्ततः ।
तत्क्षतात्क्षतजात्यर्थप्रवृत्तेर्धातुसङ्क्षये ॥ ६४ ॥
वृद्धश्चलो रुजस्तीव्राः प्रतनोति समीरयन् ।
तेजस्तदुद्धृतं धत्ते तृष्णाशोषमदभ्रमान् ॥ ६५ ॥
स्विन्नस्रस्तश्लथतनुं हरत्येनं ततोऽन्तकः ।
वर्धयेत्सन्धितो गात्रं मर्मण्यभिहते द्रुतम् ॥ ६६ ॥
छेदनात्सन्धिदेशस्य सङ्कुचन्ति सिरा यतः ।
जीवितं प्राणिनां तत्र रक्ते तिष्ठति तिष्ठति ॥ ६७ ॥
सुभिषक्तोऽप्यतो जीवेदमर्मणि न मर्मणि ।
प्राणघातिनि जीवेत्तु कश्चिद्वैद्यगुणेन चेत् ॥ ६८ ॥

असमग्राभिघाताच्च सोऽपि वैकल्यमश्नुते ।
तस्मात्क्षारविषाग्न्यादीन् यत्नान्मर्मसु वर्जयेत् ॥ ६९ ॥
मर्माभिघातः स्वल्पोऽपि प्रायशो बाधतेतराम् ।
रोगा मर्माश्रयास्तद्वत्प्रक्रान्ता यत्नतोऽपि च ॥ ७० ॥"

---

## पञ्चमोऽध्यायः ।

अथातो विकृतिविज्ञानीयं शारीरं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"पुष्पं फलस्य धूमोऽग्नेर्वर्षस्य जलदोदयः ।
यथा भविष्यतो लिङ्गं रिष्टं मृत्योस्तथा ध्रुवम् ॥ १ ॥
([2]आयुष्मति क्रियाः सर्वाः सफलाः सम्प्रयोजिताः ।
भवन्ति भिषजां भूत्यै कृतज्ञ इव भूभुजि ॥
क्षीणायुषि कृतं कर्म व्यर्थं कृतमिवाधमे ।
[3]अयशो देहसन्देहं स्वार्थहानिं च यच्छति ॥
[4]तर्हीदानीं गतासूनां लक्षणं सम्प्रचक्षते ।
विकृतिः प्रकृतेः प्राज्ञैः प्रदिष्टा रिष्टसंज्ञया ॥)
अरिष्टं नास्ति मरणं दृष्टरिष्टं च जीवितम् ।
अरिष्टे रिष्टविज्ञानं न च रिष्टेऽप्यनैपुणात् ॥ २ ॥
केचित्तु तद्विधेत्याहुः स्थाय्यस्थायिविभेदतः ।

---

१ 'मर्माश्रितास्त' इति पाठः. २ ( ) केषुचित्पुस्तकेषु समुपलब्धा इमे श्लोकाः. ३ 'आयासादेह' इति पाठः. ४ 'तदिदानीं' इति पाठः.

दोषाणामपि बाहुल्याद्रिष्टाभासः समुद्भवेत् ॥ ३ ॥
स[1] दोषाणां शमे शाम्येत्स्वाप्ययवश्यं तु मृत्यवे ।
रूपेन्द्रियस्वरच्छायाप्रतिच्छायाक्रियादिषु ॥ ४ ॥
अन्येष्वपि च भावेषु प्राकृतेष्वनिमित्ततः ।
विकृतिर्या समासेन रिष्टं तदिति लक्षयेत् ॥ ५ ॥
केशरोम निरभ्यङ्गं यस्याभ्यक्तमिवेक्ष्यते ।
यस्यात्यर्थं चले नेत्रे स्तब्धान्तर्गतनिर्गते ॥ ६ ॥
जिह्मे विस्तृतसङ्क्षिप्ते सङ्क्षिप्तविनतभ्रुणी ।
उत्क्रान्तदर्शने हीनदर्शने नकुलोपमे ॥ ७ ॥
कपोताभे अलाताभे स्रुते लुलितपक्ष्मणी ।
नासिकाऽत्यर्थविवृता संवृता पिटिकाचिता ॥ ८ ॥
उच्छूना स्फुटिता म्लाना

यस्यौष्ठो यात्यधोऽधरः ।
ऊर्ध्वं द्वितीयः स्यातां वा पक्वजम्बूनिभावुभौ ॥ ९ ॥
दन्ताः सशर्कराः श्यावास्ताम्राः पुष्पितपङ्किताः ।
सहसैव पतेयुर्वा

जिह्वा जिह्मा विसर्पिणी ॥ १० ॥
शूना शुष्का गुरुः श्यावा लिप्ता सुप्ता सकण्टका ।
शिरः शिरोधरा वोढुं पृष्ठं वा भारमात्मनः ॥ ११ ॥
हनू वा पिण्डमास्यस्थं शक्नुवन्ति न यस्य च ।
यस्यानिमित्तमङ्गानि गुरूण्यति लघूनि वा ॥ १२ ॥

---

१ 'तद्दोषाणां' इति पाठः.

विषदोषाद्विना यस्य खेभ्यो रक्तं प्रवर्तते ।
उत्सिक्तं मेहनं यस्य वृषणावतिनिःसृतौ ॥ १३ ॥
अतोऽन्यथा वा यस्य स्यात्
सर्वे ते कालचोदिताः ।
यस्यापूर्वाः सिरालेखा बालेन्द्वाकृतयोऽपि वा ॥ १४ ॥
ललाटे बस्तिशीर्षे वा षण्मासान्न स जीवति ।
पद्मिनीपत्रवत्तोयं शरीरे यस्य देहिनः ॥ १५ ॥
प्लवते प्लवमानस्य षण्मासास्तस्य जीवितम् ।
हरिताभाः सिरा यस्य रोमकूपाश्च संवृताः ॥ १६ ॥
सोऽम्लाभिलाषी पुरुषः पित्तान्मरणमश्नुते ।
यस्य गोमयचूर्णाभं चूर्णं मूर्ध्नि मुखेऽपि वा ॥ १७ ॥
सस्नेहं, मूर्ध्नि धूमो वा, मासान्तं तस्य जीवितम् ॥
मूर्ध्नि भ्रुवोर्वा कुर्वन्ति सीमन्तावर्तका नवाः ॥ १८ ॥
मृत्युं स्वस्थस्य षड्रात्रात्त्रिरात्रादातुरस्य तु ।
जिह्वा श्यावा मुखं पूति सव्यमक्षि निमज्जति ॥ १९ ॥
खगा वा मूर्ध्नि लीयन्ते यस्य तं परिवर्जयेत् ।
यस्य स्नातानुलिप्तस्य पूर्वं शुष्यत्युरो भृशम् ॥ २० ॥
आर्द्रेषु सर्वगात्रेषु सोऽर्धमासं न जीवति ।
अकस्माद्युपद्रात्रे वर्णौ प्राकृतवैकृतौ ॥ २१ ॥
तथैवोपचयग्लानिरौक्ष्यस्नेहादि मृत्यवे ।

---

१ ('ण्मासं तस्य' इति चन्द्रः,) 'ण्मासांस्त', 'ण्मासात्तस्य' इति पाठाः. २ 'र्वा यस्य स्युः सी' इति पाठः.

यस्य स्फुटेयुरङ्गुल्यो नाकृष्टा न स जीवति ॥ २२ ॥
क्षवकासादिषु तथा यस्यापूर्वो ध्वनिर्भवेत् ।
ह्रस्वो दीर्घोऽति वोच्छ्वासः पूतिः सुरभिरेव वा ॥ २३ ॥
आप्लुतानाप्लुते काये यस्य गन्धोऽतिमानुषः ।
मलवस्त्रव्रणादौ वा वर्षान्तं तस्य जीवितम् ॥ २४ ॥
भजन्तेऽत्यङ्गसौरस्याद्यं यूकामक्षिकादयः ।
त्यजन्ति वाऽतिवैरस्यात्सोऽपि वर्षं न जीवति ॥ २५ ॥
सततोष्मसु गात्रेषु शैत्यं यस्योपलक्ष्यते ।
शीतेषु भृशमौष्ण्यं वा स्वेदः स्तम्भोऽप्यहेतुकः ॥ २६ ॥
यो जातशीतपिटिकः शीताङ्गो वा विदह्यते ।
उष्णद्वेषी च शीतार्तः स प्रेताधिपगोचरः ॥ २७ ॥
उरस्यूष्मा भवेद्यस्य जठरे चातिशीतता ।
भिन्नं पुरीषं तृष्णा च यथा प्रेतस्तथैव सः ॥ २८ ॥
मूत्रं पुरीषं निष्ठ्यूतं शुक्रं वाऽप्सु निमज्जति ।
निष्ठ्यूतं बहुवर्णं वा यस्य मासात्स नश्यति ॥ २९ ॥
घनीभूतमिवाकाशमाकाशमिव यो घनम् ।
अमूर्तमिव मूर्तं च मूर्तं चामूर्तवत्स्थितम् ॥ ३० ॥
तेजस्व्यतेजस्तद्वच्च शुक्लं कृष्णमसच्च सत् ।
अनेत्ररोगश्चन्द्रं च बहुरूपमलाञ्छनम् ॥ ३१ ॥
जाग्रद्रक्षांसि गन्धर्वान् प्रेतानन्यांश्च तद्विधान् ।
रूपं व्याकृति तत्तच्च यः पश्यति स नश्यति ॥ ३२ ॥
सप्तर्षीणां समीपस्थां यो न पश्यत्यरुन्धतीम् ।

ध्रुवमाकाशगङ्गां वा स न पश्यति तां सभाम् ॥ ३३ ॥
मेघतोयौघनिर्घोषवीणापणववेणुजान् ।
शृणोत्यन्यांश्च यः शब्दानसतो न सतोऽपि वा ॥ ३४ ॥
निष्पीड्य कर्णौ शृणुयान्न यो धुकधुकास्वनम् ।
सद्गन्धरसस्पर्शान् मन्यते यो विपर्ययात् ॥ ३५ ॥
सर्वशो वा न यो, यश्च दीपगन्धं न जिघ्रति ।
विधिना यस्य दोषाय स्वास्थ्यायाविधिना रसाः ॥ ३६ ॥
यः पांसुनेव कीर्णाङ्गो योऽङ्गे घातं न वेत्ति वा ।
अन्तरेण तपस्तीव्रं योगं वा विधिपूर्वकम् ॥ ३७ ॥
जानात्यतीन्द्रियं यश्च तेषां मरणमादिशेत् ।
हीनो दीनः स्वरोऽव्यक्तो यस्य स्याद्गद्गदोऽपि वा ॥ ३८ ॥
सहसा यो विमुह्येद्वा विवक्षुर्न स जीवति ।
स्वरस्य दुर्बलीभावं हानिं च बलवर्णयोः ॥ ३९ ॥
रोगवृद्धिमयुक्त्या च दृष्ट्वा मरणमादिशेत् ।
अपस्वरं भाषमाणं प्राप्तं मरणमात्मनः ॥ ४० ॥
श्रोतारं चास्य शब्दस्य दूरतः परिवर्जयेत् ।
संस्थानेन प्रमाणेन वर्णेन प्रभयाऽपि वा ॥ ४१ ॥
छाया विवर्तते यस्य स्वप्नेऽपि प्रेत एव सः ।
आतपादर्शतोयादौ या संस्थानप्रमाणतः ॥ ४२ ॥
छायाऽङ्गात्सम्भवत्युक्ता प्रतिच्छायेति सा पुनः ।
वर्णप्रभाश्रया या तु सा छायैव शरीरगा ॥ ४३ ॥
भवेद्यस्य प्रतिच्छाया च्छिन्ना भिन्नाऽधिकाऽऽकुला ।

त्रिशिरा द्विशिरा जिह्वा विकृता यदि वाऽन्यथा ॥ ४४ ॥
तं समासायुषं विद्यान्न चेल्लक्ष्यनिमित्तजा ।
प्रतिच्छायामयी यस्य न चाक्ष्णीक्ष्येत कन्यका ॥ ४५ ॥
खादीनां पञ्च पञ्चानां छाया विविधलक्षणाः ।
नाभसी निर्मलाऽऽनीला सस्नेहा सप्रभेव च ॥ ४६ ॥
वाताद्रजोऽरुणा श्यावा भस्मरूक्षा हतप्रभा ।
विशुद्धरक्ता त्वाग्नेयी दीप्ताभा दर्शनप्रिया ॥ ४७ ॥
शुद्धवैदूर्यविमला सुस्निग्धा तोयजा सुखा ।
स्थिरा स्निग्धा घना शुद्धा श्यामा श्वेता च पार्थिवी ॥४८॥
वायवी[1] रोगमरणक्लेशायान्याः सुखोदयाः ।
प्रभोक्ता तैजसी सर्वा, सा तु सप्तविधा स्मृता ॥ ४९ ॥
रक्ता पीता सिता श्यावा[2] हरिता पाण्डुराऽसिता ।
तासां याः स्युर्विकासिन्यः स्निग्धाश्च विमलाश्च याः ॥५०॥
ताः शुभा, मलिना रूक्षाः संक्षिप्ताश्चाशुभोदयाः[3] ।
वर्णमाक्रामति च्छाया प्रभा वर्णप्रकाशिनी ॥ ५१ ॥
आसन्ने लक्ष्यते छाया विकृष्टे भा प्रकाशते ।
नाच्छायो नाप्रभः कश्चिद्विशेषाश्चिह्नयन्ति तु ॥ ५२ ॥
नृणां शुभाशुभोत्पत्तिं काले छायासमाश्रयाः[4] ।
निकषन्निव यः पादौ च्युतांसः परिसर्पति ॥ ५३ ॥

---

१ 'वायव्या' इति चन्द्रः. २ 'श्यामा' इति पाठः. ३ 'श्चा-सुखोदयाः' इति पाठः. ४ 'छायाप्रभाश्रयाः' इति सुयुक्तश्वर-कोक्तः पाठः.

हीयते बलतः शश्वद्योऽन्नमश्नन् हितं बहु ।
योऽल्पाशी बहुविण्मूत्रो बह्वाशी चाल्पमूत्रविट् ॥ ५४ ॥
यो वाऽल्पाशी कफेनार्तो दीर्घं श्वसिति चेष्टते ।
दीर्घमुच्छ्वस्य यो ह्रस्वं निःश्वस्य परिताम्यति ॥ ५५ ॥
ह्रस्वं च यः प्रश्वसिति व्याविद्धं स्पन्दते भृशम् ।
शिरो विक्षिपते कृच्छ्राद्योऽञ्चयित्वा प्रपाणिकौ ॥ ५६ ॥
यो ललाटास्नुतस्वेदः श्लथसन्धानबन्धनः ।
उत्थाप्यमानः संमुह्येद्यो बली दुर्बलोऽपि वा ॥ ५७ ॥
उत्तान एव स्वपिति यः पादौ विकरोति च ।
शयनासनकुड्यार्योऽसदेव जिघृक्षति ॥ ५८ ॥
अहास्यहासी सम्मुह्यन् यो लेढि दशनच्छदौ ।
उत्तरौष्ठं परिलिहन् फूत्कारांश्च करोति यः ॥ ५९ ॥
यमभिद्रवति च्छाया कृष्णा पीताऽरुणाऽपि वा ।
भिषग्भेषजपानान्नगुरुमित्रद्विषश्च ये ॥ ६० ॥
वशगाः सर्व एवैते विज्ञेयाः समवर्तिनः ।
(ग्रीवाललाटहृदयं यस्य स्विद्यति शीतलम् ॥ ६१ ॥
उष्णोऽपरः प्रदेशश्च शरणं तस्य देवताः ।)
[पूर्वरूपाणि सर्वाणि ज्वरोक्तान्यतिमात्रया ।
यं विशंति विशत्येनं मृत्युर्ज्वरपुरःसरः ॥]

---

१ 'देर्गः सदेव' इति पाठः. २ 'हनुद्वारांश्च' ('हन्वोत्का' चन्द्रः) पाठाः. ३ ( ) चिन्हितः श्लोकः अरुणचन्द्रयोरसंमतः. ४ [ ]श्लोकोऽयं कचित्पठ्यते. ५ 'ज्वरोक्तान्यति' इति पाठः.

योऽऽणुज्योतिरनेकाग्रो दुश्छायो दुर्मनाः सदा ॥ ६२ ॥
बलिं बलिभृतो यस्य प्रणीतं नोपभुञ्जते ।
निर्निमित्तं च यो मेधां शोभामुपचयं श्रियम् ॥ ६३ ॥
प्राप्नोत्यतो वा विभ्रंशं स प्राप्नोति यमक्षयम् ।
गुणदोषमयी यस्य स्वस्थस्य व्याधितस्य वा ॥ ६४ ॥
यात्यन्यथात्वं प्रकृतिः षण्मासान्न स जीवति ।
भक्तिः शीलं स्मृतिस्त्यागो बुद्धिर्बलमहेतुकम् ॥ ६५ ॥
षडेतानि निवर्तन्ते षड्भिर्मासैर्मरिष्यतः ।
मत्तवद्गतिवाक्कम्पमोहा मासान्मरिष्यतः ॥ ६६ ॥
नश्यत्यजानन् षडहात्केशलुञ्चनवेदनाम् ।
न याति यस्य चाहारः कण्ठं कण्ठामयादृते ॥ ६७ ॥
प्रेष्याः प्रतीपतां यान्ति प्रेताकृतिरुदीर्यते ।
यस्य निद्रा भवेन्नित्या नैव वा न स जीवति ॥ ६८ ॥
वक्त्रमापूर्यतेऽश्रूणां स्विद्यतश्चरणौ भृशम् ।
चक्षुश्चाकुलतां याति यमराज्यं गमिष्यतः ॥ ६९ ॥
यैः पुरा रमते भावैररतिस्तैर्न जीवति ।
सहसा जायते यस्य विकारः सर्वलक्षणः ॥ ७० ॥
निवर्तते वा सहसा, सहसा स विनश्यति ।
ज्वरो निहन्ति बलवान् गम्भीरो दैर्घरात्रिकः ॥ ७१ ॥
सप्रलापभ्रमश्वासः क्षीणं शूनं हतानलम्[1] ।
अक्षामं सक्तवचनं रक्ताक्षं हृदि शूलिनम् ॥ ७२ ॥

---

१ 'नित्यं' इति अरुणः.

सशुष्ककासः पूर्वाह्णे योऽपराह्णेऽपि वा भवेत्।
बलमांसविहीनस्य श्लेष्मकाससमन्वितः ॥ ७३ ॥
रक्तपित्तं भृशं रक्तं कृष्णमिन्द्रधनुष्प्रभम्।
ताम्रहारिद्रहरितं रूपं रक्तं प्रदर्शयेत् ॥ ७४ ॥
रोमकूपप्रविसृतं कण्ठास्यहृदये सजत्।
वासिसोऽरञ्जनं[1] पूति वेगवच्चाति भूरि च ॥ ७५ ॥
वृद्धं पाण्डुज्वरच्छर्दिकासशोफातिसारिणम्।
कासश्वासौ ज्वरच्छर्दितृष्णातीसारशोफिनम् ॥ ७६ ॥
यक्ष्मा पार्श्वरुजानाहरक्तच्छर्द्यंसतापिनम्।
छर्दिर्वेगवती मूत्रशकृद्गन्धिः सचन्द्रिका ॥ ७७ ॥
सास्त्रविट्पूयरुक्कासश्वासवत्यनुषङ्गिणी।
तृष्णाऽन्यरोगक्षपितं बहिर्जिह्वं[2] विचेतनम्[3] ॥ ७८ ॥
मदात्ययोऽतिशीतार्तं क्षीणं तैलप्रभाननम्।
अर्शांसि पाणिपन्नाभिगुदमुष्कास्यशोफिनम्[4] ॥ ७९ ॥
हृत्पार्श्वाङ्गरुजाच्छर्दिपायुपाकज्वरातुरम्।
अतीसारो यकृत्पिण्डमांसधावनमेचकैः ॥ ८० ॥
तुल्यस्तैलघृतक्षीरदधिमज्जवसासवैः।
मस्तुलुङ्गमषीपूयवेसवाराम्बुमाक्षिकैः ॥ ८१ ॥
अतिरक्तासितस्निग्धपूत्यच्छघनवेदनः।
कर्बुरः प्रस्रवन् धातून् निष्पुरीषोऽथवाऽतिविट् ॥ ८२ ॥

---

१ 'वाससो रञ्जनं'—वस्त्ररागकृत् इति चन्द्रः. २ 'जिह्मचे' इति पाठः. ३ 'तसम्' इति पाठः. ४ 'ष्कामिशो' इति पाठः.

दोषाणामपि बाहुल्याद्रिष्टाभासः समुद्भवेत् ॥ ३ ॥
स दोषाणां शमे शाम्येत्स्थाय्यवश्यं तु मृत्यवे ।
रूपेन्द्रियस्वरच्छायाप्रतिच्छायाक्रियादिषु ॥ ४ ॥
अन्येष्वपि च भावेषु प्राकृतेष्वनिमित्ततः ।
विकृतिर्या समासेन रिष्टं तदिति लक्षयेत् ॥ ५ ॥
केशरोम निरभ्यक्तं यस्याभ्यक्तमिवेक्ष्यते ।
यस्यात्यर्थं चले नेत्रे स्तब्धान्तर्गतनिर्गते ॥ ६ ॥
जिह्मे विस्तृतसङ्क्षिप्ते सङ्क्षिप्तविनतभ्रुणी ।
उद्भ्रान्तदर्शने हीनदर्शने नकुलोपमे ॥ ७ ॥
कपोताभे भल्लाताभे स्रुते लुलितपक्ष्मणी ।
नासिकाऽत्यर्थविवृता संवृता पिटिकान्विता ॥ ८ ॥
उच्छूना स्फुटिता म्लाना

यस्यौष्ठो यात्यधोऽधरः ।
ऊर्ध्वं द्वितीयः स्यातां वा पक्वजम्बूनिभावुभौ ॥ ९ ॥
दन्ताः सशर्कराः श्यावास्ताम्राः पुष्पितपङ्किताः ।
सहसैव पतेयुर्वा

जिह्वा जिह्मा विसर्पिणी ॥ १० ॥
शूना शुष्का गुरुः श्यावा लिप्ता सुप्ता सकण्टका ।
शिरः शिरोधरा वोढुं पृष्ठं वा भारमात्मनः ॥ ११ ॥
हनू वा पिण्डमास्यस्थं शक्नुवन्ति न यस्य च ।
यस्यानिमित्तमङ्गानि गुरूण्यति लघूनि वा ॥ १२ ॥

---

१ 'तद्दोषाणा' इति पाठः.

विपद्दोषाद्विना यस्य खेभ्यो रक्तं प्रवर्तते ।
उत्सिक्तं मेहनं यस्य वृषणावतिनिःसृतौ ॥ १३ ॥
अतोऽन्यथा वा यस्य स्यात्
सर्वे ते कालचोदिताः ।
यस्यापूर्वाः सिरालेखा बालेन्द्वाकृतयोऽपि वा ॥ १४ ॥
ललाटे बस्तिशीर्षे वा षण्मासान्न स जीवति ।
पद्मिनीपत्रवत्तोयं शरीरे यस्य देहिनः ॥ १५ ॥
प्लवते प्लवमानस्य षण्मासास्तस्य जीवितम् ।
हरिताभाः सिरा यस्य रोमकूपाश्च संवृताः ॥ १६ ॥
सोऽम्लाभिलाषी पुरुषः पित्तान्मरणमश्नुते ।
यस्य गोमयचूर्णाभं चूर्णं मूर्ध्नि मुखेऽपि वा ॥ १७ ॥
सस्नेहं, मूर्ध्नि धूमो वा, मासान्तं तस्य जीवितम् ॥
मूर्ध्नि भ्रुवोर्वा कुर्वन्ति सीमन्तावर्तका नवाः ॥ १८ ॥
मृत्युं स्वस्थस्य षड्रात्राद्विरात्रादातुरस्य तु ।
जिह्वा श्यावा मुखं पूति सव्यमक्षि निमज्जति ॥ १९ ॥
खगा वा मूर्ध्नि लीयन्ते यस्य तं परिवर्जयेत् ।
यस्य स्नातानुलिप्तस्य पूर्वं शुष्यत्युरो भृशम् ॥ २० ॥
आर्द्रेषु सर्वगात्रेषु सोऽर्धमासं न जीवति ।
अकस्मादुपघाते वर्णौ प्राकृतवैकृतौ ॥ २१ ॥
तथैवोपचयग्लानिरौक्ष्यस्नेहादि मृत्यवे ।

---

१ ('षमासं तस्य' इति चन्द्रः,) 'षमासास्त', 'षमासात्तस्य' इति पाठाः. २ 'र्वा यस्य रन्ध्रः सी' इति पाठः.

यस्य स्फुटेयुरङ्गुल्यो नाकृष्टा न स जीवति ॥ २२ ॥
क्षवकासादिषु तथा यस्यापूर्वो ध्वनिर्भवेत् ।
ह्रस्वो दीर्घोऽति वोच्छ्वासः पूतिः सुरभिरेव वा ॥ २३
आप्लुतानाप्लुते काये यस्य गन्धोऽतिमानुषः ।
मलवस्त्रव्रणादौ वा वर्षान्तं तस्य जीवितम् ॥ २४ ॥
भजन्तेऽत्यङ्गसौरस्याद्यं यूकामक्षिकादयः ।
त्यजन्ति वाऽनिवैरस्यात्सोऽपि वर्षं न जीवति ॥ २५ ॥
सततोष्मसु गात्रेषु शैत्यं यस्योपलक्ष्यते ।
शीतेषु भृशमौष्ण्यं वा स्वेदः स्तम्भोऽप्यहेतुकः ॥ २६ ॥
यो जातशीतपिटिकः शीताङ्गो वा विदह्यते ।
उष्णद्वेषी च शीतार्तः स प्रेताधिपगोचरः ॥ २७ ॥
उरस्यूष्मा भवेद्यस्य जठरे चातिशीतता ।
भिन्नं पुरीषं तृष्णा च यथा प्रेतस्तथैव सः ॥ २८ ॥
मूत्रं पुरीषं निष्ठ्यूतं शुक्रं वाऽप्सु निमज्जति ।
निष्ठ्यूतं बहुवर्णं वा यस्य मासात्स नश्यति ॥ २९ ॥
घनीभूतमिवाकाशमाकाशमिव यो घनम् ।
अमूर्तमिव मूर्तं च मूर्तं चामूर्तवस्थितम् ॥ ३० ॥
तेजस्व्यतेजस्तद्वच्च शुक्लं कृष्णमसच्च सत् ।
अनेत्ररोगश्चन्द्रं च बहुरूपमलाञ्छनम् ॥ ३१ ॥
जाग्रद्रक्षांसि गन्धर्वान् प्रेतानन्यांश्च तद्विधान् ।
रूपं व्याकृति तत्तच्च यः पश्यति स नश्यति ॥ ३२ ॥
सप्तर्षीणां समीपस्थां यो न पश्यत्यरुन्धतीम् ।

ध्रुवमाकाशगङ्गां वा स न पश्यति तां समाम् ॥ ३३ ॥
मेघतोयौघनिर्घोषवीणापणववेणुजान् ।
शृणोत्यन्यांश्च यः शब्दानसतो न सतोऽपि वा ॥ ३४ ॥
निष्पीड्य कर्णौ शृणुयान्न यो धुकधुकास्वनम् ।
तद्वद्गन्धरसस्पर्शान् मन्यते यो विपर्ययात् ॥ ३५ ॥
सर्वशो वा न यो, यश्च दीपगन्धं न जिघ्रति ।
विधिना यस्य दोषाय स्वास्थ्यायाविधिना रसाः ॥ ३६ ॥
यः पांसुनेव कीर्णाङ्गो योऽङ्गे घातं न वेत्ति वा ।
अन्तरेण तपस्तीव्रं योगं वा विधिपूर्वकम् ॥ ३७ ॥
जानात्यतीन्द्रियं यश्च तेषां मरणमादिशेत् ।
हीनो दीनः स्वरोऽव्यक्तो यस्य स्याद्गद्गदोऽपि वा ॥ ३८ ॥
सहसा यो विमुह्येद्वा विवक्षुर्न स जीवति ।
स्वरस्य दुर्बलीभावं हानिं च बलवर्णयोः ॥ ३९ ॥
रोगवृद्धिमयुक्त्या च दृष्ट्वा मरणमादिशेत् ।
अपस्वरं भाषमाणं प्राप्तं मरणमात्मनः ॥ ४० ॥
श्रोतारं चास्य शब्दस्य दूरतः परिवर्जयेत् ।
संस्थानेन प्रमाणेन वर्णेन प्रभयाऽपि वा ॥ ४१ ॥
छाया विवर्तते यस्य स्वप्नेऽपि प्रेत एव सः ।
आतपादर्शतोयाद्यौ या संस्थानप्रमाणतः ॥ ४२ ॥
छायाऽङ्गात्सम्भवत्युक्ता प्रतिच्छायेति सा पुनः ।
वर्णप्रभाश्रया या तु सा छायैव शरीरगा ॥ ४३ ॥
भवेद्यस्य प्रतिच्छाया च्छिन्ना भिन्नाऽधिकाऽऽकुला ।

त्रिशिरा द्विशिरा जिह्वा विकृता यदि वाऽन्यथा ॥ ४४ ॥
तं समासायुषं विद्याच्चेल्लक्ष्यनिमित्तजा ।
प्रतिच्छायामयी यस्य न चाक्ष्णीक्ष्येत कन्यका ॥ ४५ ॥
खादीनां पञ्च पञ्चानां छाया विविधलक्षणाः ।
नाभसी निर्मलाऽऽनीला सस्नेहा सप्रभेव च ॥ ४६ ॥
वाताद्रजोऽरुणा श्यावा भस्मरूक्षा हतप्रभा ।
विशुद्धरक्ता त्वाग्नेयी दीप्ताभा दर्शनप्रिया ॥ ४७ ॥
शुद्धवैदूर्यविमला सुस्निग्धा तोयजा सुखा ।
स्थिरा स्निग्धा घना शुद्धा श्यामा श्वेता च पार्थिवी ॥४८॥
[1]वायवी रोगमरणक्लेशायान्याः सुखोदयाः ।
प्रभोक्ता तैजसी सर्वा, सा तु सप्तविधा स्मृता ॥ ४९ ॥
रक्ता पीता सिता [2]श्यावा हरिता पाण्डुराऽसिता ।
तासां याः स्युर्विकासिन्यः स्निग्धाश्च विमलाश्च याः ॥५०॥
तां शुभा, मलिना रूक्षाः सङ्क्षिप्ताश्चा[3]शुभोदयाः ।
वर्णमाक्रामति च्छाया प्रभा वर्णप्रकाशिनी ॥ ५१ ॥
आसन्ने लक्ष्यते छाया विकृष्टे भा प्रकाशते ।
नाच्छायो नाप्रभः कश्चिद्विशेषाश्चिह्नयन्ति तु ॥ ५२ ॥
नृणां शुभाशुभोत्पत्तिं काले [4]छायासमाश्रयाः ।
निकषन्निव यः पादौ च्युतांसः परिसर्पति ॥ ५३ ॥

१ 'वायव्या' इति चन्द्रः. २ 'श्यामा' इति पाठः. ३ 'श्वा-सुखोदयाः' इति पाठः. ४ 'छायाप्रभाश्रयाः' इति सुश्रुतचर-कोक्तः पाठः.

हीयते बलतः शश्वद्योऽन्नमश्नन् हितं बहु ।
योऽल्पाशी बहुविण्मूत्रो बह्वाशी चाल्पमूत्रविट् ॥ ५४ ॥
यो वाऽल्पाशी कफेनार्तो दीर्घं श्वसिति चेष्टते ।
दीर्घमुच्छ्वस्य यो ह्रस्वं निःश्वस्य परिताम्यति ॥ ५५ ॥
ह्रस्वं च यः प्रश्वसिति व्याविद्धं स्पन्दते भृशम् ।
शिरो विक्षिपते कृच्छ्राद्योऽञ्चयित्वा प्रपाणिकौ ॥ ५६ ॥
यो ललाटात्स्रुतस्वेदः श्लथसन्धानबन्धनः ।
उत्थाप्यमानः संमुह्येद्यो बली दुर्बलोऽपि वा ॥ ५७ ॥
उत्तान एव स्वपिति यः पादौ विकरोति च ।
शयनासनकुड्यायोऽसदैव जिघृक्षति ॥ ५८ ॥
अहास्यहासी सम्मुह्यन् यो लेढि दशनच्छदौ ।
उत्तरौष्ठं परिलिहन् फूत्कारांश्च करोति यः ॥ ५९ ॥
यमभिद्रवति च्छाया कृष्णा पीताऽरुणाऽपि वा ।
भिषग्भेषजपानान्नगुरुमित्रद्विषश्च ये ॥ ६० ॥
वशगाः सर्व एवैते विज्ञेयाः समवर्तिनः ।
(ग्रीवाललाटहृदयं यस्य स्विद्यति शीतलम् ॥ ६१ ॥
उष्णोऽपरः प्रदेशश्च शरणं तस्य देवताः । )
[ पूर्वरूपाणि सर्वाणि ज्वरादिष्वतिमात्रया ।
यं विशन्ति विशन्त्येनं मृत्युर्ज्वरपुरःसरः ॥]

---

१ 'दैवं सदैव' इति पाठः. २ 'हक्कारांश्च' ('हक्कोत्का' चन्द्रः) पाठाः. ३ ( ) चिन्हितः श्लोकः अरुणचन्द्रयोरसंमतः. ४ [ ] श्लोकोऽयं कचित्पठ्यते. ५ 'ज्वरोत्क्राम्यति' इति पाठः.

योऽऽणुज्योतिरनेकाग्रो दुश्छायो दुर्मनाः सदा ॥ ६२ ॥
बलिं बलिभृतो यस्य प्रणीतं नोपभुञ्जते ।
निर्निमित्तं च यो मेधां शोभामुपचयं श्रियम् ॥ ६३ ॥
प्राप्नोत्यतो वा विभ्रंशं स प्राप्नोति यमक्षयम् ।
गुणदोषमयी यस्य स्वस्थस्य व्याधितस्य वा ॥ ६४ ॥
यात्यन्यथात्वं प्रकृतिः षण्मासान्न स जीवति ।
भक्तिः शीलं स्मृतिस्त्यागो बुद्धिर्बलमहेतुकम् ॥ ६५ ॥
षडेतानि निवर्तन्ते षड्भिर्मासैर्मरिष्यतः ।
भ्रुवक्रतिवाक्कम्पमोहा मासान्मरिष्यतः ॥ ६६ ॥
भक्ष्यत्यजानन् पठहास्केशलुञ्चनवेदनाम् ।
न याति यस्य चाहारः कण्ठं कण्ठामयादृते ॥ ६७ ॥
प्रेष्याः प्रतीपतां यान्ति प्रेताकृतिरुदीर्यते ।
यस्य निद्रा भवेन्नित्या नैव वा न स जीवति ॥ ६८ ॥
वक्त्रमापूर्यतेऽश्रूणां स्विद्यतश्चरणौ भृशम् ।
चक्षुश्चाकुलतां याति यमराज्यं गमिष्यतः ॥ ६९ ॥
यैः पुरा रमते भावैररतिस्तैर्न जीवति ।
सहसा जायते यस्य विकारः सर्वलक्षणः ॥ ७० ॥
निवर्तते वा सहसा, सहसा स विनश्यति ।
ज्वरो निहन्ति बलवान् गम्भीरो दैर्घरात्रिकः ॥ ७१ ॥
सप्रलापभ्रमश्वासः क्षीणं शूनं हतानलम् ।
अक्षामं सक्तवचनं रक्ताक्षं हृदि शूलिनम् ॥ ७२ ॥

---

१ 'नित्य' इति अरुणः.

सशुष्ककासः पूर्वाह्णे योऽपराह्णेऽपि वा भवेत् ।
बलमांसविहीनस्य श्लेष्मकाससमन्वितः ॥ ७३ ॥
रक्तपित्तं भृशं रक्तं कृष्णमिन्द्रधनुष्प्रभम् ।
ताम्रहारिद्रहरितं रूपं रक्तं प्रदर्शयेत् ॥ ७४ ॥
रोमकूपप्रविसृतं कण्ठास्यहृदये सजत् ।
वाससोऽरञ्जनं पूति वेगवच्चाति भूरि च ॥ ७५ ॥
वृद्धं पाण्डुज्वरच्छर्दिकासशोफातिसारिणम् ।
कासश्वासौ ज्वरच्छर्दितृष्णातीसारशोफिनम् ॥ ७६ ॥
यक्ष्मा पार्श्वरुजानाहरक्तच्छर्द्यंसतापिनम् ।
छर्दिर्वेगवती मूत्रशकृद्गन्धिः सचन्द्रिका ॥ ७७ ॥
मास्रविट्पूयरुक्कासश्वासवत्यनुषङ्गिणी ।
तृष्णाऽन्यरोगक्षपितं बहिर्जिह्वं विचेतनम् ॥ ७८ ॥
मदात्ययोऽतिशीतार्तं क्षीणं तैलप्रभाननम् ।
अर्शांसि पाणिपन्नाभिगुदमुष्कास्यशोफिनम् ॥ ७९ ॥
हृत्पार्श्वाङ्गरुजाच्छर्दिपायुपाकज्वरातुरम् ।
अतीसारो यकृत्पिण्डमांसधावनमेचकैः ॥ ८० ॥
तुल्यस्तैलघृतक्षीरदधिमज्जवसासवैः ।
मस्तुलुङ्गमषीपूयवेसवाराम्बुमाक्षिकैः ॥ ८१ ॥
अतिरक्तासितस्निग्धपूत्यच्छघनवेदनः ।
कर्बुरः प्रस्रवन् धातून् निष्पुरीषोऽथवाऽतिविट् ॥ ८२ ॥

---

१ 'वाससो रञ्जन'—वस्त्ररागकृत् इति चन्द्रः. २ 'जिह्मचे' इति पाठः. ३ 'तप्तम्' इति पाठ . ४ 'ष्कामिशो' इति पाठः.

तन्तुमान् मक्षिकाक्रान्तो राजीमांश्चन्द्रकैर्युतः ।
शीर्णपायुवलिं मुक्तनालं पर्वास्थिशूलिनम् ॥ ८३ ॥
स्रस्तपायुं बलक्षीणमन्नमेवोपवेशयन् ।
सतृट्श्वासज्वरच्छर्दिदाहानाहप्रवाहिकः ॥ ८४ ॥
अश्मरी शूनवृषणं बद्धमूत्रं रुजार्दितम् ।
मेहस्तृड्दाहपिटिकामांसकोथातिसारिणम् ॥ ८५ ॥
पिटिका मर्महृत्पृष्ठस्तनांसगुदमूर्धगाः ।
पर्वपादकरस्था वा मन्दोत्साहं प्रमेहिणम् ॥ ८६ ॥
सर्वं च मांससङ्कोथदाहतृष्णामदज्वरैः ।
विसर्पमर्मसंरोधहिध्माश्वासभ्रमक्लमैः ॥ ८७ ॥
गुल्मः पृथुपरीणाहो घनः कूर्म इवोन्नतः ।
सिरानद्धो ज्वरच्छर्दिहिध्माऽऽध्मानरुजान्वितः ॥ ८८ ॥
कासपीनसहृल्लासश्वासातीसारशोफवान् ।
विण्मूत्रसङ्गहृच्छ्वासशोफहिध्माज्वरभ्रमैः ॥ ८९ ॥
मूर्च्छाच्छर्द्यतिसारैश्च जठरं हन्ति दुर्बलम् ।
शूनाक्षं कुटिलोपस्थमुपक्लिन्नतनुत्वचम् ॥ ९० ॥
विरेचनैर्हृतानाहमानह्यन्तं पुनः पुनः ।
पाण्डुरोगः श्वयथुमान् पीताक्षिनखदर्शनम् ॥ ९१ ॥
तन्द्रादाहारुचिच्छर्दिमूर्च्छाध्मानातिसारवान् ।

---

१ 'मुक्तताल' ('मुक्तताडं' इति चन्द्रः), इति पाठः. २ 'शयेत्' इति चन्द्रः. ३ 'मूर्धजाः' इति चन्द्रः. ४ 'स्थाश्च म' इति पाठः. ५ 'क्लोच दा' इति क्वचित्. ६ 'नद्दता' इति क्वचित्.

अनेकोपद्रवयुतः पादाभ्यां प्रसृतो नरम् ॥ ९२ ॥
नारीं शोफो मुखाद्धन्ति कुक्षिगुह्यादुभावपि।
राजीचितः स्रवंश्छर्दिज्वरश्वासातिसारिणम् ॥ ९३ ॥
ज्वरातिसारौ शोफान्ते श्वयथुर्वा तयोः क्षये।
दुर्बलस्य विशेषेण जायन्तेऽन्ताय देहिनः ॥ ९४ ॥
श्वयथुर्यस्य पादस्थः परिस्रस्ते च पिण्डिके।
सीदतः सक्थिनी चैव तं भिषक् परिवर्जयेत् ॥ ९५ ॥
आननं हस्तपादं च विशेषाद्यस्य शुष्यतः[1]।
शूयेते[2] वा विना देहात्स मासाद्याति पञ्चताम् ॥ ९६ ॥
विसर्पः कासवैवर्ण्यज्वरमूर्च्छाङ्गभङ्गवान्।
भ्रमास्यशोफहृल्लास[3]देहसादातिसारवान् ॥ ९७ ॥
कुष्ठं विशीर्यमाणाङ्गं रक्तनेत्रं हतस्वरम्।
मन्दाग्निं जन्तुभिर्जुष्टं हन्ति तृष्णातिसारिणम् ॥ ९८ ॥
वायुः शुष्कत्वचं भुग्नं[4] कम्पशोफरुजातुरम्।
वातास्रं मोहमूर्च्छायमदास्वप्नज्वरान्वितम् ॥ ९९ ॥
शिरोग्रहारुचिश्वाससङ्कोचस्फोटकोथवत्।
शिरोरोगारुचिश्वासमोहविड्भेदतृड्भ्रमैः ॥ १०० ॥
घ्नन्ति सर्वामयाः क्षीणस्वरधातुबलानलम्।
वातव्याधिरपस्मारी कुष्ठी रक्त्युदरी क्षयी ॥ १०१ ॥
गुल्मी मेही च तान् क्षीणान् विकारेऽल्पेऽपि वर्जयेत्।

---

१ 'शुष्यति' इति पाठः. २ 'शूयन्ते' इति पाठः. ३ 'शोषहृ' इति पाठः. ४ 'भग्नं' इति पाठः.

बलमांसक्षयस्तीव्रो रोगवृद्धिररोचकः ॥ १०२ ॥
यस्यातुरस्य लक्ष्यन्ते त्रीन् पक्षान्न स जीवति ।
वाताष्ठीलाऽतिसंवृद्धा तिष्ठन्ती दारुणा हृदि ॥ १०३ ॥
तृष्णया नु परीतस्य सद्यो मुष्णाति जीवितम् ।
शैथिल्यं पिण्डिके वायुर्नीत्वा नासां च जिह्मताम् ॥१०४॥
क्षीणस्यायस्य[1] मन्ये वा सद्यो मुष्णाति जीवितम् ।
नाभीगुदान्तरं गत्वा वङ्क्षणौ वा समाश्रयन् ॥ १०५ ॥
गृहीत्वा पायुहृदये क्षीणदेहस्य वा बली ।
मलान् बस्तिशिरो नाभिं विबध्य जनयन् रुजम् ॥ १०६ ॥
कुर्वन् वङ्क्षणयोः शूलं तृष्णां भिन्नपुरीषताम् ।
श्वासं वा जनयन् वायुर्गृहीत्वा गुदवङ्क्षणम् ॥ १०७ ॥
वितत्य पर्शुका[2]ग्राणि गृहीत्वोरश्च मारुतः ।
स्तिमितस्याततास्यस्य सद्यो मुष्णाति जीवितम् ॥ १०८ ॥
सहसा ज्वरसन्तापस्तृष्णा मूर्च्छा बलक्षयः ।
विश्लेषणं च सन्धीनां मुमूर्षोरुपजायते ॥ १०९ ॥
गोसर्गे वदनाद्यस्य स्वेदः प्रच्यवते भृशम् ।
लेपज्वरोपतप्तस्य दुर्लभं तस्य जीवितम् ॥ ११० ॥
प्रवालगुलिकाभासा यस्य गात्रे मसूरिकाः ।
उत्पद्याशु विनश्यन्ति न चिरात्स विनश्यति ॥ १११ ॥
मसूरविदलप्रख्यास्तथा विद्रुमसन्निभाः ।
अन्तर्वक्त्राः किणाभाश्च विस्फोटा देहनाशनाः ॥ ११२ ॥

---

१ 'स्यायस' इति पाठः. २ 'पार्श्वका' इति पाठः.

कामलाऽक्ष्णोर्मुखं पूर्णं शङ्खयोर्मुक्तमांसता ।
सत्रासश्चोष्णताऽङ्गे च यस्य तं परिवर्जयेत् ॥ ११३ ॥
अकस्मादनुधावच्च विघृष्टं त्वक्समाश्रयम् ।
[ [1]चन्दनोशीरमदिराकुणपध्वाङ्क्षगन्धयः ।
शैवालकुक्कुटशिखा[2]कुङ्कुमालमषीप्रभाः ॥
अन्तर्दाहा निरूष्माणः प्राणनाशकरा व्रणाः । ]
यो वातजो न शूलाय स्यान्न दाहाय पित्तजः ॥ ११४ ॥
कफजो न च पूयाय मर्मजश्च रुजे न यः ।
अचूर्णश्चूर्णकीर्णाभो यत्राकस्माच्च दृश्यते ॥ ११५ ॥
रूपं शक्तिध्वजादीनां सर्वांस्तान्वर्जयेद्व्रणान् ।
विण्मूत्रमारुतवहं कृमिणं च भगन्दरम् ॥ ११६ ॥
घट्टयन् जानुना जानु पादावुद्यम्य पातयन् ।
योऽपास्यति मुहुर्वक्त्रमातुरो न स जीवति ॥ ११७ ॥
दन्तैश्छिन्दन्नखाग्राणि तैश्च केशांस्तृणानि च ।
भूमिं काष्ठेन विलिखन् लोष्टं लोष्टेन ताडयन् ॥ ११८ ॥
हृष्टरोमा सान्द्रमूत्रः शुष्ककासी ज्वरी च यः ।
मुहुर्हसन् मुहुः क्ष्वेडन् शय्यां पादेन हन्ति यः ॥ ११९ ॥
मुहुश्छिद्राणि विमृशन्नातुरो न स जीवति ।
मृत्यवे सहसाऽऽतस्य तिलकव्यङ्गविप्लवः ॥ १२० ॥
मुखे, दन्तनखे पुष्पं, जठरे विविधाः सिराः ।

---

१ [ ] इति सार्धः श्लोकः केषुचित्पुस्तकेषु सङ्ग्रहे चोपलभ्यते. २ 'स्नानक्तमाल', 'खाकुन्दशालिमयप्रभाः' इति पाठौ.

ऊर्ध्वश्वासं गतोष्माणं शूलोपहतवङ्क्षणम् ॥ १२१ ॥
शर्म चानधिगच्छन्तं बुद्धिमान् परिवर्जयेत् ।
विकारा यस्य वर्धन्ते प्रकृतिः परिहीयते ॥ १२२ ॥
सहसा सहसा तस्य मृत्युर्हरति जीवितम् ।
यमुद्दिश्यातुरं वैद्यः संम्पादयितुमौषधम् ॥ १२३ ॥
यतमानो न शक्नोति दुर्लभं तस्य जीवितम् ।
विज्ञातं बहुशः सिद्धं विधिवच्चावचारितम् ॥ १२४ ॥
न सिध्यत्यौषधं यस्य नास्ति तस्य चिकित्सितम् ।
भवेद्यस्यौषधेऽन्ने वा कल्प्यमाने विपर्ययः ॥ १२५ ॥
अकस्माद्वर्णगन्धादेः स्वस्थोऽपि न स जीवति ।
निवाते सेन्धनं यस्य ज्योतिश्चाप्युपशाम्यति ॥ १२६ ॥
आतुरस्य गृहे यस्य भिद्यन्ते वा पतन्ति वा ।
अतिमात्रममत्राणि दुर्लभं तस्य जीवितम् ॥ १२७ ॥
यं नरं सहसा रोगो दुर्बलं परिमुञ्चति ।
संशयप्राप्तमात्रेयो जीवितं तस्य मन्यते ॥ १२८ ॥
कथयेन्नै च पृष्टोऽपि दुःश्रवं मरणं भिषक् ।
गतासोर्बन्धुमित्राणां न चेच्छेत्तं चिकित्सितुम् ॥ १२९ ॥
यमदूतपिशाचाद्यैर्यत्परासुरुपास्यते ।
घ्नद्भिरौषधवीर्याणि तस्मात्तं परिवर्जयेत् ॥ १३० ॥
आयुर्वेदफलं कृत्स्नं यदायुर्ज्ञे प्रतिष्ठितम् ।

---

१ 'वाऽन' इति क्वचित्. २ 'संवर्धयितु' इति पाठः.
३ 'मैवैव पृ' इति पाठः.

रिष्टज्ञानादृतस्तस्मात्सर्वदैव भवेद्भिषक् ॥ १३१ ॥
मरणं प्राणिनां दृष्टमायुःपुण्योभयक्षयात् ।
तयोरप्यक्षयाद्दृष्टं विषमापरिहारिणाम् ॥ १३२ ॥''

---

## षष्ठोऽध्यायः ।

अथातो दूतादिविज्ञानीयं शारीरं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
''पाखण्डाश्रमवर्णानां सवर्णाः[1] कर्मसिद्धये ।
त एव विपरीताः स्युर्दूताः कर्मविपत्तये ॥ १ ॥
दीनं भीतं द्रुतं त्रस्तं रूक्षाममङ्गलवादिनम् ।
शस्त्रिणं दण्डिनं षण्ढं[2] मुण्डश्मश्रुजटाधरम् ॥ २ ॥
अमङ्गलाह्वयं क्रूरकर्माणं मलिनं स्त्रियम् ।
अनेकं व्याधितं व्यङ्गं रक्तमाल्यानुलेपनम् ॥ ३ ॥
तैलपङ्काङ्कितं जीर्णविवर्णार्द्रैकवाससम् ।
खरोष्ट्रमहिषारूढं काष्ठलोष्टादिमर्दिनम्[3] ॥ ४ ॥
नानुगच्छेद्भिषग्दूतमाह्वयन्तं च दूरतः ।
अशस्तचिन्तावचने नग्ने छिन्दति भिन्दति ॥ ५ ॥
जुह्वाने पावकं पिण्डान् पितृभ्यो निर्वपत्यपि ।
सुप्ते मुक्तकचेऽभ्यक्ते रुदत्यप्रयते[4] तथा ॥ ६ ॥
वधे दूता मनुष्याणामागच्छन्ति मुमूर्षताम् ।

---

१ 'सपक्षाः क' इति पाठः. २ 'खण्डं' इति पाठः. ३ 'लोष्टादि' इति पाठः. ४ 'तेऽथवा' इति पाठः.

विकारसामान्यगुणे देशे कालेऽथवा भिषक् ॥ ७ ॥
दूतमभ्यागतं दृष्ट्वा नातुरं तमुपाचरेत् ।
स्पृशन्तो नाभिनासास्यकेशरोमनखद्विजान् ॥ ८ ॥
गुह्यपृष्ठस्तनग्रीवाजठरानामिकाङ्गुलीः ।
कार्पासबुससीसास्थिकपालमुशलोपलम् ॥ ९ ॥
मार्जनीशूर्पचैलान्तभस्माङ्गारदशातुषान् ।
रज्जुपानत्तुलापाशमन्यद्वा भग्नविच्युतम्[२] ॥ १० ॥
तत्पूर्वदर्शने दूता व्याहरन्ति मरिष्यताम् ।
तथाऽर्धरात्रे मध्याह्ने सन्ध्ययोः पर्ववासरे ॥ ११ ॥
षष्ठीचतुर्थीनवमीराहुकेतूदयादिषु ।
भरणीकृत्तिकाऽऽश्लेषापूर्वाऽऽर्द्रापैत्र्यनैर्ऋते ॥ १२ ॥
यस्मिंश्च दूते ब्रुवति वाक्यमातुरसंश्रयम् ।
पश्येन्निमित्तमशुभं तं च नानुव्रजेद्भिषक् ॥ १३ ॥
तद्यथा विकलः प्रेतः प्रेतालङ्कार एव वा ।
छिन्नं दग्धं विनष्टं वा तद्वादीनि वचांसि वा ॥ १४ ॥
रसो वा कटुकस्तीव्रो गन्धो वा कौणपो महान् ।
स्पर्शो वा विपुलः क्रूरो यद्वाऽन्यदपि तादृशम् ॥ १५ ॥
तत्सर्वमभितो वाक्यं वाक्यकालेऽथवा पुनः ।
दूतमभ्यागतं दृष्ट्वा नातुरं तमुपाचरेत् ॥ १६ ॥
हाहाक्रन्दितमुत्क्रुष्टमाक्रुष्टं स्खलनं क्षुतम् ।
वस्त्रातपत्रपादत्रव्यसनं व्यसनीक्षणम् ॥ १७ ॥

---

१ 'साक्षिके' इति पाठः. २ 'विच्युतम्' इति पाठः.

चैत्यध्वजानां पात्राणां पूर्णानां च निमज्जनम् ।
हतानिष्टप्रवादाश्च दूषणं भस्मपांसुभिः ॥ १८ ॥
पथश्छेदोऽहिमार्जारगोधासरठवानरैः ।
दीप्तां प्रति दिशं वाचः क्रूराणां मृगपक्षिणाम् ॥ १९ ॥
कृष्णधान्यगुडोदश्विल्लवणासवचर्मणाम् ।
सर्षपाणां वसातैलतृणपङ्केन्धनस्य च ॥ २० ॥
क्लीबक्रूरश्वपाकानां जालत्रागुरयोरपि ।
छर्दितस्य पुरीषस्य पूतिदुर्दर्शनस्य च ॥ २१ ॥
निःसारस्य व्यवायस्य कार्पासादेररेरपि ।
शयनासनयानानामुत्तानानां तु दर्शनम् ॥ २२ ॥
न्युब्जानामितरेषां च पात्रादीनामशोभनम् ।
पुंसंज्ञाः पक्षिणो वामाः स्त्रीसंज्ञा दक्षिणाः शुभाः ॥२३॥
प्रदक्षिणं खगमृगा यान्तो, नैवं श्वजम्बुकाः ।
अयुग्माश्च मृगाः शस्ताः
शस्ता नित्यं च दर्शने ॥ २४ ॥
चाषभासभरद्वाजनकुलच्छागबर्हिणः ।
अशुभं सर्वथोलूकबिडालसरठेक्षणम् ॥ २५ ॥
प्रशस्ताः कीर्तने कोलगोधाहिशशजाहकाः ।
न दर्शने न विरुते, वानरर्क्षावतोऽन्यथा ॥ २६ ॥
धनुरैन्द्रं च लालाटमशुभं, शुभमन्यतः ।
अग्निपूर्णानि पात्राणि भिन्नानि विशिखानि च ॥ २७ ॥
दध्यक्षतादि निर्गच्छद्दृश्यमाणं च मङ्गलम् ।

वैद्यो मरिष्यतां वेश्म प्रविशन्नेव पश्यति ॥ २८ ॥
दूताद्यसाधु दृष्ट्वैवं त्यजेदार्तमतोऽन्यथा ।
कल्याणशुद्धसन्तानो यत्नतस्तमुपाचरेत् ॥ २९ ॥
दध्यक्षतेक्षुनिष्पावप्रियङ्गुमधुसर्पिषाम् ।
यावकाञ्जनभृङ्गारघण्टादीपसरोरुहाम् ॥ ३० ॥
दूर्वार्द्रमत्स्यमांसानां लाजानां फलभक्षयोः ।
रत्नेभपूर्णकुम्भानां कन्यायाः स्यन्दनस्य च ॥ ३१ ॥
नरस्य वर्धमानस्य देवतानां नृपस्य च ।
शुक्लानां सुमनोवालचामराम्बरवाजिनाम् ॥ ३२ ॥
शङ्खसाधुद्विजोष्णीषतोरणस्वस्तिकस्य च ।
भूमेः समुद्धृतायाश्च वह्नेः प्रज्वलितस्य च ॥ ३३ ॥
मनोज्ञस्यान्नपानस्य पूर्णस्य शकटस्य च ।
नृभिर्धेन्वाः सवत्साया वडवायाः स्त्रिया अपि ॥ ३४ ॥
जीवञ्जीवकसारङ्गसारसप्रियवादिनाम् ।
हंसानां शतपत्राणां बद्धस्यैकपशोस्तथा ॥ ३५ ॥
रुचकादर्शसिद्धार्थरोचनानां च दर्शनम् ।
गन्धः सुसुरभिर्वर्णः सुशुक्लो मधुरो रसः ॥ ३६ ॥
गोपतेरनुकूलस्य स्वनस्तद्वद्गवामपि ।
मृगपक्षिनराणां च शोभिनां शोभना गिरः ॥ ३७ ॥
छत्रध्वजपताकानामुत्क्षेपणमभिष्टुतिः ।
भेरीमृदङ्गशङ्खानां शब्दाः पुण्याहनिःस्वनाः ॥ ३८ ॥

---

१ 'नुलोमस्य' इति पाठः.

वेदाध्ययनशब्दाश्च सुखो वायुः प्रदक्षिणः ।
पथि वेश्मप्रवेशे च विद्यादारोग्यलक्षणम् ॥ ३९ ॥
इत्युक्तं दूतशकुनं
स्वप्नानूर्ध्वं प्रचक्षते ।
स्वप्ने मद्यं सह प्रेतैर्यः पिबन् कृष्यते शुना ॥ ४० ॥
स मर्त्यो मृत्युना शीघ्रं ज्वररूपेण नीयते ।
रक्तमाल्यवपुर्वस्त्रो यो हसन् ह्रियते स्त्रिया ॥ ४१ ॥
सोऽस्रपित्तेन
महिषश्ववराहोष्ट्रगर्दभैः ।
यः प्रयाति दिशं याम्यां मरणं तस्य यक्ष्मणा ॥ ४२ ॥
लता कण्टकिनी वंशस्तालो वा हृदि जायते ।
यस्य तस्याशु गुल्मेन
यस्य वह्निमनर्चिषम् ॥ ४३ ॥
जुह्वतो घृतसिक्तस्य नग्नस्योरसि जायते ।
पद्मं स नश्येत्कुष्ठेन
चण्डालैः सह यः पिबेत् ॥ ४४ ॥
स्नेहं बहुविधं स्वप्ने स प्रमेहेण नश्यति ।
उन्मादेन जले मज्जेद्यो नृत्यन् राक्षसैः सह ॥ ४५ ॥
अपस्मारेण यो मर्त्यो नृत्यन् प्रेतेन नीयते ।
यानं खरोष्ट्रमार्जारकपिशार्दूलसूकरैः ॥ ४६ ॥
यस्य प्रेतैः शृगालैर्वा स मृत्योर्वर्तते मुखे ।
अपूपशष्कुलीर्जग्ध्वा विबुद्धस्तद्विधं वमन् ॥ ४७ ॥

न जीवति

अक्षिरोगाय सूर्येन्दुग्रहणेक्षणम् ।
सूर्याचन्द्रमसोः पातदर्शनं दृग्विनाशनम् ॥ ४८ ॥
मूर्ध्नि वंशलतादीनां संभवो वयसां तथा ।
निलयो मुण्डता काकगृध्राद्यैः परिवारणम् ॥ ४९ ॥
तथा प्रेतपिशाचस्त्रीद्रविडान्ध्रगवाशनैः ।
सङ्गो वेत्रलतावंशतृणकण्टकसङ्कटे ॥ ५० ॥
श्वभ्रश्मशानशयनं पतनं पांसुभस्मनोः ।
मज्जनं जलपङ्कादौ शीघ्रेण स्रोतसा हृतिः ॥ ५१ ॥
नृत्यवादित्रगीतानि रक्तस्रग्वस्त्रधारणम् ।
वयोङ्गवृद्धिरभ्यङ्गो विवाहः श्मश्रुकर्म च ॥ ५२ ॥
पक्वान्नस्नेहमद्याशः प्रच्छर्दनविरेचने ।
हिरण्यलोहयोर्लाभः कलिर्बन्धपराजयौ ॥ ५३ ॥
उपानद्युगनाशश्च प्रपातः पादचर्मणोः ।
हर्षो भृशं प्रकुपितैः पितृभिश्चावभर्त्सनम् ॥ ५४ ॥
प्रदीपग्रहनक्षत्रदन्तदैवतचक्षुषाम् ।
पतनं वा विनाशो वा, भेदनं पर्वतस्य च[1] ॥ ५५ ॥
कानने रक्तकुसुमे पापकर्मनिवेशने ।
चितान्धकारसम्बाधे जनन्यां च प्रवेशनम् ॥ ५६ ॥
पातः प्रासादशैलादेर्मत्स्येन ग्रसनं तथा ।
काषायिणामसौम्यानां नग्नानां दण्डधारिणाम् ॥ ५७ ॥

---

१ 'वा' इति पाठः.

रक्ताक्षाणां च कृष्णानां दर्शनं जातु नेष्यते ।
कृष्णा पापाननाहारा दीर्घकेशनखस्तनी ॥ ५८ ॥
विरागमाल्यवसना स्वप्ने कालनिशा मता ।
मनोवहानां पूर्णत्वात्स्रोतसां प्रबलैर्मलैः ॥ ५९ ॥
दृश्यन्ते दारुणाः स्वप्ना रोगी यैर्याति पञ्चताम् ।
अरोगः संशयं प्राप्य कश्चिदेव विमुच्यते ॥ ६० ॥
दृष्टः श्रुतोऽनुभूतश्च प्रार्थितः कल्पितस्तथा ।
भाविको दोषजश्चेति स्वप्नः सप्तविधो मतः ॥ ६१ ॥
तेष्वाद्या निष्फलाः पञ्च यथास्वप्रकृतिर्दिवा ।
विस्मृतो दीर्घह्रस्वोऽति

पूर्वरात्रे चिरात्फलम् ॥ ६२ ॥

दृष्टः करोति तुच्छं च

गोसर्गे तदहर्महत् ।

निद्रया वाऽनुपहतः प्रतीपैर्वचनैस्तथा ॥ ६३ ॥
याति पापोऽल्पफलतां दानहोमजपादिभिः ।
अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव यः पुनः ॥ ६४ ॥
पश्येत्सौम्यं शुभं तस्य शुभमेव फलं भवेत् ।
देवान् द्विजान् गोवृषभान् जीवतः सुहृदो नृपान् ॥६५॥

---

१ 'पा निराचारा' इति पाठः. २ 'गत्वा' इति पाठः. ३ 'थास्वं प्र' इति पाठः. ४ 'स्वो वा', 'स्वोऽपि' इति पाठौ. ५ 'वा' इति पाठः. ६ 'चानु' इति पाठः. ७ 'पोऽप्यफल' इति पाठः.

साधून् यशस्विनो वह्निमिद्धं स्वच्छान् जलाशयान् ।
कन्याः कुमारकान् गौरान् शुक्लवस्त्रान्सुतेजसः ॥ ६६ ॥
नराशनं दीप्ततनुं समन्ताद्रुधिरोक्षितम् ।
यः पश्येल्लभते यो वा छत्रादर्शविषामिषम् ॥ ६७ ॥
शुक्लाः सुमनसो वस्त्रममेध्यालेपनं फलम् ।
शैलप्रासादसफलवृक्षसिंहनरद्विपान् ॥ ६८ ॥
आरोहेद्गोऽश्वयानं च, तरेन्नदह्रदोदधीन् ।
पूर्वोत्तरेण गमनमगम्यागमनं मृतम् ॥ ६९ ॥
सम्बाधान्निःसृतिर्देवैः पितृभिश्चाभिनन्दनम् ।
रोदनं पतितोत्थानं द्विषतां चावमर्दनम् ॥ ७० ॥
यस्य स्यादायुरारोग्यं वित्तं बहु च सोऽश्नुते ।
मङ्गलाचारसम्पन्नः परिवारस्तथाऽऽतुरः ॥ ७१ ॥
श्रद्दधानोऽनुकूलश्च प्रभूतद्रव्यसङ्ग्रहः ।
सत्त्वलक्षणसंयोगो भक्तिर्वैद्यद्विजातिषु ॥ ७२ ॥
चिकित्सायामनिर्वेदस्तदारोग्यस्य लक्षणम् ।
इत्यत्र जन्ममरणं यतः सम्यगुदाहृतम् ॥ ७३ ॥
शरीरस्य ततः स्थानं शारीरमिदमुच्यते ॥ ७३½ ॥"

---

१ 'कन्यां' इति सङ्ग्रहे पाठः. २ 'तनुः' इति पाठः. ३ 'क्षितः' सङ्ग्रहे इति पाठः. ४ 'भृतिम्' इति सङ्ग्रहे पाठः. ५ 'सङ्कटान्निः' इति पाठः.

# अष्टाङ्गहृदयम् ।

## निदानस्थानम् ।

### प्रथमोऽध्यायः ।

अथातः सर्वरोगनिदानं व्याख्यास्यामः ।

इति ह स्माहुरात्रेयादयो महर्षयः ।

"रोगः पाप्मा ज्वरो व्याधिर्विकारो दुःखमामयः ।
यक्ष्मातङ्कगदाबाधाः शब्दाः पर्यायवाचिनः ॥ १ ॥

निदानं पूर्वरूपाणि रूपाण्युपशयस्तथा ।
सम्प्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम् ॥ २ ॥

निमित्तहेत्वायतनप्रत्ययोत्थानकारणैः ।
निदानमाहुः पर्यायैः

प्राग्रूपं येन लक्ष्यते ॥ ३ ॥

उत्पित्सुरामयो दोषविशेषेणानधिष्ठितः ।
लिङ्गमव्यक्तमल्पत्वाद्व्याधीनां तद्यथायथम् ॥ ४ ॥

तदेव व्यक्ततां यातं रूपमित्यभिधीयते ।
संस्थानं व्यञ्जनं लिङ्गं लक्षणं चिह्नमाकृतिः ॥ ५ ॥

हेतुव्याधिविपर्यस्तविपर्यस्तार्थकारिणाम् ।
औषधान्नविहाराणामुपयोगं सुखावहम् ॥ ६ ॥
विद्यादुपशयं व्याधेः स हि सात्म्यमिति स्मृतः ।
विपरीतोऽनुपशयो व्याध्यसात्म्याभिसंज्ञितः ॥ ७ ॥
यथा दुष्टेन दोषेण यथा चानुविसर्पता ।
निर्वृत्तिरामयस्यासौ सम्प्राप्तिर्जातिरागतिः ॥ ८ ॥
सङ्ख्याविकल्पप्राधान्यबलकालविशेषतः ।
सा भिद्यते, यथाऽत्रैव वक्ष्यन्तेऽष्टौ ज्वरा इति ॥ ९ ॥
दोषाणां समवेतानां विकल्पोंऽशांशकल्पना ।
स्वातन्त्र्यपारतन्त्र्याभ्यां व्याधेः प्राधान्यमादिशेत् ॥ १० ॥
हेत्वादिकारर्त्स्न्यावयवैर्बलाबलविशेषणम् ।
नक्तंदिनर्तुभुक्तांशैर्व्याधिकालो यथामलम् ॥ ११ ॥
इति प्रोक्तो निदानार्थः

तं व्यासे[1]नोपदेक्ष्यति ।
सर्वेषामेव रोगाणां निदानं कुपिता मलाः ॥ १२ ॥
तत्प्रकोपस्य तु प्रोक्तं विविधा[2]हितसेवनम् ।
अहितं त्रिविधो योगस्त्रयाणां प्रागुदाहृतः ॥ १३ ॥
तिक्तोषणकषायाल्परूक्षप्रमितभोजनैः ।
धारणोदीरणनिशाजागरात्युच्चभाषणैः ॥ १४ ॥
क्रियातियोगभीशोकचिन्ताव्यायाममैथुनैः ।

---

१ 'सेनोपदेक्ष्यते' इति हेमाद्रिः, तोडरश्च. २ 'हितत्रिवि' इति चन्द्रः.

ग्रीष्माहोरात्रिभुक्तान्ते प्रकुप्यति समीरणः ॥ १५ ॥
पित्तं कट्वम्लतीक्ष्णोष्णपटुक्रोधविदाहिभिः ।
शरन्मध्याह्नरात्र्यर्धविदाहसमयेषु च ॥ १६ ॥
स्वाद्वम्ललवणस्निग्धगुर्वभिष्यन्दिशीतलैः ।
आस्यास्वप्नसुखाजीर्णदिवास्वप्नातिबृंहणैः ॥ १७ ॥
प्रच्छर्दनाद्ययोगेन भुक्तमात्रवसन्तयोः ।
पूर्वाह्णे पूर्वरात्रे च श्लेष्मा

द्वन्द्वं तु सङ्करात् ॥ १८ ॥

मिश्रीभावात्समस्तानां सन्निपातस्तथा पुनः ।
सङ्कीर्णाजीर्णविषमविरुद्धाध्यशनादिभिः ॥ १९ ॥
व्यापन्नमद्यपानीयशुष्कशाकाममूलकैः ।
पिण्याकमृद्यवसुरापूतिशुष्ककृशामिषैः ॥ २० ॥
दोषत्रयकरैस्तैस्तैस्तथाऽन्नपरिवर्तनात् ।
ऋतोर्दुष्टात्पुरोवाताद्ग्रहावेशाद्विषाद्गरात् ॥ २१ ॥
दुष्टान्नात् पर्वताश्लेषाद्ग्रहैर्जन्मर्क्षपीडनात् ।
मिथ्यायोगाच्च विविधात्पापानां च निषेवणात् ॥ २२ ॥
स्त्रीणां प्रसववैषम्यात्तथा मिथ्योपचारतः ।
प्रतिरोगमिति क्रुद्धा रोगाधिष्ठानगामिनीः ॥ २३ ॥
रसायनीः प्रपद्याशु दोषा देहे विकुर्वते ॥ २३½ ॥"

---

१ 'घर्मनिदाघस' इति पाठः. २ 'अतिस्वप्न' इति क्वचित्. ३ 'वर्तितः', 'रिवृत्तितः' इति पाठौ क्वचित्.

## द्वितीयोऽध्यायः ।

अथातो ज्वरनिदानं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥
"ज्वरो रोगपतिः पाप्मा मृत्युरोजोशनोऽन्तकः ।[1]
क्रोधो दक्षाध्वरध्वंसी रुद्रोर्ध्वनयनोद्भवः ॥ १ ॥
जन्मान्तयोर्मोहमयः सन्तापात्माऽपचारतः ।
विविधैर्नामभिः क्रूरो नानायोनिषु वर्तते ॥ २ ॥
स जायतेऽष्टधा दोषैः पृथङ्मिश्रैः समागतैः ।
आगन्तुश्च
मलास्तत्र स्वैः स्वैर्दुष्टाः प्रदूषणैः ॥ ३ ॥
आमाशयं प्रविश्यासमनुगम्य पिधाय च ।
स्रोतांसि पक्तिस्थानाच्च निरस्य ज्वलनं बहिः ॥ ४ ॥
सह तेनाभिसर्पन्तस्तपन्तः सकलं वपुः ।
कुर्वन्तो गात्रमत्युष्णं ज्वरं निर्वर्तयन्ति ते ॥ ५ ॥[2]
स्रोतोविबन्धात्प्रायेण ततः स्वेदो न जायते ।
तस्य प्राग्रूपमालस्यमरतिर्गात्रगौरवम् ॥ ६ ॥
आस्यवैरस्यमरुचिर्जृम्भा सास्राकुलाक्षिता ।[3]
अङ्गमर्दोऽविपाकोऽल्पप्राणता बहुनिद्रता ॥ ७ ॥
रोमहर्षो विनमनं पिण्डिकोद्वेष्टनं क्लमः ।
हितोपदेशेष्वक्षान्तिः प्रीतिरम्लपटूषणे ॥ ८ ॥

---

१ 'त्युस्तेजो' इति चन्द्रः. २ 'त्रमाशुष्कं ज्व' इति पाठः.
३ 'लाक्षता' इति पाठः.

द्वेषः स्वादुषु भक्ष्येषु तथा बालेषु तृड् भृशम् ।
शब्दाग्निशीतवाताम्बुच्छायोष्णेष्वनिमित्ततः ॥ ९ ॥
इच्छा द्वेषश्च

तदनु ज्वरस्य व्यक्तता भवेत् ।
आगमापगमक्षोभमृदुतावेदनोष्मणाम् ॥ १० ॥
वैषम्यं तत्रतत्राङ्गे तास्ताः स्युर्वेदनाश्चलाः ।
पादयोः सुप्तता स्तम्भः पिण्डिकोद्वेष्टनं श्रमः ॥ ११ ॥
विश्लेष इव सन्धीनां साद ऊर्वोः कटीग्रहः ।
पृष्ठं क्षोदमिवाप्नोति निष्पीड्यत इवोदरम् ॥ १२ ॥
छिद्यन्त इव चास्थीनि पार्श्वगानि विशेषतः ।
हृदयस्य ग्रहस्तोदः प्राजनेनेव वक्षसः ॥ १३ ॥
स्कन्धयोर्मथनं बाह्वोर्भेदः पीडनमंसयोः ।
अशक्तिर्भक्षणे हन्वोर्जृम्भणं कर्णयोः स्वनः ॥ १४ ॥
निस्तोदः शङ्खयोर्मूर्ध्नि वेदना विरसास्यता ।
कषायास्यत्वमथवा मलानामप्रवर्तनम् ॥ १५ ॥
रूक्षारुणत्वगास्याक्षिनखमूत्रपुरीषता ।
प्रसेकारोचकाश्रद्धाविपाकास्वेदजागराः ॥ १६ ॥
कण्ठौष्ठशोषस्तृट् शुष्कौ च्छर्दिकासौ विषादिता ।
हर्षो रोमाङ्गदन्तेषु वेपथुः क्षवथोर्ग्रहः ॥ १७ ॥
भ्रमः प्रलापो घर्मेच्छा विनामश्चानिलज्वरे ।

---

१ 'क्लमः' इति पाठः. २ 'भिद्यन्त' इति सङ्ग्रहे. ३ 'धु भयथुः' इति पाठः.

युगपद्व्याप्तिरङ्गानां प्रलापः कटुवक्त्रता ॥ १८ ॥
नासास्यपाकः शीतेच्छा भ्रमो मूर्च्छा मदोऽरतिः ।
विट्स्रंसः पित्तवमनं रक्तष्ठीवनमम्लकः ॥ १९ ॥
रक्तकोठोद्गमः पीतहरितत्वं त्वगादिषु ।
स्वेदो निश्वासवैगन्ध्यमतितृष्णा च पित्तजे ॥ २० ॥
विशेषादरुचिर्जाड्यं स्रोतोरोधोऽल्पवेगता ।
प्रसेको मुखमाधुर्यं हृल्लेपश्वासपीनसाः ॥ २१ ॥
हृल्लासश्छर्दनं कासः स्तम्भः श्वैत्यं त्वगादिषु ।
अङ्गेषु शीतपिटिकास्तन्द्रोदर्दः कफोद्भवे ॥ २२ ॥
काले यथास्वं सर्वेषां प्रवृत्तिर्वृद्धिरेव वा ।
निदानोक्तानुपशयो विपरीतोपशायिता ।
यथास्वं लिङ्गसंसर्गे ज्वरः संसर्गजः

अपि च ॥ २३ ॥

शिरोर्तिमूर्च्छावमिदाहमोह-
कण्ठास्यशोषारतिपर्वभेदाः ।
उन्निद्रतातृड्भ्रमरोमहर्षा
जृम्भातिवाक्त्वं च चलात्सपित्तात् ॥ २४ ॥
तापहान्यरुचिपर्वशिरोरुक्
पीनसश्वसनकासविबन्धाः ।
शीतजाड्यतिमिरभ्रमतन्द्राः
श्लेष्मवातजनितज्वरलिङ्गम् ॥ २५ ॥

---

१ 'धास्वलिङ्ग' इति पाठः.

शीतस्तम्भस्वेददाहाव्यवस्था
तृष्णाकासश्लेष्मपित्तप्रवृत्तिः।
मोहस्तन्द्रालिप्ततिक्तास्यता च
ज्ञेयं रूपं श्लेष्मपित्तज्वरस्य ॥ २६ ॥
सर्वजो लक्षणैः सर्वैर्दाहोऽत्र च मुहुर्मुहुः।
तद्वच्छीतं महानिद्रा दिवा जागरणं निशि ॥ २७ ॥
सदा वा नैव वा निद्रा महास्वेदोऽति नैव वा।
गीतनर्तनहास्यादिविकृतेहाप्रवर्तनम् ॥ २८ ॥
साश्रुणी कलुषे रक्ते भुग्ने लुलितपक्ष्मणी।
अक्षिणी पिण्डिकापार्श्वमूर्धपर्वास्थिरुग्भ्रमः ॥ २९ ॥
सस्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवाचितः।
परिदग्धा खरा जिह्वा गुरुः स्रस्ताङ्गसन्धिता ॥ ३० ॥
रक्तपित्तकफष्ठीवो लोलनं शिरसोऽतिरुक्।
कोठानां श्यावरक्तानां मण्डलानां च दर्शनम् ॥ ३१ ॥
हृद्व्यथा मलसंसङ्गः प्रवृत्तिर्वाऽल्पशोऽति वा।
स्निग्धास्यता बलभ्रंशः स्वरसादः प्रलापिता ॥ ३२ ॥
दोषपाकश्चिरात्तन्द्रा प्रततं कण्ठकूजनम्।
सन्निपातमभिन्यासं तं ब्रूयाच्च हृतौजसम् ॥ ३३ ॥
"वायुना कफरुद्धेन पित्तमन्तः प्रपीडितम्।

१ 'ष्णा कासः श्ले' इति पाठः. २ ('महान् स्वे' इति चन्द्रः,) 'मुहुः स्वे' इति पाठः. ३ 'सम्रुते क' इति पाठः. ४ 'रुक् श्रमः' इति पाठः. ५ 'गुरुस्र' इति चन्द्रः. ६ 'हतौ' इति चन्द्रः.

व्यवायित्वाच्च सूक्ष्मत्वाद्बहिर्मार्गं प्रवर्तते ॥
तेन हारिद्रनेत्रत्वं सन्निपातोद्भवे ज्वरे ।"
दोषे विबद्धे नष्टेऽग्नौ सर्वसम्पूर्णलक्षणः ।
असाध्यः

सोऽन्यथा कृच्छ्रो भवेद्वैकल्यदोऽपि वा ॥३४॥
अन्यश्च सन्निपातोत्थो यत्र पित्तं पृथक् स्थितम् ।
त्वचि कोष्ठेऽथवा दाहं विदधाति पुरोऽनु वा ॥ ३५ ॥
तद्वद्वातकफौ शीतं, दाहादिर्दुस्तरस्तयोः ।
शीतादौ तत्र पित्तेन कफे स्यन्दितशोषिते ॥ ३६ ॥
शीते शान्तेऽम्लको मूर्च्छा मदस्तृष्णा च जायते ।
दाहादौ पुनरन्ते स्युस्तन्द्राष्ठीववमिक्लमाः ॥ ३७ ॥
आगन्तुरभिघाताभिषङ्गशापाभिचारतः ।
चतुर्धा

अत्र क्षतच्छेददाहाद्यैरभिघातजः ॥ ३८ ॥
श्रमाच्च

तस्मिन्पवनः प्रायो रक्तं प्रदूषयन् ।
सव्यथाशोफवैवर्ण्यं, सरुजं कुरुते ज्वरम् ॥ ३९ ॥
ग्रहावेशौषधिविषक्रोधभीशोककामजः ।
अभिषङ्गात्

ग्रहेणास्मिन्नकस्माद्धासरोदने ॥ ४० ॥

---

१ 'अन्यश्च' इति चन्द्रः, सङ्ग्रहश्च. २ 'न्द्राष्ठेव', ('न्द्रास्वेदव' सं.मू. ) इति पाठः.

ओषधीगन्धजे मूर्च्छा शिरोरुग्वमथुः क्षवः ।
विषान्मूर्च्छातिसारास्यश्यावतादाहहृद्ग्रहाः ॥ ४१ ॥
क्रोधात्कम्पः शिरोरुक् च
प्रलापो भयशोकजे ।
कामाद्भ्रमोऽरुचिर्दाहो ह्रीनिद्राधीधृतिक्षयः ॥ ४२ ॥
ग्रहादौ सन्निपातस्य भयादौ मरुतस्त्रये ।
कोपः कोपेऽपि पित्तस्य
यौ तु शापाभिचारजौ ॥ ४३ ॥
सन्निपातज्वरौ घोरौ तावसह्यतमौ मतौ ।
तत्राभिचारिकैर्मन्त्रैर्हूयमानस्य तप्यते ॥ ४४ ॥
पूर्वं चेतस्ततो देहस्ततो विस्फोटतृड्भ्रमैः ।
सदाहमूर्च्छैर्ग्रस्तस्य प्रत्यहं वर्धते ज्वरः ॥ ४५ ॥
इति ज्वरोऽष्टधा दृष्टः
समासाद्द्विविधस्तु सः ।
शारीरो मानसः सौम्यस्तीक्ष्णोऽन्तर्बहिराश्रयः ॥ ४६ ॥
प्राकृतो वैकृतः साध्योऽसाध्यः सामो निरामकः ।
पूर्वं शरीरे शारीरे तापो, मनसि मानसे ॥ ४७ ॥
पवने योगवाहित्वाच्छीतं श्लेष्मयुते भवेत् ।

---

१ 'रुक्श्वयथुः', 'रुग्वेपथुः' इति च क्वचित्. २ 'हृद्ग्रहाः' इति तोडरः. ३ 'मान्मोहोऽ' इति पाठः. ४ 'भीनिद्रा' इति हेमाद्रिः. ५ 'कोपे तु पि' इति चन्द्रः, तो. ६ 'वसाध्यत' पाठः.

भार्ग्यास्फोतामृतापञ्चकोलेष्वप्येष संविधिः ॥ ४९ ॥
पिष्टैर्गजकणापाठाकारवीपञ्चकोलकैः ।
तुम्बर्वजाजीधनिकाबिल्वमध्यैश्च कल्पयेत् ॥ ५० ॥
फलाम्लान्यमकस्नेहान् पेयायूषरसादिकान् ।
एभिरेवौषधैः साध्यं वारि सर्पिश्च दीपनम् ॥ ५१ ॥
क्रमोऽयं भिन्नशकृतां, वक्ष्यते गाढवर्चसाम् ।
स्नेहाढ्यैः सक्तुभिर्युक्तां लवणां वारुणीं पिबेत् ॥ ५२ ॥
लवणा एव वा तक्रसीधुधान्याम्लवारुणीः ।
प्राग्भक्तं यमके भृष्टान् सक्तुभिश्चावचूर्णितान् ॥ ५३ ॥
करञ्जपल्लवान् खादेद्वातवर्चोऽनुलोमनान् ।
सगुडं नागरं पाठां गुडक्षारघृतानि वा ॥ ५४ ॥
गोमूत्राध्युषितामथात्सगुडां वा हरीतकीम् ।
पथ्याशतद्वयान्मूत्रद्रोणेनाऽऽमूत्रसङ्क्षयात् ॥ ५५ ॥
पक्वान् खादेत्समधुनी द्वे द्वे, हन्ति कफोद्भवान् ।
दुर्नामकुष्ठश्वयथुगुल्ममेहोदरक्रमीन् ॥ ५६ ॥
ग्रन्थ्यर्बुदापचीस्थौल्यपाण्डुरोगाढ्यमारुतान् ।
अजश्रृङ्गीजटाकल्कमजामूत्रेण यः पिबेत् ॥ ५७ ॥
गुडवार्ताकभुक्तस्य नश्यन्त्याशु गुदाङ्कुराः ।
श्रेष्ठारसेन त्रिवृतां पथ्यां तक्रेण वा सह ॥ ५८ ॥
पथ्यां वा पिप्पलीयुक्तां घृतभृष्टां गुडान्विताम् ।
अथवा सत्रिवृद्दन्तीं भक्षयेदनुलोमनीम् ॥ ५९ ॥

---

१ 'द्वयं मूत्र' इति पाठः.

हते गुदाश्रये दोषे गुदजा यान्ति सङ्क्षयम् ।
दाडिमस्वरसाजाजीयवानीगुडनागरैः ॥ ६० ॥
पाठया वा युतं तक्रं वातवर्चोनुलोमनम् ।
सीधुं वा गौडमथवा सचित्रकमहौषधम् ॥ ६१ ॥
पिबेत्सुरां वा हपुषापाठासौवर्चलान्विताम् ।
दशादिदशकैर्वृद्धाः पिप्पलीर्द्विपचुं तिलान् ॥ ६२ ॥
पीत्वा क्षीरेण लभते बलं देहहुताशयोः ।
दुःस्पर्शकेन बिल्वेन यवान्या नागरेण वा ॥ ६३ ॥
एकैकेनाऽपि संयुक्ता पाठा हन्त्यर्शसां रुजम् ।
सलिलस्य वहे पक्त्वा प्रस्थार्धमभयात्वचम् ॥ ६४ ॥
प्रस्थं धात्र्या दशपलं कपित्थानां ततोऽर्धतः ।
विशालां रोध्रमरिचकृष्णाचेल्लवालुकम् ॥ ६५ ॥
द्विपलांशं पृथक्पादशेषे पूते गुडात्तुले ।
दत्वा प्रस्थं च धातक्याः स्थापयेद् घृतभाजने ॥ ६६ ॥
पक्षात्स शीलितोऽरिष्टः करोत्यग्निं, निहन्ति च ।
गुदजग्रहणीपाण्डुकुष्ठोदरगरज्वरान् ॥ ६७ ॥
श्वयथुप्लीहहृद्रोगगुल्मयक्ष्मवमिक्रमीन् ।
जलद्रोणे पचेद्दन्तीदशमूलवराग्निकान् ॥ ६८ ॥
पालिकान्पादशेषे तु क्षिपेद्गुडतुलां परम् ।
पूर्ववत्सर्वमस्य स्यादानुलोमितरस्त्वयम् ॥ ६९ ॥
पचेद्दुरालभाप्रस्थं द्रोणेऽपां प्रास्तैः सह ।

दन्तीपाठाग्निविजयावासामलकनागरैः ॥ ७० ॥
तस्मिन् सिताशतं दद्यात्पादस्थेऽन्यच्च पूर्ववत् ।
लिम्पेत्कुम्भं तु फलिनीकृष्णाचव्याज्यमाक्षिकैः ॥ ७१ ॥
प्राग्भक्तमानुलोम्याय फलाम्लं वा पिबेद् घृतम् ।
चव्यचित्रकसिद्धं वा यवक्षारगुडान्वितम् ॥ ७२ ॥
पिप्पलीमूलसिद्धं वा सगुडक्षारनागरम् ।
पिप्पलीपिप्पलीमूलधानकादाडिमैर्घृतम् ॥ ७३ ॥
दध्ना च साधितं वातशकृन्मूत्रविबन्धहृत् ।
पलाशक्षारतोयेन त्रिगुणेन पचेद् घृतम् ॥ ७४ ॥
वत्सकादिप्रतीवापमर्शोघ्नं दीपनं परम् ।
पञ्चकोलाभयाक्षारयवानीबिडसैन्धवैः ॥ ७५ ॥
सपाठाधान्यमरिचैः सबिल्वैर्दधिमद्घृतम् ।
साधयेत्, तज्जयत्याशु गुदवङ्क्षणवेदनाम् ॥ ७६ ॥
प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम् ।
पाठाजमोदधनिकाश्वदंष्ट्रापञ्चकोलकैः ॥ ७७ ॥
सबिल्वैर्दधि चाङ्गेरीस्वरसे च चतुर्गुणे ।
हन्त्याज्यं सिद्धमानाहं मूत्रकृच्छ्रं प्रवाहिकाम् ॥ ७८ ॥
गुदभ्रंशार्तिगुदजग्रहणीगदमारुतान् ।
शिखितित्तिरिलावानां रसानम्लान् सुसंस्कृतान् ॥ ७९ ॥
दक्षाणां वर्तकानां वा दद्याद्विड्वातसङ्ग्रहे ।
वास्तुकाग्नित्रिवृद्दन्तीपाठाम्लीकादिपल्लवान् ॥ ८० ॥

अन्यच्च कफवातघ्नं शाकं च लघु भेदि च।
सहिङ्गु यमके भृष्टं सिद्धं दधिसरैः सह॥ ८१॥
धनिकापञ्चकोलाभ्यां पिष्टाभ्यां दाडिमाम्बुना।
आर्द्रिकायाः किसलयैः शकलैरार्द्रकस्य च॥ ८२॥
युक्तमङ्गारधूपेन हृद्येन सुरभीकृतम्।
सजीरकं समरिचं बिडसौवर्चलोत्कटम्॥ ८३॥
वातोत्तरस्य रूक्षस्य मन्दाग्नेर्बद्धवर्चसः।
कल्पयेद्रक्तशाल्यन्नं[1] अनान् शाकवद्रसान्॥ ८४॥
गोगोधाछागलोष्ट्राणां विशेषात्क्रव्यभोजिनाम्।
मदिरां शार्करं गौडं सीधुं तक्रं तुषोदकम्॥ ८५॥
अरिष्टं मस्तु पानीयं पानीयं वाऽल्पकं शृतम्।
धान्येन धान्यशुण्ठीभ्यां कण्टकारिकयाऽथवा॥ ८६॥
अन्ते भक्तस्य मध्ये वा वातवर्चोनुलोमनम्।
विड्वातकफपित्तानामानुलोम्ये हि निर्मले॥ ८७॥
गुदे शाम्यन्ति गुदजाः पावकश्चाभिवर्धते।
उदावर्तपरीता ये ये चात्यर्थं विरूक्षिताः॥ ८८॥
विलोमवाताः शूलार्तास्तेष्विष्टमनुवासनम्।
पिप्पलीं मदनं बिल्वं शताह्वां मधुकं वचाम्॥ ८९॥
कुष्ठं शुण्ठीं पुष्कराख्यं चित्रकं देवदारु च।
पिष्ट्वा तैलं विपक्तव्यं द्विगुणक्षीरसंयुतम्॥ ९०॥
अर्शसां मूढवातानां तच्छ्रेष्ठमनुवासनम्।

---

१ 'व्यञ्जनं' इति अरुणसम्मतः पाठः.

गुदनिःसरणं शूलं मूत्रकृच्छ्रं प्रवाहिकाम् ॥ ९१ ॥
कटयूरुपृष्ठदौर्बल्यमानाहं वङ्क्षणाश्रयम् ।
पिच्छास्रावं गुदे शोफं वातवर्चोविनिग्रहम् ॥ ९२ ॥
उत्थानं बहुशो यच्च जयेत्तच्चानुवासनात् ।
निरूहं वा प्रयुञ्जीत सक्षीरं पाञ्चमूलिकम् ॥ ९३ ॥
समूत्रस्नेहलवणं कल्कैर्युक्तं फलादिभिः ।
अथ रक्तार्शसां वीक्ष्य मारुतस्य कफस्य वा ॥ ९४ ॥
अनुबन्धं, ततः स्निग्धं रूक्षं वा योजयेद्धिमम् ।
शकृच्छ्यावं खरं रूक्षमधो निर्याति नानिलः ॥ ९५ ॥
कट्यूरुगुदशूलं च हेतुर्यदि च रूक्षणम् ।
तत्रानुबन्धो वातस्य श्लेष्मणो यदि विट् श्लथा ॥ ९६ ॥
श्वेता पीता गुरुः स्निग्धा सपिच्छः[1] स्तिमितो गुदः ।
हेतुः स्निग्धगुरुर्विद्याद्यथास्वं चास्रलक्षणात् ॥ ९७ ॥
दुष्टेऽस्रे शोधनं कार्यं लङ्घनं च यथाबलम् ।
यावच्च दोषैः कालुष्यं स्रुतेस्तावदुपेक्षणम् ॥ ९८ ॥
दोषाणां पाचनार्थं च वह्निसन्धुक्षणाय च ।
सङ्ग्रहाय च रक्तस्य परं तिक्तैरुपाचरेत् ॥ ९९ ॥
यत्तु प्रक्षीणदोषस्य रक्तं वातोल्बणस्य वा ।
स्नेहैस्तच्छोधयेद्युक्तैः पानाभ्यञ्जनबस्तिषु ॥ १०० ॥
यत्तु पित्तोल्बणं रक्तं घर्मकाले प्रवर्तते ।
स्तम्भनीयं तदेकान्तान्न चेद्वातकफानुगम् ॥ १०१ ॥

---

१ 'सपिच्छा' इति पाठः.

सकफेऽस्रे पिबेत्पाक्यं शुण्ठीं कुटजवल्कलम् ।
किराततिक्तकं शुण्ठीं धन्वयासं कुचन्दनम् ॥ १०२ ॥
दार्वीत्वङ्निम्बसेव्यानि त्वचं वा दाडिमोद्भवाम् ।
कुटजत्वक्फलं तार्क्ष्यं माक्षिकं घुणवल्लभाम् ॥ १०३ ॥
पिबेत्तण्डुलतोयेन कल्कितं वा मयूरकम् ।
तुलां दिव्याम्भसि पचेदार्द्रायाः कुटजत्वचः ॥ १०४ ॥
नीरसायां त्वचि क्वाथे दद्यात्सूक्ष्मरजीकृतान् ।
समङ्गाफलिनीमोचरसान्मुष्टयंशकान्समान् ॥ १०५ ॥
तैश्च शक्रयवान्पूते ततो दर्वीप्रलेपनम् ।
पक्त्वावलेहं लीढ्वा च तं यथाग्निबलं पिबेत् ॥ १०६ ॥
पेयां मण्डं पयश्छागं गव्यं वा छागदुग्धभुक् ।
लेहोऽयं शमयत्याशु रक्तातीसारपायुजान् ॥ १०७ ॥
बलवद्रक्तपित्तं च स्रवदूर्ध्वमधोऽपि वा ।
कुटजत्वक्तुलां द्रोणे पचेदष्टांशशेषिताम् ॥ १०८ ॥
कल्कीकृत्य क्षिपेत्तत्र तार्क्ष्यशैलं कटुत्रयम् ।
रोध्रद्वयं मोचरसं बलां दाडिमजां त्वचम् ॥ १०९ ॥
बिल्वकर्कटिका मुस्तं समङ्गां धातकीफलम् ।
पलोन्मितं दशपलं कुटजस्यैव च त्वचः ॥ ११० ॥
त्रिंशत्पलानि गुडतो घृतात्पूते च विंशतिः ।
तत्पक्वं लेहतां यातं धान्ये पक्षस्थितं लिहन् ॥ १११ ॥
सर्वार्शोग्रहणीदोषश्वासकासान्नियच्छति ।

रोध्रं तिलान्मोचरसं समङ्गां चन्दनोत्पलम् ॥ ११२ ॥
पाययित्वाऽजदुग्धेन शालींस्तेनैव भोजयेत् ।
यष्ट्याह्वपद्मकानन्तापयस्याक्षीरमोरटम् ॥ ११३ ॥
ससितामधु पातव्यं शीततोयेन तेन वा ।
रोध्रकट्वङ्गकुटजसमङ्गाशाल्मलीत्वचम् ॥ ११४ ॥
हिमकेसरयष्ट्याह्वसेव्यं वा तण्डुलाम्बुना ।
यवानीन्द्रयवाः पाठा बिल्वं शुण्ठी रसाञ्जनम् ॥ ११५
चूर्णश्च लेहितः शूले प्रवृत्ते चाऽतिशोणिते ।
दुग्धिकाकण्टकारीभ्यां सिद्धं सर्पिः प्रशस्यते ॥ ११६ ॥
अथवा धातकीरोध्रकुटजत्वक्फलोत्पलैः ।
सकेसरैर्यवक्षारदाडिमस्वरसेन वा ॥ ११७ ॥
शर्कराम्भोजकिञ्जल्कसहितं सह वा तिलैः ।
अभ्यस्तं रक्तगुदजान् नवनीतं नियच्छति ॥ ११८ ॥
छागानि नवनीताज्यक्षीरमांसानि जाङ्गलः ।
अनम्लो वा कदम्लो वा सवास्तुकरसो रसः ॥ ११९ ॥
रक्तशालिः सरो दध्नः षष्टिकस्तरुणी सुरा ।
तरुणश्च सुरामण्डः शोणितस्यौषधं परम् ॥ १२० ॥
पेयायूषरसाद्येषु पलाण्डुः केवलोऽपि वा ।
स जयत्युल्बणं रक्तं मारुतं च प्रयोजितः ॥ १२१ ॥
वातोल्बणानि प्रायेण भवन्त्यस्रेऽतिनिःसृते ।
अर्शांसि, तस्मादधिकं तज्जये यत्नमाचरेत् ॥ १२२ ॥
दृष्ट्वाऽस्रपित्तं प्रबलमबलौ च कफानिलौ ।

शीतोपचारः कर्तव्यः सर्वथा तत्प्रशान्तये ॥ १२३ ॥
यदा चैवं शमो न स्यात् स्निग्धोष्णैस्तर्पयेत्ततः।
रसैः कोष्णैश्च सर्पिर्भिरवपीडकयोजितैः ॥ १२४ ॥
सेचयेत्तं कवोष्णैश्च कामं तैलपयोघृतैः।
यवासकुशकाशानां मूलं पुष्पं च शाल्मलेः ॥ १२५ ॥
न्यग्रोधोदुम्बराश्वत्थशुङ्गाश्च द्विपलोन्मिताः।
त्रिप्रस्थे सलिलस्यैतत्क्षीरप्रस्थे च साधयेत् ॥ १२६ ॥
क्षीरशेषे कषाये च तस्मिन्पूते विमिश्रयेत्।
कल्कीकृतं मोचरसं समङ्गां चन्दनोत्पलम् ॥ १२७ ॥
प्रियङ्गुं कौटजं बीजं कमलस्य च केसरम्।
पिच्छाबस्तिरयं सिद्धः सघृतक्षौद्रशर्करः ॥ १२८ ॥
प्रवाहिकागुदभ्रंशरक्तस्रावज्वरापहः।
यष्ट्याह्वपुण्डरीकेण तथा मोचरसादिभिः ॥ १२९ ॥
क्षीरद्विगुणितः पक्वो देयः स्नेहोऽनुवासनम्।
मधुकोत्पलरोध्राम्बुसमङ्गा बिल्वचन्दनम् ॥ १३० ॥
चविकातिविषा मुस्तं पाठा क्षारो यवाग्रजः।
दार्वित्वङ्नागरं मांसी चित्रको देवदारु च ॥ १३१ ॥
चाङ्गेरीस्वरसे सर्पिः साधितं तत्त्रिदोषजित्।
अर्शोऽतिसारग्रहणीपाण्डुरोगज्वरारुचौ ॥ १३२ ॥
मूत्रकृच्छ्रे गुदभ्रंशे बस्त्यानाहे प्रवाहणे।
पिच्छास्रावेऽर्शसां शूले देयं तत्परमौषधम् ॥ १३३ ॥

---

१ 'तावदेवं समस्तस्य स्नि' इति पाठः.

व्यत्यासान्मधुराम्लानि शीतोष्णानि च योजयेत् ।
नित्यमग्निबलापेक्षी जयत्यर्शःकृतान् गदान् ॥ १३४ ॥
उदावर्तार्तमभ्यज्य तैलैः शीतज्वरापहैः ।
सुस्निग्धैः स्वेदयेत्पिण्डैर्वर्तिमस्मै गुदे ततः ॥ १३५ ॥
अभ्यक्तां तत्कराङ्गुष्ठसन्निभामनुलोमनीम् ।
दद्याच्छ्यामात्रिवृद्दन्तीपिप्पलीनीलिनीफलैः ॥ १३६ ॥
विचूर्णितैर्द्विलवणगुडगोमूत्रसंयुतैः ।
तद्वन्मागधिकाराठगृहधूमैः ससर्षपैः ॥ १३७ ॥
एतेषामेव वा चूर्णं गुदे नाड्या विनिर्धमेत् ।
तद्विघाते सुतीक्ष्णं तु बस्तिं स्निग्धं प्रपीडयेत् ॥ १३८ ॥
ऋजूकुर्याद्गुदसिरा विण्मूत्रमरुतोऽस्य सः ।
भूयोऽनुबन्धे वातघ्नैर्विरेच्यः स्नेहरेचनैः ॥ १३९ ॥
अनुवास्यश्च रौक्ष्याद्धि सङ्गो मारुतवर्चसोः ।
त्रिकटुत्रिपटुश्रेष्ठादन्त्यरुष्करचित्रकम् ॥ १४० ॥
जर्जरं स्नेहमूत्राक्तमन्तर्धूमं विपाचयेत् ।
शरावसन्धौ मृल्लिप्ते क्षारः कल्याणकाह्वयः ॥ १४१ ॥
स पीतः सर्पिषा युक्तो भक्ते वा स्निग्धभोजिना ।
उदावर्तविबन्धार्शोगुल्मपाण्डूदरकृमीन् ॥ १४२ ॥
मूत्रसङ्गाश्मरीशोफहृद्रोगग्रहणीगदान् ।
मेहप्लीहरुजानाहश्वासकासांश्च नाशयेत् ।
सर्वं च कुर्याद्यत्प्रोक्तमर्शसां गाढवर्चसाम् ॥ १४३ ॥

---

१ 'द्गुदशिरो वि' इति अरुणसम्मतः पाठः.

द्रोणेऽपां पूतिवल्कद्वितुलमथ पचे-
त्पादशेषे च तस्मिन्
देयाऽशीतिर्गुडस्य प्रतनुकरजसो
व्योषतोऽष्टौ पलानि ।
एतन्मासेन जातं जनयति परमा-
मूष्मणः पक्तिशक्तिं
शुक्तं कृत्वाऽनुलोम्यं प्रजयति गुदज-
प्लीहगुल्मोदराणि ॥ १४४ ॥
पचेत्तुलां पूतिकरञ्जवल्काद्
द्वे मूलतश्चित्रककण्टकार्योः ।
द्रोणत्रयेऽपां चरणावशेषे
पूते शतं तत्र गुडस्य दद्यात् ॥ १४५ ॥
पलिकं च सुचूर्णितं त्रिजात-
त्रिकटुग्रन्थिकदाडिमाश्मभेदम् ।
पुरपुष्करमूलधान्यचव्यं
हपुषामार्द्रकमम्लवेतसं च ॥ १४६ ॥
शीतीभूतं क्षौद्रविंशत्युपेत-
मार्द्रद्राक्षाबीजपूरार्थकैश्च ।
युक्तं कामं गण्डिकाभिस्तथेक्षोः
सर्पिःपात्रे मासमात्रेण जातम् ॥ १४७ ॥

---

१ 'सूक्तं' इति पाठः. २ 'सर्पिः पात्रे' इति पाठः.

शुक्तं क्रकचमिवेदं दुर्नाम्नां वह्निदीपनं परमम् ।
पाण्डुगरोदरगुल्मप्लीहानाहाश्मकृच्छ्रघ्नम् ॥ १४८ ॥
द्रोणं पीलुरसस्य वस्त्रगलितं न्यस्तं हविर्भाजने
युञ्जीत द्विपलैर्मदामधुफलाखर्जूरधात्रीफलैः ।
पाठमाद्रिदुराकभाल्लविदुलव्योषत्वगेलाह्लकैः[2]
इष्टकाकोलकवज्रवेल्लचपलामूलाग्निकैः पालिकैः ॥ १४९ ॥
गुडपलशतयोजितं निवाते
निहितमिदं प्रपिबंश्च पक्षमात्रात् ।
निशमयति गुदाङ्कुरान् सगुल्मा-
ननलबलं प्रबलं करोति चाशु ॥ १५० ॥
एकैकशो दशपले दशमूलकुम्भ-
पाठाद्वयार्कघुणवल्लभकट्फलानाम् ।
दुग्धे श्रृते[2]ऽनु कलशेन जलेन पक्के
पादस्थिते गुडतुलां पलपञ्चकं च ॥ १५१ ॥
दद्यात्प्रत्येकं व्योषचव्याभयानां
वह्नेर्मुष्टी द्वे यवक्षारतश्च ।
दर्वीमालिम्पन् हन्ति लीढो गुडोऽयं
गुल्मप्लीहार्शःकुष्ठमेहाग्निसादान् ॥ १५२ ॥
तोयद्रोणे चित्रकमूलतुलार्धं
साध्यं यावत्पादजलस्थमपीदम् ...ाम् ।

१ 'लोह्लकैः' इति पाठः. २ 'स्रुतेऽनु' इति पाठे पाठः.

अष्टौ दत्त्वा जीर्णगुडस्य पलानि
काथ्यं भूयः सान्द्रतया सममेतत् ॥ १५३ ॥
त्रिकटुकमिसिपथ्याकुष्ठमुस्तावराङ्ग-
कृमिरिपुदहनैलाचूर्णकीर्णोऽवलेहः।
जयति गुदजकुष्ठप्लीहगुल्मोदराणि
प्रबलयति हुताशं शश्वदभ्यस्यमानः ॥ १५४ ॥
गुडव्योषवरावेल्लतिलारुष्करचित्रकैः ॥
अर्शांसि हन्ति गुटिका त्वग्विकारं च शीलिता ॥ १५५ ॥
मृल्लिप्तं सौरणं कन्दं पक्त्वाऽग्नौ पुटपाकवत्।
अद्यात्सतैललवणं दुर्नामविनिवृत्तये ॥ १५६ ॥
मरिचपिप्पलिनागरचित्रकान्
क्रमविवर्धितभागसमाहृतान्।
शिखिचतुर्गुणसूरणयोजितान्
कुरु गुडेन गुडान् गुदजच्छिदः ॥ १५७ ॥
चूर्णीकृताः षोडश सूरणस्य
भागास्ततोऽर्धेन च चित्रकस्य।
महौषधाद्वौ मरिचस्य चैको
गुडेन दुर्नामजयाय पिण्डी ॥ १५८ ॥
पथ्यानागरकृष्णाकरञ्जवेल्लाग्निभिः सितातुल्यैः।
वडवामुख इव जरयति बहुगुर्वपि भोजनं चूर्णम् ॥ १५९ ॥
कलिङ्गलाङ्गलीकृष्णावह्न्यपामार्गतण्डुलैः।
भूनिम्बसैन्धवगुडैर्गुडा गुदजनाशनाः ॥ १६० ॥

लवणोत्तमवह्निकलिङ्गयवां-
श्चिरिबिल्वमहापिचुमन्दयुतान् ।
पिब सप्तदिनं मथितालुडितान्
यदि मर्दितुमिच्छसि पायुरुहान् ॥ १६१ ॥
शुष्केषु भल्लातकमग्र्यमुक्तं
भैषज्यमार्द्रेषु तु वत्सकत्वक् ।
सर्वेषु सर्वर्तुषु कालशेय-
मर्शःसु बल्यं च मलापहं च ॥ १६२ ॥
भित्त्वा विबन्धाननुलोमनाय
यन्मारुतस्याऽग्निबलाय यच्च ।
तदन्नपानौषधमर्शसेन
सेव्यं, विवर्ज्यं विपरीतमस्मात् ॥ १६३ ॥
अर्शोऽतिसारग्रहणीविकाराः
प्रायेण चान्योन्यनिदानभूताः ।
सन्नेऽनले सन्ति, न सन्ति दीप्ते
रक्षेदतस्तेषु विशेषतोऽग्निम् ॥ १६४ ॥"

---

## नवमोऽध्यायः ।

अथातोऽतीसारचिकित्सितं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥
"अतीसारो हि भूयिष्ठं भवत्यामाशयान्वयः ।

---

१ 'श्चिरबिल्व' इति पाठः.

हत्वाग्निं, वातजेऽप्यस्मात्प्राक् तस्मिँल्लङ्घनं हितम् ॥ १ ॥
शूलानाहप्रसेकार्तं वामयेदतिसारिणम् ।
दोषाः सन्निचिता ये च विदग्धाहारमूर्च्छिताः ॥ २ ॥
अतिसाराय कल्प्यन्ते, तेषूपेक्षैव भेषजम् ।
भृशोत्क्लेशप्रवृत्तेषु स्वयमेव चलात्मसु, ॥ ३ ॥
प्रयोज्यं न तु सङ्ग्राहि पूर्वमामातिसारिणि ।
अपि चाध्मानगुरुताशूलस्तैमित्यकारिणि ॥ ४ ॥
प्राणदा प्राणदा दोषे विबद्धे सम्प्रवर्तिनी ।
पिबेत्प्रकथितांस्तोये मध्यदोषो विशोषयन् ॥ ५ ॥
भूतीकपिप्पलीशुण्ठीवचाधान्यहरीतकीः ।
अथवा बिल्वधनिकामुस्तानागरवालकम् ॥ ६ ॥
बिडपाठावचापथ्याकृमिजिन्नागराणि वा ।
शुण्ठीघनवचामाद्रीबिल्ववत्सकहिङ्गु वा ॥ ७ ॥
शस्यते स्वल्पदोषाणामुपवासोऽतिसारिणाम् ।
वचाप्रतिविषाभ्यां वा मुस्तापर्पटकेन वा ॥ ८ ॥
ह्रीबेरनागराभ्यां वा विपक्वं पाययेज्जलम् ।
युक्तेऽन्नकाले क्षुत्क्षामं लघ्वन्नं प्रतिभोजयेत् ॥ ९ ॥
तथा स शीघ्रं प्राप्नोति रुचिमग्निबलं बलम् ।
तक्रेणावन्तिसोमेन यवाग्वा तर्पणेन वा ॥ १० ॥
सुरया मधुना चाऽथ यथासात्म्यमुपाचरेत् ।
भोज्यानि कल्पयेदूर्ध्वं ग्राहिदीपनपाचनैः ॥ ११ ॥

---

१ 'कल्पन्ते' इति पाठः.

बालबिल्वशठीधान्यहिङ्गुवृक्षाम्लदाडिमैः ।
पलाशहपुषाजाजीयवानीबिडसैन्धवैः ॥ १२ ॥
लशुना पञ्चमूलेन पञ्चकोलेन पाठया ।
शालिपर्णीबलाबिल्वैः पृश्निपर्ण्या च साधिता ॥ १३ ॥
दाडिमाम्ला हिता पेया कफपित्ते समुल्बणे ।
अभयापिप्पलीमूलबिल्वैर्वातानुलोमनी ॥ १४ ॥
विबद्धं दोषबहुलो दीप्ताग्निर्योऽतिसार्यते ।
कृष्णाविडङ्गत्रिफलाकषायैस्तं विरेचयेत् ॥ १५ ॥
पेयां युञ्ज्याद्विरिक्तस्य वातघ्नैर्दीपनैः कृताम् ।
आमे परिणते यस्तु दीप्तेऽग्नावुपवेश्यते ॥ १६ ॥
सफेनपिच्छं सरुजं सविबन्धं पुनः पुनः ।
अल्पाल्पमल्पं समलं निर्विड्गा सप्रवाहिकम् ॥ १७ ॥
दधितैलघृतक्षीरैः स शुण्ठीं सगुडां पिबेत् ।
स्विन्नानि गुडतैलेन भक्षयेद्बदराणि वा ॥ १८ ॥
गाढविड्भिर्हितैः शाकैर्बहुस्नेहैस्तथा रसैः ।
क्षुधितं भोजयेदेनं दधिदाडिमसाधितैः ॥ १९ ॥
शाल्योदनं तिलैर्माषैर्मुद्गैर्वा साधु साधितम् ।
शुण्ठ्या मूलकपोताया: पाठाया: स्वस्तिकस्य वा ॥ २० ॥
सुषायवानीकर्कारुक्षीरिणीचिर्भटस्य वा ।
उपोदकाया जीवन्त्या वाकुच्या वास्तुकस्य वा ॥ २१ ॥
सुवर्चलायाश्चुञ्चोर्वा लोणिकाया रसैरपि ।

कूर्मवर्तकलोपाकशिखितित्तिरिकौकुटैः ॥ २२ ॥
बिल्वमुस्ताक्षिभैषज्यधातकीपुष्पनागरैः ।
पक्वातिसारजित्तक्रे यवागूर्दाधिकी तथा ॥ २३ ॥
कपित्थकच्छुराफञ्जीयूथिकावटशैलुजैः ।
दाडिमीशणकार्पासीशाल्मलीमोचपल्लवैः ॥ २४ ॥
कल्को बिल्वशलाटूनां तिलकल्कश्च तत्समः ।
दध्नः सरोऽम्लः सस्नेहः खलो हन्ति प्रवाहिकाम् ॥२५॥
मरिचं धनिकाजाजीतित्तिडीकशठीबिडम् ।
दाडिमं धातकीपाठात्रिफलापञ्चकोलकम् ॥ २६ ॥
यावशूकं कपित्थाम्रजम्बूमध्यं सदीप्यकम् ।
पिष्टैः पञ्चुणबिल्वैस्तैर्दध्नि मुद्गरसे गुडे ॥ २७ ॥
स्नेहे च यमके सिद्धः खलोऽयमपराजितः ।
दीपनः पाचनो ग्राही रुच्यो बिम्बिशिनाशनः ॥ २८ ॥
कोलानां बालबिल्वानां कल्कैः शालियवस्य च ।
मुद्गमाषतिलानां च धान्ययूषं प्रकल्पयेत् ॥ २९ ॥
ऐकध्यं यमके भृष्टं दधिदाडिमसारिकम् ।
वर्चःक्षये शुष्कमुखं शाल्यन्नं तेन भोजयेत् ॥ ३० ॥
दध्नः सरं वा यमके भृष्टं सगुडनागरम् ।
सुरां वा यमके भृष्टां व्यञ्जनार्थं प्रयोजयेत् ॥ ३१ ॥
फलाम्लं यमके भृष्टं यूषं गृञ्जनकस्य वा ।
भृष्टान्वा यमके सक्तून् खादेद्व्योषावचूर्णितान् ॥ ३२ ॥

माषान् सुसिद्धांस्तद्वद्वा घृतमण्डोपसेवनान् ।
रसं सुसिद्धं पूतं वा छागमेषान्तराधिजम् ॥ ३३ ॥
पचेद्दाडिमसाराम्लं सधान्यस्नेहनागरम् ।
रक्तशाल्योदनं तेन भुञ्जानः प्रपिबंश्च तम् ॥ ३४ ॥
वर्चःक्षयकृतैराशु विकारैः परिमुच्यते ।
बालबिल्वं गुडं तैलं पिप्पलीविश्वभेषजम् ॥ ३५ ॥
लिह्याद्वाते प्रतिहते सशूलः सप्रवाहिकः ।
वल्कलं शाबरं पुष्पं धातक्या बदरीफलम् ॥ ३६ ॥
पिबेद्दधिसरक्षौद्रकपित्थस्वरसाप्लुतम् ।
विबद्धवातवर्चास्तु बहुशूलप्रवाहिकः ॥ ३७ ॥
सरक्तपिच्छस्तृष्णार्तः क्षीरसौहित्यमर्हति ।
यमकस्योपरि क्षीरं धारोष्णं वा प्रयोजयेत् ॥ ३८ ॥
शृतमेरण्डमूलेन बालबिल्वेन वा पुनः ।
पयस्युत्क्वाथ्य मुस्तानां विंशतिं त्रिगुणेऽम्भसि ॥ ३९ ॥
क्षीरावशिष्टं तत्पीतं हन्यादामं सवेदनम् ।
पिप्पल्याः पिबतः सूक्ष्मं रजो मरिचजन्म वा ॥ ४० ॥
चिरकालानुषक्ताऽपि नश्यत्याशु प्रवाहिका ।
निरामरूपं शूलार्तं लङ्घनाद्यैश्च कर्षितम् ॥ ४१ ॥
रूक्षकोष्ठमपेक्ष्याग्निं सक्षारं पाययेद् घृतम् ।
सिद्धं दधिसुरामण्डे दशमूलस्य चाम्भसि ॥ ४२ ॥
सिन्धूत्थपञ्चकोलाभ्यां तैलं सद्योऽर्तिनाशनम् ।

षड्भिः शुण्ठ्याः पलैर्द्वाभ्यां द्वाभ्यां ग्रन्थग्निसैन्धवात् ४३
तैलप्रस्थं पचेद्दध्ना निःसारकरुजापहम् ।
एकतो मांसदुग्धाज्यं पुरीषग्रहशूलजित् ॥ ४४ ॥
पानानुवासनाभ्यङ्गप्रयुक्तं तैलमेकतः ।
तद्धि वातजितामग्र्यं शूलं च विगुणोऽनिलः ॥ ४५ ॥
धात्वन्तरोपमर्दाद्धि चलो व्यापी स्वधामगः ।
तैलं मन्दानलस्याऽपि युक्त्या शर्मकरं परम् ।
वाय्वाशये सतैले हि [1]बिम्बिशी नावतिष्ठते ॥ ४६ ॥

क्षीणे मले स्वायतनच्युतेषु
दोषान्तरेष्वीरण एकवीरे ।
को निष्टनन् प्राणिति कोष्ठशूली
नान्तर्बहिस्तैलपरो यदि स्यात् ॥ ४७ ॥

गुदभ्रंशयोर्युञ्ज्यात्सक्षीरं साधितं हविः ।
रसे कोलाम्लचाङ्गेर्योर्दध्नि पिष्टे च नागरे ॥ ४८ ॥
तैरेव चाम्लैः संयोज्य सिद्धं सुश्लक्ष्णकल्कितैः ।
धान्योषणबिडाजाजीपाठ्यकोलकदाडिमैः ॥ ४९ ॥
योजयेत्स्नेहबस्तिं वा दशमूलेन साधितम् ।
शठीशताह्वाकुष्ठैर्वा वचया चित्रकेण वा ॥ ५० ॥
प्रवाहणे गुदभ्रंशे मूत्राघाते कटिग्रहे ।
मधुराम्लैः शृतं तैलं घृतं वाप्यनुवासनम् ॥ ५१ ॥
प्रवेशयेद्गुदं ध्वस्तमभ्यक्तं स्वेदितं मृदु ।

---

१ 'बिम्बिसी' इति पाठः.

कुर्याच्च [1]गोफणाबन्धं मध्यच्छिद्रेण चर्मणा ॥ ५२ ॥
पञ्चमूलस्य महतः क्वाथं क्षीरे विपाचयेत् ।
उन्दुरुं चान्त्ररहितं तेन वातघ्नकल्कवत् ॥ ५३ ॥
तैलं पचेद्गुदभ्रंशं पानाभ्यङ्गेन तज्जयेत् ।
पैत्ते तु सामे तीक्ष्णोष्णवर्ज्यं प्रागिव लङ्घनम् ॥ ५४ ॥
तृ[2]ष्यान् पिबेत् षडङ्गाम्बु सभूनिम्बं ससारिवम् ।
पेयादि क्षुधितस्यान्नमग्निसन्धुक्षणं हितम् ॥ ५५ ॥
बृहत्यादिगणाभीरुद्विबलाशूर्पपर्णिभिः ।
पाययेदनुबन्धे तु सक्षौद्रं तण्डुलाम्भसा ॥ ५६ ॥
वत्सकस्य फलं पिष्टं सवल्कं समधुणप्रियम् ।
पाठावत्सकबीजत्वग्दार्वीग्रन्थिकशुण्ठि वा ॥ ५७ ॥
क्वाथं वाऽतिविषाबिल्ववत्सकोदीच्यमुस्तजम् ।
अथवाऽतिविषामूर्वानिशेन्द्रयवताक्ष्यंजम् ॥ ५८ ॥
समध्वतिविषाशुण्ठीमुस्तेन्द्रयवकट्फलम् ।
पलं वत्सकबीजस्य श्रपयित्वा रसं पिबेत् ॥ ५९ ॥
यो रसाशी जयेच्छीघ्रं स पैत्तं जाठरामयम् ।
मुस्ताकषायमेवं वा पिबेन्मधुसमायुतम् ॥ ६० ॥
सक्षौद्रं शाल्मलीवृन्तकषायं वा हिमाह्वयम् ।
किराततिक्तकं मुस्तं वत्सकं [3]सरसाञ्जनम् ॥ ६१ ॥
कटङ्कटेरीं ह्रीबेरं बिल्वमध्यं दुरालभाम् ।

---

१ 'गोःफणाब' इति पाठः. २ 'तृड्वान्' इति पाठः.
३ 'सुरसाञ्जनम्' इति पाठः.

तिलान् मोचरसं रोध्रं समङ्गां कमलोत्पलम् ॥ ६२ ॥
नागरं धातकीपुष्पं दाडिमस्य त्वगुत्पलम् ।
अर्धश्लोकैः स्मृता योगाः सक्षौद्रास्तण्डुलाम्बुना ॥ ६३ ॥
निशेन्द्रयवरोध्रैलाक्वाथः पक्वातिसारनुत् ।
रोध्राम्बष्ठाप्रियङ्ग्वादिगणांस्तद्वत् पृथक् पिबेत् ॥ ६४ ॥
कट्वङ्गवल्कयष्ट्याह्वफलिनीदाडिमाङ्कुरैः ।
पेयाविलेपीखलकान् कुर्यात्सदधिदाडिमान् ॥ ६५ ॥
तद्वद्दधित्थबिल्वाम्रजम्बुमध्यैः प्रकल्पयेत् ।
अजापयः प्रयोक्तव्यं निरामे, तेन चेच्छमः ॥ ६६ ॥
दोषाधिक्यान्न जायेत बलिनं तं विरेचयेत् ।
व्यत्यासेन शकृद्रक्तमुपवेश्येत योऽपि वा ॥ ६७ ॥
पलाशफलनिर्यूहं युक्तं वा पयसा पिबेत् ।
ततोऽनु कोष्णं पातव्यं क्षीरमेव यथाबलम् ॥ ६८ ॥
प्रवाहिते तेन मले प्रशाम्यत्युदरामयः ।
पलाशवत्प्रयोज्या वा त्रायमाणा विशोधनी ॥ ६९ ॥
संसर्ग्यां क्रियमाणायां शूलं यद्यनुवर्तते ।
स्रुतदोषस्य तं शीघ्रं यथावह्न्यनुवासयेत् ॥ ७० ॥
शतपुष्पावरीभ्यां च बिल्वेन मधुकेन च ।
तैलपादं पयोयुक्तं पक्वमन्वासनं घृतम् ॥ ७१ ॥
अशान्ताविल्यतीसारे पिच्छाबस्तिः परं हितः ।
परिवेष्ट्य कुशैरार्द्रैरार्द्रवृन्तानि शाल्मलेः ॥ ७२ ॥
कृष्णमृत्तिकयाऽऽलिप्य स्वेदयेद्गोमयाग्निना ।

मृच्छोपे तानि सङ्क्षुद्य तत्पिण्डं मुष्टिसम्मितम् ॥ ७३ ॥
मर्दयेत्पयसः प्रस्थे पूतेनास्थापयेत्ततः ।
नतयष्ट्याह्वकल्काज्यक्षौद्रतैलवताऽनु च ।
स्नातो भुञ्जीत पयसा जाङ्गलेन रसेन वा ॥ ७४ ॥

पित्तातिसारज्वरशोफगुल्म-
समीरणास्रग्रहणीविकारान् ।
जयत्ययं शीघ्रमतिप्रवृत्तिं
विरेचनास्थापनयोश्च बस्तिः ॥ ७५ ॥

फाणितं कुटजोत्थं च सर्वातीसारनाशनम् ।
वत्सकादिसमायुक्तं साम्बष्ठादि समाक्षिकम् ॥ ७६ ॥
निरुद्धिरामं दीप्ताग्नेरपि सास्रं चिरोत्थितम् ।
नानावर्णमतीसारं पुटपाकैरुपाचरेत् ॥ ७७ ॥
त्वक्पिण्डाद्दीर्घवृन्तस्य श्रीपर्णीपत्रसंवृतात् ।
मृल्लिप्तादग्निना स्विन्नाद्रसं निष्पीडितं हिमम् ॥ ७८ ॥
अतीसारी पिबेद्युक्तं मधुना सितयाऽथवा ।
एवं क्षीरद्रुमत्वग्भिस्तत्प्ररोहैश्च कल्पयेत् ॥ ७९ ॥
कट्वङ्गत्वग्घृतयुता स्वेदिता सलिलोष्मणा ।
सक्षौद्रा हन्त्यतीसारं बलवन्तमपि द्रुतम् ॥ ८० ॥
पित्तातिसारी सेवेत पित्तलान्येव यः पुनः ।
रक्तातिसारं कुरुते तस्य पित्तं सतृड्ज्वरम् ॥ ८१ ॥
दारुणं गुदपाकं च, तत्र छागं पयो हितम् ।
पद्मोत्पलसमङ्गाभिः शृतं मोचरसेन वा ॥ ८२ ॥

सारिवायष्टिरोध्रैर्वा प्रसवैर्वा वटादिजैः ।
सक्षौद्रशर्करं पाने भोजने गुदसेचने ॥ ८३ ॥
तद्वद्रसादयोऽनम्लाः साज्याः पानान्नयोर्हिताः ।
काश्मर्यफलयूषश्च किंचिदम्लः सशर्करः ॥ ८४ ॥
पयस्यर्धोदके छागे ह्रीबेरोत्पलनागरैः ।
पेया रक्तातिसारघ्नी पृश्निपर्णीरसान्विता ॥ ८५ ॥
प्राग्भक्तं नवनीतं वा लिह्यान्मधुसितायुतम् ।
बलिन्यस्रेऽस्रमेवाजं मार्गं वा घृतभर्जितम् ॥ ८६ ॥
क्षीरानुपानं क्षीराशी त्र्यहं क्षीरोद्भवं घृतम् ।
कपिञ्जलरसाशी वा लिहन्नारोग्यमश्नुते ॥ ८७ ॥
पीत्वा शतावरीकल्कं क्षीरेण क्षीरभोजनः ।
रक्तातिसारं हन्त्याशु तया वा साधितं घृतम् ॥ ८८ ॥
लाक्षानागरवैदेहीकटुकादार्विवल्कलैः ।
सर्पिः सेन्द्रयवैः सिद्धं पेयामण्डावचारितम् ॥ ८९ ॥
अतीसारं जयेच्छीघ्रं त्रिदोषमपि दारुणम् ।
कृष्णमृच्छङ्खयष्ट्याह्वक्षौद्रासृक्तण्डुलोदकम् ॥ ९० ॥
जयत्यस्रं प्रियङ्गुश्च तण्डुलाम्बुमधुप्लुता ।
कल्कस्तिलानां कृष्णानां शर्करापञ्चभागिकः ॥ ९१ ॥
आजेन पयसा पीतः सद्यो रक्तं नियच्छति ।
पीत्वा सशर्कराक्षौद्रं चन्दनं तण्डुलाम्बुना ॥ ९२ ॥
दाहतृष्णाप्रमेहेभ्यो रक्तस्रावाच्च मुच्यते ।

गुदस्य दाहे पाके वा सेकलेपा हिता हिमाः ॥ ९३ ॥
अल्पाऽल्पं बहुशो रक्तं सशूलमुपवेश्यते ।
यदा विबद्धो वायुश्च कृच्छ्राच्चरति वा न वा ॥ ९४ ॥
पिच्छाबस्तिं तदा तस्य पूर्वोक्तमुपकल्पयेत् ।
पल्लवान् जर्जरीकृत्य शिंशिपाकोविदारयोः ॥ ९५ ॥
पचेद्यवांश्च स क्वाथो घृतक्षीरसमन्वितः ।
पिच्छास्रुतौ गुदभ्रंशे प्रवाहणरुजासु च ॥ ९६ ॥
पिच्छाबस्तिः प्रयोक्तव्यः क्षतक्षीणबलावहः ।
प्रपौण्डरीकसिद्धेन सर्पिषा चाऽनुवासनम् ॥ ९७ ॥
रक्तं विट्सहितं पूर्वं पश्चाद्वा योऽतिसार्यते ।
शतावरीघृतं तस्य लेहार्थमुपकल्पयेत् ॥ ९८ ॥
शर्कराधांशकं लीढं नवनीतं नवोद्धृतम् ।
क्षौद्रपादं जयेच्छीघ्रं तं विकारं हिताशिनः ॥ ९९ ॥
न्यग्रोधोदुम्बराश्वत्थशुङ्गानापोथ्य वासयेत् ।
अहोरात्रं जले तप्ते घृतं तेनाम्भसा पचेत् ॥ १०० ॥
तदर्धशर्करायुक्तं लेहयेत्क्षौद्रपादिकम् ।
अधो वा यदि वाप्यूर्ध्वं यस्य रक्तं प्रवर्तते ॥ १०१ ॥
श्लेष्मातिसारे वातोक्तं विशेषादामपाचनम् ।
कर्तव्यमनुबन्धेऽस्य पिबेत्पक्त्वाऽग्निदीपनम् ॥ १०२ ॥
बिल्वकर्कटिकामुस्तप्राणदाविश्वभेषजम् ।
वचाविडङ्गभूतीकधानकामरदारु वा ॥ १०३ ॥

१ 'शुङ्गाना' इति पाठः.

अथवा पिप्पलीमूलपिप्पलीद्वयचित्रकान् ।
पाठाग्निवत्सकग्रन्थितिक्ताशुण्ठीवचाभयाः ॥ १०४ ॥
क्वथिता यदि वा पिष्टाः श्लेष्मातीसारभेषजम् ।
सौवर्चलवचाव्योषहिङ्गुप्रतिविषाभयाः ॥ १०५ ॥
पिबेच्छ्लेष्मातिसारार्तश्चूर्णिताः कोष्णवारिणा ।
मध्यं लीढ्वा कपित्थस्य सव्योषक्षौद्रशर्करम् ॥ १०६ ॥
कट्फलं मधुयुक्तं वा मुच्यते जठरामयात् ।
कणां मधुयुतां लीढ्वा तक्रं पीत्वा सचित्रकम् ॥ १०७ ॥
भुक्त्वा वा बालबिल्वानि व्यपोहत्युदरामयम् ।
पाठामोचरसाम्भोजधातकीबिल्वनागरम् ॥ १०८ ॥
सुकृच्छ्रमप्यतीसारं गुडतक्रेण नाशयेत् ।
यवानीपिप्पलीमूलचातुर्जातकनागरैः ॥ १०९ ॥
मरिचाग्निजलाजाजीधान्यसौवर्चलैः समैः ।
वृक्षाम्लधातकीकृष्णाबिल्वदाडिमदीप्यकैः ॥ ११० ॥
त्रिगुणैः षड्गुणसितैः कपित्थाष्टगुणैः कृतः ।
चूर्णोऽतिसारग्रहणीक्षयगुल्मोदरामयान् ॥ १११ ॥
कासश्वासाग्निसादार्शःपीनसारोचकाञ्जयेत् ।
कर्षोन्मिता तवक्षीरी चातुर्जातं द्विकार्षिकम् ॥ ११२ ॥
यवानीधान्यकाजाजीग्रन्थिव्योषं पलांशकम् ।
पलानि दाडिमादष्टौ सितायाश्चैकतः कृतः ॥ ११३ ॥
गुणैः कपित्थाष्टकवच्चूर्णोऽयं दाडिमाष्टकः ।

---

१ 'साम्भोद' इति पाठः. २ 'चातुर्जा' इति पाठः.

भोज्यो वातातिसारोक्तैर्यथावस्थं खलादिभिः ॥ ११४ ॥
सविडङ्गः समरिचः सकपित्थः सनागरः ।
चाङ्गेरीतक्रकोलाम्लः खलः श्लेष्मातिसारजित् ॥ ११५ ॥
क्षीणे श्लेष्मणि पूर्वोक्तमम्लं लाक्षादिषट्पलम् ।
पुराणं वा घृतं दद्याद्यवागूमण्डमिश्रितम्[१] ॥ ११६ ॥
वातश्लेष्मविबन्धे च स्रवत्यतिकफेऽपि वा ।
शूले प्रवाहिकायां वा पिच्छाबस्तिः प्रशस्यते ॥ ११७ ॥
वचाबिल्वकणाकुष्ठशताह्वालवणान्वितः ।
बिल्वतैलेन तैलेन वचाद्यैः साधितेन वा ॥ ११८ ॥
बहुशः कफवातार्ते कोष्णेनान्वासनं हितम् ।
क्षीणे कफे गुदे दीर्घकालातीसारदुर्बले ॥ ११९ ॥
अनिलः प्रबलोऽवश्यं स्वस्थानस्थः प्रजायते ।
स बली सहसा हन्यात्तस्मात्तं त्वरया जयेत् ॥ १२० ॥
वायोरनन्तरं पित्तं पित्तस्याऽनन्तरं कफम् ।
जयेत्पूर्वं त्रयाणां वा भवेद्यो बलवत्तमः ॥ १२१ ॥
भीशोकाभ्यामपि चलः शीघ्रं कुप्यत्यतस्तयोः ।
कार्या क्रिया वातहरा हर्षणाश्वासनानि च ॥ १२२ ॥
यस्योच्चाराद्विना मूत्रं पवनो वा प्रवर्तते ।
दीप्ताग्नेर्लघुकोष्ठस्य शान्तस्तस्योदरामयः ॥ १२३ ॥"

---

१ 'यवागूं मण्डमिश्रिताम्' इति पाठः क्वचित्.

## दशमोऽध्यायः ।

अथाऽतो ग्रहणीदोषचिकित्सितं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"ग्रहणीमाश्रितं दोषमजीर्णवदुपाचरेत् ।
अतीसारोक्तविधिना तस्यामं च विपाचयेत् ॥ १ ॥
अन्नकाले यवाग्वादि पञ्चकोलादिभिर्युतम् ।
वितरेत्पटुलघ्वन्नं पुनर्योगांश्च दीपनान् ॥ २ ॥
दद्यात्सातिविषां पेयामामे साम्लां सनागराम् ।
पानेऽतिसारविहितं वारि तक्रं सुरादि च ॥ ३ ॥
ग्रहणीदोषिणां तक्रं दीपनग्राहिलाघवात्[१] ।
पथ्यं मधुरपाकित्वान्न च पित्तप्रदूषणम् ॥ ४ ॥
कषायोष्णविकाशित्वाद्रूक्षत्वाच्च कफे हितम् ।
वाते स्वाद्वम्लसान्द्रत्वात्सद्यस्कमविदाहि तत् ॥ ५ ॥
चतुर्णां प्रस्थमम्लानां त्र्यूषणाच्च पलत्रयम् ।
लवणानां च चत्वारि शर्करायाः पलाष्टकम् ॥ ६ ॥
तच्चूर्णं शाकसूपान्नरागादिष्ववचारयेत् ।
कासाजीर्णारुचिश्वासहृत्पार्श्वामयशूलनुत् ॥ ७ ॥
नागरातिविषामुस्तं पाक्यमामहरं पिबेत् ।
उष्णाम्बुना वा तत्कल्कं नागरं वाऽथवाऽभयाम् ॥ ८ ॥
ससैन्धवं वचादिं वा तद्वन्मदिरयाऽथवा ।
वर्चस्यामे सप्रवाहे पिबेद्वा दाडिमाम्बुना ॥ ९ ॥

---

१ 'ग्राहि लाघवात्' इति क्वचित्.

बिडेन लवणं पिष्टं बिल्वचित्रकनागरम् ।
सामे कफानिले कोष्ठरुक्करे कोष्णवारिणा ॥ १० ॥
कलिङ्गहिङ्ग्वतिविषावचासौवर्चलाभयम् ।
छर्दिहृद्रोगशूलेषु पेयमुष्णेन वारिणा ॥ ११ ॥
पथ्यासौवर्चलाजाजीचूर्णं मरिचसंयुतम् ।
पिप्पलीं नागरं पाठां सारिवां बृहतीद्वयम् ॥ १२ ॥
चित्रकं कौटजं क्षारं तथा लवणपञ्चकम् ।
चूर्णीकृतं दधिसुरातन्मण्डोष्णाम्बुकाञ्जिकैः ॥ १३ ॥
पिबेदग्निविवृद्ध्यर्थं कोष्ठवातहरं परम् ।
पटूनि पञ्च द्वौ क्षारौ मरिचं पञ्चकोलकम् ॥ १४ ॥
दीप्यकं हिङ्गु गुलिका बीजपूररसे कृता ।
कोलदाडिमतोये वा परं पाचनदीपनी ॥ १५ ॥
तालीसपत्रचविकामरिचानां पलं पलम् ।
कृष्णा तन्मूलयोर्द्वे द्वे पले शुण्ठीपलत्रयम् ॥ १६ ॥
चतुर्जातमुशीरं च कर्षांशं श्लक्ष्णचूर्णितम् ।
गुडेन वटकान्कृत्वा त्रिगुणेन सदा भजेत् ॥ १७ ॥
मद्ययूषरसारिष्टमस्तुपेयापयोऽनुपः ।
वातश्लेष्मात्मनां छर्दिग्रहणीपार्श्वहृद्रुजाम् ॥ १८ ॥
ज्वरश्वयथुपाण्डुत्वगुल्मपानात्ययार्शसाम् ।
प्रसेकपीनसश्वासकासानां च निवृत्तये ॥ १९ ॥
अभयां नागरस्थाने दद्यात्तत्रैव विड्ग्रहे ।
छर्द्यादिषु च पैत्तेषु चतुर्गुणसितान्विताः ॥ २० ॥

पक्केन वटकाः कार्या गुडेन सितयाऽपि वा ।
परं हि वह्निसम्पर्काल्लघिमानं भजन्ति ते ॥ २१ ॥
अथैनं परिपक्वाममारुतग्रहणीगदम् ।
दीपनीययुतं सर्पिः पाययेदल्पशो भिषक् ॥ २२ ॥
किंचित्सन्धुक्षिते त्वग्नौ सक्तविण्मूत्रमारुतम् ।
द्र्यहं त्र्यहं वा संस्नेह्य स्विन्नाभ्यक्तं निरूहयेत् ॥ २३ ॥
तत एरण्डतैलेन सर्पिषा तैल्वकेन वा ।
सक्षारेणाऽनिले शान्ते स्रस्तदोषं विरेचयेत् ॥ २४ ॥
शुद्धरूक्षाशयं बद्धवर्चस्कं चाऽनुवासयेत् ।
दीपनीयाम्लवातघ्नसिद्धतैलेन तं ततः ॥ २५ ॥
निरूढं च विरिक्तं च सम्यक्चाऽप्यनुवासितम् ।
लघ्वन्नप्रतिसंयुक्तं सर्पिरभ्यासयेत्पुनः ॥ २६ ॥
पञ्चमूलाभयाव्योषपिप्पलीमूलसैन्धवैः ।
रास्नाक्षारद्वयाजाजीविडङ्गशटिभिर्घृतम् ॥ २७ ॥
शुक्तेन मातुलुङ्गस्य स्वरसेनार्द्रकस्य वा ।
शुष्कमूलककोलाम्लचुक्रीकादाडिमस्य च ॥ २८ ॥
तक्रमस्तुसुरामण्डसौवीरकतुषोदकैः ।
काञ्जिकेन च तत्पक्कमग्निदीप्तिकरं परम् ॥ २९ ॥
शूलगुल्मोदरश्वासकासानिलकफापहम् ।
सबीजपूरकरसं सिद्धं वा पाययेद्धृतम् ॥ ३० ॥

---

१ 'स्त्रा क्षीरद्व' इति क्वचित्. २ 'शुक्तेन' इति पाठः. ३ 'पूरकरसे' इति पाठः.

तैलमभ्यञ्जनार्थं च सिद्धमेभिश्चलापहम् ।
एतेषामौषधानां वा पिबेच्चूर्णं सुखाम्बुना ॥ ३१ ॥
वातश्लेष्मावृते सामे कफे वा वायुनोद्धते ।
अग्नेर्निर्वापकं पित्तं रेकेण वमनेन वा ॥ ३२ ॥
हृत्वा तिक्तलघुग्राहिदीपनैरविदाहिभिः ।
अन्नैः[१] सन्धुक्षयेदग्निं चूर्णैः स्नेहैश्च तिक्तकैः ॥ ३३ ॥
पटोलनिम्बत्रायन्तीतिक्तातिक्तकपर्पटम् ।
कुटजत्वक्फलं मूर्वां मधुशिग्रुफलं वचा ॥ ३४ ॥
दार्वित्वक्पद्मकोशीरयवानीमुस्तचन्दनम् ।
सौराष्ट्र्यतिविषाव्योषत्वगेलापत्रदारु च ॥ ३५ ॥
चूर्णितं मधुना लेह्यं पेयं मद्यैर्जलेन वा ।
हृत्पाण्डुग्रहणीरोगगुल्मशूलारुचिज्वरान् ॥ ३६ ॥
कामलां सन्निपातं च मुखरोगांश्च नाशयेत् ।
भूनिम्बकटुकामुस्तात्र्यूषणेन्द्रयवान् समान् ॥ ३७ ॥
द्वौ चित्रकाद्वत्सकत्वग्भागान् षोडश चूर्णयेत् ।
गुडशीताम्बुना पीतं ग्रहणीदोषगुल्मनुत् ॥ ३८ ॥
कामलाज्वरपाण्डुत्वमेहारुच्यतिसारजित् ।
नागरातिविषामुस्तापाठाबिल्वं रसाञ्जनम् ॥ ३९ ॥
कुटजत्वक्फलं तिक्ता धातकी च कृतं रजः ।
क्षौद्रतण्डुलवारिभ्यां पैत्तिके ग्रहणीगदे ॥ ४० ॥
प्रवाहिकार्शोगुदरुक्प्रकोपस्थानेषु चेष्यते ।

१ 'अम्लैः स' इति अरुणः.

चन्दनं पद्मकोशीरं पाठां मूर्वां कुटन्नटम् ॥ ४१ ॥
षड्ग्रन्थासारिवाऽऽस्फोतासप्तपर्णाटरूषकान्।
पटोलोदुम्बराश्वत्थवटप्लक्षकपीतनम् ॥ ४२ ॥
कटुकां रोहिणीं मुस्तां निम्बं च द्विपलांशकान्।
द्रोणेऽपां साधयेत्तेन पचेत्सर्पिः पिचून्मितैः ॥ ४३ ॥
किराततिक्तेन्द्रयववीरामागधिकोत्पलैः।
पित्तग्रहण्यां तत्पेयं कुष्ठोक्तं तिक्तकं च यत् ॥ ४४ ॥
ग्रहण्यां श्लेष्मदुष्टायां तीक्ष्णैः प्रच्छर्दने कृते।
कट्वम्ललवणक्षारैः क्रमादग्निं विवर्धयेत् ॥ ४५ ॥
पञ्चकोलाभयाधान्यपाठागन्धपलाशकैः।
बीजपूरप्रवालैश्च सिद्धैः पेयादि कल्पयेत् ॥ ४६ ॥
द्रोणं मधूकपुष्पाणां विडङ्गं च ततोऽर्धतः।
चित्रकस्य ततोऽर्धं च तथा भल्लातकाढकम् ॥ ४७ ॥
मञ्जिष्ठाऽष्टपलं चैतज्जलद्रोणत्रये पचेत्।
द्रोणशेषं स्रुतं शीतं मध्वर्धाढकसंयुतम् ॥ ४८ ॥
एलामृणालागुरुभिश्चन्दनेन च रूपिते[1]।
कुम्भे मासं स्थितं जातमासवं तं प्रयोजयेत् ॥ ४९ ॥
ग्रहणीं दीपयत्येष बृंहणः पित्तरक्तनुत्।
शोषकुष्ठकिलासानां प्रमेहाणां च नाशनः ॥ ५० ॥
मधूकपुष्पस्वरसं[2] शृतमर्धक्षयीकृतम्।
क्षौद्रपादयुतं शीतं पूर्ववत्सन्निधापयेत् ॥ ५१ ॥

१ 'रूक्षिते' इति पाठः. २ 'कुडवं' इति पाठः.

सत्पिबन् ग्रहणीदोषान् जयेत्सर्वान् हिताशनः ।
तद्वद्द्राक्षेक्षुखर्जूरस्वरसानासुतान् पिबेत् ॥ ५२ ॥
हिङ्गुतिक्तावचामाद्रीपाटेन्द्रयवगोक्षुरम् ।
पञ्चकोलं च कर्षांशं पलांशं पटुपञ्चकम् ॥ ५३ ॥
घृततैलद्विकुडवे दध्नः प्रस्थद्वये च तत् ।
आपोथ्य क्वाथयेदग्नौ मृदावनुगते रसे ॥ ५४ ॥
अन्तर्धूमं ततो दग्ध्वा चूर्णीकृत्य घृताप्लुतम् ।
पिबेत्पाणितलं तस्मिन् जीर्णे स्यान्मधुराशनः ॥ ५५ ॥
वातश्लेष्मामयान् सर्वान् हन्याद्विषगरांश्च सः ।
भूनिम्बं रोहिणीं तिक्तां पटोलं निम्बपर्पटम् ॥ ५६ ॥
दग्ध्वा माहिषमूत्रेण पिबेदग्निविवर्धनम् ।
द्वे हरिद्रे वचा कुष्ठं चित्रकः कटुरोहिणी ॥ ५७ ॥
मुस्ता च छागमूत्रेण सिद्धः क्षारोऽग्निवर्धनः ।
चतुःपलं सुधाकाण्डात्त्रिपलं लवणत्रयात् ॥ ५८ ॥
वार्ताककुडवं चार्कादष्टौ द्वे चित्रकात्पले ।
दग्ध्वा रसेन वार्ताकाद्गुटिका भोजनोत्तराः ॥ ५९ ॥
भुक्तमन्नं पचन्त्याशु कासश्वासार्शसां हिताः ।
विषूचिकाप्रतिश्यायहृद्रोगशमनाश्च ताः ॥ ६० ॥
मातुलुङ्गशठीरास्नाकटुत्रयहरीतकीः ।
स्वर्जिकायावशूकाख्यौ क्षारौ पञ्चपटूनि च ॥ ६१ ॥
सुखाम्बुपीतं तच्चूर्णं बलवर्णाग्निवर्धनम् ।

श्लैष्मिके ग्रहणीदोषे सवाते तैर्घृतं पचेत् ॥ ६२ ॥
धान्वन्तरं षट्पलं च भल्लातकघृताभयम्।
विडकाचोषलवणस्वर्जिकायावशूकजान् ॥ ६३ ॥
सप्तलां कण्टकारीं च चित्रकं चैकतो दहेत्।
सप्तकृत्वः स्रुतस्याऽस्य क्षारस्याऽर्धाढके पचेत् ॥ ६४ ॥
आढकं सर्पिषः पेयं तदग्निबलवृद्धये।
निचये पञ्चकर्माणि युञ्ज्याच्चैतद्यथाबलम् ॥ ६५ ॥
प्रसेके श्लैष्मिकेऽल्पाग्नेर्दीपनं रूक्षतिक्तकम्।
योज्यं कृशस्य, व्यत्यासात्स्निग्धरूक्षं कफोदये ॥ ६६ ॥
क्षीणक्षामशरीरस्य दीपनं स्नेहसंयुतम्।
दीपनं बहुपित्तस्य तिक्तं मधुरकैर्युतम् ॥ ६७ ॥
स्नेहोऽम्ललवणैर्युक्तो बहुवातस्य शस्यते।
स्नेहमेव परं विद्याद्दुर्बलानलदीपनम् ॥ ६८ ॥
नालं स्नेहसमिद्धस्य शमायान्नं सुगुर्वपि।
योऽल्पाग्नित्वात्कफे क्षीणे वर्चः पक्वमपि श्लथम् ॥ ६९ ॥
मुञ्चेद्दीपनयुतं स पिबेदल्पशो घृतम्।
तेन स्वमार्गमानीतः स्वकर्मणि नियोजितः ॥ ७० ॥
समानो दीपयत्यग्निमग्नेः सन्धुक्षको हि सः।
पुरीषं यश्च कृच्छ्रेण कठिनत्वाद्विमुञ्चति ॥ ७१ ॥
स घृतं लवणैर्युक्तं नरोऽन्नावग्रहं पिबेत्।
रौक्ष्यान्मन्देऽनले सर्पिस्तैलं वा दीपनैः पिबेत् ॥ ७२ ॥

क्षारचूर्णासवारिष्टान् मन्दे स्नेहातिपानतः ।
उदावर्तात्प्रयोक्तव्या निरूहस्नेहवस्तयः ॥ ७३ ॥
दोषाऽतिवृद्ध्याऽमन्देऽग्नौ संशुद्धोऽन्नविधिं चरेत् ।
व्याधिमुक्तस्य मन्देऽग्नौ सर्पिरेव तु दीपनम् ॥ ७४ ॥
अध्वोपवासक्षामत्वैर्यवाग्वा पाययेद् घृतम् ।
अन्नावपीडितं बल्यं दीपनं बृंहणं च तत् ॥ ७५ ॥
दीर्घकालप्रसङ्गात्तु क्षामक्षीणकृशान्नरान् ।
प्रसहानां रसैः साम्लैर्भोजयेत्पिशिताशिनाम् ॥ ७६ ॥
लघूष्णकटुशोधित्वाद् दीपयन्त्याशु तेऽनलम् ।
मांसोपचितमांसत्वात्परं च बलवर्धनम् ॥ ७७ ॥
स्नेहासवसुरारिष्टचूर्णक्वाथहिताशनैः ।
सम्यक् प्रयुक्तैर्देहस्य बलमग्नेश्च वर्धते ॥ ७८ ॥
दीप्तो यथैव स्थाणुश्च बाह्योऽग्निः सारदारुभिः ।
सस्नेहैर्जायते तद्वदाहारैः कोष्ठगोऽनलः ॥ ७९ ॥
नाऽभोजनेन[1] कायाग्निर्दीप्यते नाऽतिभोजनात् ।
यथा निरिन्धनो वह्निरल्पो वाऽतीन्धनावृतः[2] ॥ ८० ॥
यदा क्षीणे कफे पित्तं स्वस्थाने पवनानुगम् ।
प्रवृद्धं वर्धयत्यग्निं तदाऽसौ सानिलोऽनलः ॥ ८१ ॥
पक्त्वान्नमाशु धातूंश्च सर्वानोजश्च संक्षिपन् ।
मारयेत्स्यादनात्स्वस्थो भुक्ते जीर्णे तु ताम्यति ॥ ८२ ॥
तृट्कासदाहमूर्च्छाद्या व्याधयोऽत्यग्निसम्भवाः ।

---

१ 'न भोजनेन' इत्यरुणः. २ 'नान्वितः' इति पाठः.

तमत्यग्निं गुरुस्निग्धमन्दसान्द्रहिमस्थिरैः ॥ ८३ ॥
अन्नपानैर्नयेच्छान्तिं दीप्तमग्निमिवाम्बुभिः।
मुहुर्मुहुरजीर्णेऽपि भोज्यान्यस्योपहारयेत् ॥ ८४ ॥
निरिन्धनोऽन्तरं लब्ध्वा यथैनं न विपादयेत्।
कृशरां पायसं स्निग्धं पैष्टिकं गुडवैकृतम् ॥ ८५ ॥
अश्नीयादौदकानूपपिशितानि भृतानि[1] च।
मत्स्यान्विशेषतः श्लक्ष्णान् स्थिरतोयचरांश्च ये ॥ ८६ ॥
आविकं सुभृतं मांसमद्यादत्यग्निवारणम्।
पयः सहमधूच्छिष्टं घृतं वा तृषितः पिबेत् ॥ ८७ ॥
गोधूमचूर्णं पयसा बहुसर्पिःपरिप्लुतम्।
आनूपरसयुक्तान्वा स्नेहांस्तैलविवर्जितान् ॥ ८८ ॥
श्यामात्रिवृद्विपक्वं वा पयो दद्याद्विरेचनम्।
असकृत्पित्तहरणं पायसं प्रतिभोजनम् ॥ ८९ ॥
यत्किञ्चिद्गुरु मेध्यं च श्लेष्मकारि च भोजनम्।
सर्वं तदत्यग्निहितं भुक्त्वा च स्वपनं दिवा ॥ ९० ॥
आहारमग्निः पचति, दोषानाहारवर्जितः, ।
धातून् क्षीणेषु दोषेषु, जीवितं धातुसङ्क्षये ॥ ९१ ॥

एतत्प्रकृत्यैव विरुद्धमन्नं
संयोगसंस्कारवशेन चेदम्।
इत्याद्यविज्ञाय यथेष्टचेष्टा-
श्चरन्ति यत्साऽग्निबलस्य शक्तिः ॥ ९२ ॥

---

१ 'घृतानि' इति पाठः क्वचित्.

तस्मादग्निं पालयेत्सर्वयत्नै-
स्तस्मिन्नष्टे याति ना नाशमेव ।
दोषैर्ग्रस्ते ग्रस्यते रोगसङ्घै-
र्युक्ते तु स्यान्नीरुजो दीर्घजीवी ॥ ९३ ॥"

---

## एकादशोऽध्यायः ।

अथाऽतो मूत्राघातचिकित्सितं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"कृच्छ्रे वातघ्नतैलाक्तमधो नाभेः समीरजे ।
सुस्निग्धैः स्वेदयेदङ्ग पिण्डसेकावगाहनैः ॥ १ ॥
दशमूलबलैरण्डयवाभीरुपुनर्नवैः ।
कुलत्थकोलपत्तूरवृश्चीवोपलभेदकैः ॥ २ ॥
तैलसर्पिर्वराहर्क्षवसाः क्वथितकल्कितैः ।
सपञ्चलवणाः सिद्धाः पीताः शूलहराः परम् ॥ ३ ॥
द्रव्याण्येतानि पानान्ने तथा पिण्डोपनाहने ।
सहतैलफलैर्युञ्ज्यात् साम्लानि स्नेहवन्ति च ॥ ४ ॥
सौवर्चलाढ्यां मदिरां पिबेन्मूत्ररुजापहाम् ।
पैत्ते युञ्जीत शिशिरं सेकलेपावगाहनम् ॥ ५ ॥
पिबेद्वरीं गोक्षुरकं विदारीं सकसेरुकाम् ।
तृणाख्यं पञ्चमूलं च पाक्यं समधुशर्करम् ॥ ६ ॥
वृषकं त्रपुसैर्वारु लट्वाबीजानि कुङ्कुमम् ।

द्राक्षाम्भोभिः पि[1]बन् सर्वान् मूत्राघातानपोहति ॥ ७ ॥
एर्वारुबीजयष्ट्याह्वदार्वीर्वा तण्डुलाम्बुना।
तोयेन कल्कं द्राक्षायाः पिबेत्पर्युषितेन वा ॥ ८ ॥
कफजे वमनं स्वेदं तीक्ष्णोष्णकटुभोजनम्।
यवानां विकृतीः क्षारं कालशेयं च शीलयेत् ॥ ९ ॥
पिबेन्मद्येन सूक्ष्मैलां धात्रीफलरसेन वा।
सारसास्थिश्वदंष्ट्रैलाव्योषं वा मधुमूत्रवत् ॥ १० ॥
स्वरसं कण्टकार्या वा पाययेन्माक्षिकान्वितम्।
शितिवारकबीजं वा तक्रेण श्लक्ष्णचूर्णितम् ॥ ११ ॥
धवसप्ताह्वकुटजं गुडूचीचतुरङ्गुलम्।
कटुकैलाकरञ्जं च पाक्यं समधुसाधितम् ॥ १२ ॥
तैर्वा पेयां प्रवालं वा चूर्णितं तण्डुलाम्बुना।
सतैलं पाटलाक्षारं सप्तकृत्वोऽथवा स्रु[2]तम् ॥ १३ ॥
पाटलीयावशूकाभ्यां पारिभद्रतिलादपि।
क्षारोदकेन मदिरां त्वगेलोषकसंयुताम् ॥ १४ ॥
पिबेद्गुडोपदंशान्वा लिह्यादेतान् पृथक् पृथक्।
सन्निपातात्मके सर्वं यथावस्थमिदं हितम् ॥ १५ ॥
अश्मन्यथ चिरोत्थाने वातबस्त्यादिकेषु च।
अश्मरी दारुणो व्याधिरन्तकप्रतिमो मतः ॥ १६ ॥

---

१ 'पिबेत् स' इति पाठः. २ 'श्रृतम्' इति पाठः. 'भद्रास्तिला', 'भद्रातिला' इति पाठौ.

तरुणो भेषजैः साध्यः, प्रवृद्धश्छेदमर्हति ।
तस्य पूर्वेषु रूपेषु स्नेहादिक्रम इष्यते ॥ १७ ॥
पाषाणभेदो वसुको वशिरोऽश्मन्तको वरी ।
कपोतवंकातिबलाभल्लूकोशीरकन्तकम् ॥ १८ ॥
वृक्षादनी शाकफलं व्याघ्री गुण्ठत्रिकण्टकम्[1] ।
यवाः कुलत्थाः कोलानि वरुणः कतकात्फलम् ॥ १९ ॥
ऊषकादिप्रतीवापमेषां क्वाथे शृतं घृतम् ।
भिनत्ति वातसम्भूतां तत्पीतं शीघ्रमश्मरीम् ॥ २० ॥
गन्धर्वहस्तबृहतीव्याघ्रीगोक्षुरकेक्षुरात् ।
मूलकल्कं पिबेद्दध्ना मधुरेणाऽश्मभेदनम् ॥ २१ ॥
कुशः काशः शरो गुण्ठ इत्कटो मोरटोऽश्मभित् ।
दर्भो विदारी वाराही शालिमूलं त्रिकण्टका ॥ २२ ॥
भल्लूकः पाटली पाठा पत्तूरः सकुरण्टकः ।
पुनर्नवा शिरीषश्च तेषां क्वाथे पचेद्घृतम् ॥ २३ ॥
पिष्टेन त्रपुसादीनां बीजेनैन्दीवरेण वा ।
मधुकेन शिलाजेन तत्पित्ताश्मरिभेदनम् ॥ २४ ॥
वरुणादिसमीरघ्नौ गणावेला हरेणुका ।
गुग्गुलुर्मरिचं कुष्ठं चित्रकः ससुराह्वयः ॥ २५ ॥
तैः कल्कितैः कृतावापमूषकादिगणेन च ।
भिनत्ति कफजामाशु साधितं घृतमश्मरीम् ॥ २६ ॥
क्षारक्षीरयवाग्वादि द्रव्यैः स्वैः स्वैश्च कल्पयेत् ।

---

१ 'त्रिकण्टकम्' इति पाठः.

पिचुकाङ्कोल्लकतकशाकेन्दीवरजैः फलैः ॥ २७ ॥
पीतमुष्णाम्बु सगुडं शर्करापातनं परम्।
क्रौञ्चोष्ट्ररासभास्थीनि श्वदंष्ट्रा तालपत्रिका ॥ २८ ॥
अजमोदा कदम्बस्य मूलं बिल्वस्य चौषधम्।
पीतानि शर्करा भिद्युः सुरयोष्णोदकेन वा ॥ २९ ॥
नृत्यकुण्डलबीजानां चूर्णं माक्षिकसंयुतम्।
अविक्षीरेण सप्ताहं पीतमश्मरिपातनम् ॥ ३० ॥
क्वाथश्च शिग्रुमूलोत्थः कदूष्णोऽश्मरिपातनः।
तिलापामार्गकदलीपलाशयवसम्भवः ॥ ३१ ॥
क्षारः पेयोऽविमूत्रेण शर्करास्वश्मरीषु च।
कपोतवङ्कामूलं वा पिबेदेकं सुरादिभिः ॥ ३२ ॥
तत्सिद्धं वा पिबेत्क्षीरं वेदनाभिरुपद्रुतः।
हरीतक्यस्थिसिद्धं वा साधितं वा पुनर्नवैः ॥ ३३ ॥
क्षीरान्नभुक् बर्हिशिखामूलं वा तण्डुलाम्बुना।
मूत्राघातेषु विभजेदतः शेषेष्वपि क्रियाम् ॥ ३४ ॥
बृहत्यादिगणे सिद्धं द्विगुणीकृतगोक्षुरे।
तोयं पयो वा सर्पिर्वा सर्वमूत्रविकारजित् ॥ ३५ ॥
देवदारुं घनं मूर्वां यष्टीमधु हरीतकीम्।

---

१ 'मृङ्ककण्टकबीजानां चूर्ण'मिति सङ्ग्रहे पाठः. सुश्रुतस्तु—'त्रिकण्टकस्य बीजानां चूर्णं माक्षिकसंयुतम्। अविक्षीरेण सप्ताहमश्मरीभेदनं पर'मिति पठति। २ 'यष्टीं मधु' इति क्वचित्.

मूत्राघातेषु सर्वेषु सुराक्षीरजलैः पिबेत् ॥ ३६ ॥
रसं वा धन्वयासस्य कषायं ककुभस्य वा ।
सुखाम्भसा वा त्रिफलां पिष्टां सैन्धवसंयुताम् ॥ ३७ ॥
व्याघ्रीगोक्षुरकक्काथे यवागूं वा सफाणिताम् ।
क्काथे वीरतरादेर्वा ताम्रचूडरसेऽपि वा ॥ ३८ ॥
अधाद्वीरतराद्येन भावितं वा शिलाजतु ।
मद्यं वा निगदं पीत्वा रथेनाश्वेन वा व्रजेत्[1] ॥ ३९ ॥
शीघ्रवेगेन, सङ्क्षोभात्तथाऽस्य च्यवतेऽश्मरी ।
सर्वथा चोपयोक्तव्यो वर्गो वीरतरादिकः ॥ ४० ॥
रेकार्थं तैल्वकं सर्पिर्बस्तिकर्म च शीलयेत् ।
विशेषादुत्तरान् बस्तीन्

शुक्राश्मर्यां च शोधिते ॥ ४१ ॥
तैर्मूत्रमार्गे बलवान् शुक्राशयविशुद्धये ।
पुमान् सुतृप्तो वृष्याणां मांसानां कुक्कुटस्य च ॥ ४२ ॥
कामं सकामाः सेवेत प्रमदा मददायिनीः ।
सिद्धैरुपक्रमैरेभिर्न चेच्छान्तिस्तदा भिषक् ॥ ४३ ॥
इति राजानमापृच्छ्य शस्त्रं साध्ववचारयेत् ।
अक्रियायां ध्रुवो मृत्युः, क्रियायां संशयो भवेत् ॥ ४४ ॥
निश्चितस्याऽपि वैद्यस्य बहुशः सिद्धकर्मणः ।
अथाऽऽतुरमुपस्निग्धं शुद्धमीषच्च कर्शितम् ॥ ४५ ॥
अभ्यक्तस्विन्नवपुषमभुक्तं कृतमङ्गलम् ।

---

१ 'व्रजन्' इति पाठः.

आजानुफलकस्थस्य नरस्याङ्के व्यपाश्रितम् ॥ ४६ ॥
पूर्वेण कायेनोत्तानं निषण्णं वस्त्रकुम्भले।
ततोऽस्याकुञ्चिते जानुकूर्परे वाससा दृढम् ॥ ४७ ॥
सहाश्रयमनुष्येण बद्धस्याश्वासितस्य च।
नाभेः समन्तादभ्यज्यादधस्तस्याश्च वामतः ॥ ४८ ॥
मृदित्वा मुष्टिनाऽऽक्रामेत्[1] यावदश्मर्यधोगता।
तैलाक्ते वर्धितनखे तर्जनीमध्यमे ततः ॥ ४९ ॥
अदक्षिणे गुदेऽङ्गुल्यौ प्रणिधायाऽनुसेवनीम्।
आसाद्य वलयं ताभ्यामश्मरीं गुदमेढ्रयोः ॥ ५० ॥
कृत्वान्तरे तथा बस्तिं निर्वलीकमनायतम्।
उत्पीडयेदङ्गुलिभ्यां यावद्ग्रन्थिरिवोन्नतम् ॥ ५१ ॥
शल्यं स्यात्सेवनीं मुक्त्वा यवमात्रेण पाटयेत्।
अश्ममानेन, न यथा भिद्यते सा तथा हरेत् ॥ ५२ ॥
समग्रं सर्पवक्त्रेण, स्त्रीणां बस्तिस्तु पार्श्वगः।
गर्भाशयाश्रयस्तासां शस्त्रमुत्सङ्गवत्ततः ॥ ५३ ॥
न्यसेत्ततोऽन्यथा ह्यासां मूत्रस्रावी व्रणो भवेत्।
मूत्रप्रसेकक्षरणान्नरस्याऽप्यपि चैकधा ॥ ५४ ॥
बस्तिभेदोऽश्मरीहेतुः सिद्धिं याति न तु द्विधा।
विशल्यमुष्णपानीयद्रोण्यां तमवगाहयेत् ॥ ५५ ॥
तथा न पूर्यतेऽस्रेण बस्तिः पूर्णे तु पीडयेत्।

---

१ 'ना कामं या' इति पाठः.

मेढ्रान्तः क्षीरिवृक्षाम्बु
मूत्रसंशुद्धये ततः ॥ ५६ ॥
कुर्याद्गुडस्य सौहित्यं मध्वाज्याक्तव्रणः पिबेत् ।
द्वौ कालौ सघृतां कोष्णां यवागूं मूत्रशोधनैः ॥ ५७ ॥
त्र्यहं दशाहं पयसा गुडाढ्येनाऽल्पमोदनम् ।
भुञ्जीतोर्ध्वं फलाम्लैश्च रसैर्जाङ्गलचारिणाम् ॥ ५८ ॥
क्षीरिवृक्षकषायेण व्रणं प्रक्षाल्य, लेपयेत् ।
प्रपौण्डरीकमञ्जिष्ठायष्ट्याह्वनयनौषधैः ॥ ५९ ॥
व्रणाभ्यङ्गे पचेत्तैलमेभिरेव निशान्वितैः ।
दशाहं स्वेदयेच्चैनं स्वमार्गं सप्तरात्रतः ॥ ६० ॥
मूत्रे स्वगच्छति दहेदश्मरीव्रणमग्निना ।
स्वमार्गप्रतिपत्तौ तु स्वादुप्रायैरुपाचरेत् ॥ ६१ ॥
तं बस्तिभिः
न चारोहेद्वर्षं रूढव्रणोऽपि सः ।
नगनागाश्ववृक्षस्त्रीरथान्, नाप्सु प्लवेत सः ॥ ६२ ॥
मूत्रशुक्रवहौ बस्तिवृषणौ सेवनीं गुदम् ।
मूत्रप्रसेकं योनिं च शस्त्रेणाऽष्टौ विवर्जयेत् ॥ ६३ ॥"

---

## द्वादशोऽध्यायः ।

अथाऽतः प्रमेहचिकित्सितं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"मेहिनो बलिनः कुर्यादादौ वमनरेचने ।

स्निग्धस्य सर्षपारिष्टकुसुम्भाक्षकरञ्जकैः ॥ १ ॥
तैलैस्त्रिकण्टकाद्येन यथास्वं साधितेन वा ।
स्नेहेन मुस्तदेवाह्वनागरप्रतिवापवत् ॥ २ ॥
सुरसादिकषायेण दद्यादास्थापनं ततः ।
न्यग्रोधादेस्तु पित्तार्तं रसैः शुद्धं च तर्पयेत् ॥ ३ ॥
मूत्रग्रहरुजागुल्मक्षयाद्यास्त्वपतर्पणात् ।
ततोऽनुबन्धरक्षार्थं शमनानि प्रयोजयेत् ॥ ४ ॥
असंशोध्यस्य तान्येव सर्वमेहेषु पाययेत् ।
धात्रीरसप्लुतां प्राह्णे हरिद्रां माक्षिकान्विताम् ॥ ५ ॥
दार्वीसुराह्वत्रिफला मुस्ता वा क्वथिता जले ।
चित्रकत्रिफलादार्वीकलिङ्गान् वा समाक्षिकान् ।
मधुयुक्तं गुडूच्या वा रसमामलकस्य वा ॥ ६ ॥

रोध्राभयातोयदकट्फलानां
पाठाविडङ्गार्जुनधान्यकानाम् ।
गायत्रिदार्वीकृमिहृद्वचानां
कफे त्रयः क्षौद्रयुताः कषायाः ॥ ७ ॥

---

१ अत्र 'निकुम्भाक्षकरञ्जकैः' इति पाठः पठ्यतेऽखिलपुस्तकेषु, परंत्वत्र यत्स्पर्शोऽपि स्फोटाद्युत्पादकः अत एवोपविषसदृक्षु यस्यान्तःशीलनं च जेपालबीजगुणं, यश्चोदरे तीक्ष्णविरेकार्थमुपयुज्यते, तस्य निकुम्भस्य स्नेहन न केवलं विचारासहं किंत्वनिष्टकृदिति सुश्रुतसंमतमेव कुसुम्भतैलं प्रमेहे स्नेहनं युक्तमिति तदत्र गृह्यते.

उशीररोध्रार्जुनचन्दनानां
पटोलनिम्बामलकामृतानाम् ।
रोध्राम्बुकालीयकधातकीनां
पित्ते त्रयः क्षौद्रयुताः कषायाः ॥ ८ ॥
यथास्वमेभिः पानान्नं यवगोधूमभावनाम्[1] ।
वातोल्बणेषु स्नेहांश्च प्रमेहेषु प्रकल्पयेत् ॥ ९ ॥
अपूपसक्तुवाट्यादिर्यवानां विकृतिर्हिता ।
गवाश्वगुदमुक्तानामथवा वेणुजन्मनाम् ॥ १० ॥
तृणधान्यानि मुद्गाद्याः शालिजीर्णः सषष्टिकः ।
श्रीकुक्कुटोऽम्लः खलकस्तिलसर्षपकिट्टजः ॥ ११ ॥
कपित्थं तिन्दुकं जम्बुस्तत्कृता रागखाण्डवाः ।
तिक्तं शाकं मधु श्रेष्ठा भक्ष्याः शुष्काः ससक्तवः ॥ १२ ॥
धन्वमांसानि शूल्यानि परिशुष्काण्ययस्कृतिः ।
मध्वरिष्टासवा जीर्णाः सीधुः पक्करसोद्भवः ॥ १३ ॥
तथाऽसनादिसाराम्बु दर्भाम्भो माक्षिकोदकम् ।
वासितेषु वराक्काथे शर्वरीं शोषितेष्वहः ॥ १४ ॥
यवेषु सुकृतान्सक्तून् सक्षौद्रान् सीधुना पिबेत् ।
शालसप्ताह्वकम्पिल्लवृक्षकाक्षकपित्थजम् ॥ १५ ॥
रौहीतकं च कुसुमं मधुनाऽद्यात्सुचूर्णितम् ।
कफपित्तप्रमेहेषु पिबेद्धात्रीरसेन वा ॥ १६ ॥
त्रिकण्टकनिशारोध्रसोमवल्कवचार्जुनैः ।

---

१ 'भावनाः' इति पाठः.

पद्मकाश्मन्तकारिष्टचन्दनागुरुदीप्यकैः ॥ १७ ॥
पटोलमुस्तमञ्जिष्ठामाद्रीभल्लातकैः पचेत् ।
तैलं वातकफे पित्ते घृतं, मिश्रेषु मिश्रकम् ॥ १८ ॥
दशमूलं शटीं दन्तीं सुराह्वं द्विपुनर्नवम् ।
मूलं स्नुगर्कयोः पथ्यां भूकदम्बमरुष्करम् ॥ १९ ॥
करञ्जवरुणात्मूलं पिप्पल्याः पौष्करं च यत् ।
पृथग् दशपलं प्रस्थान् यवकोलकुलत्थतः ॥ २० ॥
त्रींश्चाष्टगुणिते तोये विपचेत्पादवर्तिना ।
तेन द्विपिप्पलीचव्यवचानिचुलरोहिषैः ॥ २१ ॥
त्रिवृद्विडङ्गकम्पिल्लभार्ङ्गीबिल्वैश्च साधयेत् ।
प्रस्थं घृताज्जयेत्सर्वांस्तन्मेहान् पिटिका विषम् ॥ २२ ॥
पाण्डुविद्रधिगुल्मार्शःशोफशोषगरोदरम् ।
श्वासं कासं वमिं वृद्धिं प्लीहानं वातशोणितम् ॥ २३ ॥
कुष्ठोन्मादावपस्मारं धान्वन्तरमिदं घृतम् ।
रोध्रमूर्वाशठीवेल्लभार्ङ्गीनतनखप्लवान् ॥ २४ ॥
कलिङ्गकुष्ठक्रमुकप्रियङ्ग्वतिविषाग्निकान् ।
द्वे विशाले चतुर्जातं भूनिम्बं कटुरोहिणीम् ॥ २५ ॥
यवानीं पौष्करं पाठां ग्रन्थिं चव्यं फलत्रयम् ।
कर्षांशमम्बुकलशे पादशेषे स्रुते[1] हिमे ॥ २६ ॥
द्वौ प्रस्थौ माक्षिकात्क्षिप्त्वा रक्षेत्पक्षमुपेक्षया ।
रोध्रासवोऽयं मेहार्शःश्वित्रकुष्ठारुचिकृमीन् ॥ २७ ॥

---

१ 'श्रुते' इति क्वचित्.

पाण्डुत्वं ग्रहणीदोषं स्थूलतां च नियच्छति ।
साधयेदसनादीनां पलानां विंशतिं पृथक् ॥ २८ ॥
द्विवहेऽपां क्षिपेत्तत्र पादस्थे द्वे घते गुडात् ।
क्षौद्राढकार्धं पलिकं वत्सकादि च कल्कितम् ॥ २९ ॥
तत्क्षौद्रपिप्पलीचूर्णप्रदिग्धे घृतभाजने ।
स्थितं दृढे जतुसृते यवराशौ निधापयेत् ॥ ३० ॥
खदिराङ्गारतप्तानि बहुशोऽत्र निमज्जयेत् ।
तनूनि तीक्ष्णलोहस्य पत्राण्यालोहसङ्क्षयात् ॥ ३१ ॥
अयस्कृतिः स्थिता पीता पूर्वस्मादधिका गुणैः ।
रूक्षमुद्वर्तनं गाढं व्यायामो निशि जागरः ॥ ३२ ॥
यच्चाऽन्यच्छ्लेष्ममेदोघ्नं बहिरन्तश्च तद्धितम् ।
सुभावितां सारजलैस्तुलां पीत्वा शिलोद्भवात् ॥ ३३ ॥
साराम्बुनैव भुञ्जानः शालिं जाङ्गलजै रसैः ।
सर्वानभिभवेन्मेहान् सुबहूपद्रवानपि ॥ ३४ ॥
गण्डमालार्बुदग्रन्थिस्थौल्यकुष्ठभगन्दरान् ।
कृमिश्लीपदशोफांश्च परं चैतद्रसायनम् ॥ ३५ ॥
अधनश्छत्रपादत्ररहितो मुनिवर्तनः ।
योजनानां शतं यायात् खनेद्वा सलिलाशयान् ॥ ३६ ॥
गोशकृन्मूत्रवृत्तिर्वा गोभिरेव सह भ्रजेत् ।
बृंहयेदौषधाहारैरमेदोमूत्रलैः कृशम् ॥ ३७ ॥
शराविकाद्याः पिटिकाः शोफवत्समुपाचरेत् ।

---

१ 'णं प्र' इति पाठः. २ 'भ्रमेत्' इति पाठः.

अपक्का व्रणवत्पक्काः

तासां प्राग्रूप एव च ॥ ३८ ॥

क्षीरिवृक्षाम्बु पानाय बस्तमूत्रं च शस्यते ।
तीक्ष्णं च शोधनं, प्रायो दुर्विरेच्या हि मेहिनः ॥ ३९ ॥
तैलमेलादिना कुर्याद्गणेन व्रणरोपणम् ।
उद्वर्तने कषायं तु वर्गेणारग्वधादिना ॥ ४० ॥
परिषेकोऽसनाद्येन पानान्ने वत्सकादिना ।
पाठाचित्रकशार्ङ्गेष्टासारिवाकण्टकारिकाः ॥ ४१ ॥
ससाह्वं कौटजं मूलं सोमवल्कं नृपद्रुमम् ।
सञ्चूर्ण्य मधुना लिह्यात्तद्वच्चूर्णं नवायसम् ॥ ४२ ॥
मधुमेहित्वमापन्नो भिषग्भिः परिवर्जितः ।
शिलाजतुतुलामद्यात्प्रमेहार्तः पुनर्नवः ॥ ४३ ॥"

---

## त्रयोदशोऽध्यायः ।

अथाऽतो विद्रधिवृद्धिचिकित्सितं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।

[ अथ विद्रधिरोगचिकित्सितम् । ]

"विद्रधिं सर्वमेवामं शोफवत्समुपाचरेत् ।
प्रततं च हरेद्रक्तं, पक्के तु व्रणवत्क्रिया ॥ १ ॥
पञ्चमूलजलैर्धौतं वातिकं लवणोत्तरैः ।
भद्रादिवर्गयष्ट्याह्वतिलैरालेपयेद्व्रणम् ॥ २ ॥

वैरेचनिकयुक्तेन त्रैवृतेन विशोध्य च ।
विदारीवर्गसिद्धेन त्रैवृतेनैव रोपयेत् ॥ ३ ॥
क्षालितं क्षीरितोयेन लिम्पेद्यष्ट्यमृतातिलैः ।
पैत्तं घृतेन सिद्धेन मञ्जिष्ठोशीरपद्मकैः ॥ ४ ॥
पयस्याद्विनिशाश्रेष्ठायष्टीदुग्धैश्च रोपयेत् ।
न्यग्रोधादिप्रवालत्वक्फलैर्वा

कफजं पुनः ॥ ५ ॥

आरग्वधाम्बुना धौतं सक्तुकुम्भनिशातिलैः ।
लिम्पेत्कुलत्थिकादन्तीत्रिवृच्छ्यामाग्नितिल्वकैः ॥ ६ ॥
ससैन्धवैः सगोमूत्रैस्तैलं कुर्वीत रोपणम् ।
रक्तागन्तूद्भवे कार्या पित्तविद्रधिवत्क्रिया ॥ ७ ॥
वरुण्यादिगणक्वाथमपक्केऽभ्यन्तरस्थिते[1] ।
ऊषकादिप्रतीवापं पूर्वाह्णे विद्रधौ पिबेत् ॥ ८ ॥
घृतं विरेचनद्रव्यैः सिद्धं ताभ्यां च पाययेत् ।
निरूहं स्नेहबस्तिं च ताभ्यामेव प्रकल्पयेत् ॥ ९ ॥
पानभोजनलेपेषु मधुशिग्रुः प्रयोजितः ।
दत्तावापो यथादोषमपक्वं हन्ति विद्रधिम् ॥ १० ॥
त्रायन्तीत्रिफलानिम्बकटुकामधुकं समम् ।
त्रिवृत्पटोलमूलाभ्यां चत्वारोंऽशाः पृथक् पृथक् ॥ ११ ॥
मसूराद्विस्तुषादष्टौ तत्क्वाथः सघृतो जयेत् ।
विद्रधीगुल्मवीसर्पदाहमोहमदज्वरान् ॥ १२ ॥

---

१ 'न्तरे स्थिते' इत्यरुणः.

तृण्मूर्च्छाच्छर्दिहृद्रोगपित्तासृक्कुष्ठकामलाः ।
कुडवं त्रायमाणायाः साध्यमष्टगुणेऽम्भसि ॥ १३ ॥
कुडवं तद्रसाद्धात्रीस्वरसात्क्षीरतो घृतात् ।
कर्षांऽशं कल्कितं तिक्तात्रायन्तीधन्वयासकम् ॥ १४ ॥
मुस्तातामलकीवीराजीवन्तीचन्दनोत्पलम् ।
पचेदेकत्र संयोज्य तद्धृतं पूर्ववद्गुणैः ॥ १५ ॥
द्राक्षामधूकं खर्जूरं विदारी सशतावरी ।
परूषकाणि त्रिफला तत्क्वाथे पाचयेद्घृतम् ॥ १६ ॥
क्षीरेक्षुधात्रीनिर्यासे प्राणदाकल्कसंयुतम् ।
तच्छीतं शर्कराक्षौद्रपादिकं पूर्ववद्गुणैः ॥ १७ ॥
हरेच्छृङ्गादिभिरसृक् सिरया वा यथान्तिकम्, ।
विद्रधिं पच्यमानं च कोष्ठस्थं बहिरुन्नतम् ॥ १८ ॥
ज्ञात्वोपनाहयेत्

शूले स्थिते तत्रैव पिण्डिते ।
तत्पार्श्वपीडनात्सुप्तौ दाहादिष्वल्पकेषु च ॥ १९ ॥
पक्वः स्याद्विद्रधिं भित्वा व्रणवत्तमुपाचरेत् ।
अन्तर्भागस्य चाप्येतच्चिह्नं पक्वस्य विद्रधेः ॥ २० ॥
पक्वः स्रोतांसि संपूर्य स यात्यूर्ध्वमधोऽथवा ।
स्वयं प्रवृत्तं तं दोषमुपेक्षेत हिताशिनः ॥ २१ ॥
दशाहं द्वादशाहं वा रक्षेद्भिषगुपद्रवान् ।
असम्यग्वहति क्लेदे वरुणादिसुखाम्भसा ॥ २२ ॥

---

१ 'वरणादि' इति क्वचित्.

पाययेन्मधुशिग्रुं वा यवागूं तेन वा कृताम् ।
यवकोलकुलत्थोत्थयूषैरन्नं च शस्यते ॥ २३ ॥
ऊर्ध्वं दशाहात्त्रायन्तीसर्पिषा तैल्वकेन वा ।
शोधयेद्बलतः शुद्धः सक्षौद्रं तिक्तकं पिबेत् ॥ २४ ॥
सर्वशो गुल्मवच्चैनं यथादोषमुपाचरेत् ।
*सर्वावस्थासु सर्वासु गुग्गुलुं विद्रधीषु च ॥ २५ ॥*
कषायैर्यौगिकैर्युञ्ज्यात् स्वैः स्वैस्तद्वच्छिलाजतु ।
पाकं च वारयेद्यत्नात्, सिद्धिः पक्वे हि दैविकी ॥ २६ ॥
अपि चाऽऽशु विदाहित्वाद्विद्रधिः सोऽभिधीयते ।
सति चालोचयेन्मेहे प्रमेहाणां चिकित्सितम् ॥ २७ ॥
स्तनजे व्रणवत्सर्वं नत्वेनमुपनाहयेत् ।
पाटयेत्पालयन् स्तन्यवाहिनीः कृष्णचूचुकौ ॥ २८ ॥
सर्वास्वामाद्यवस्थासु निर्दुहीत च तत्स्तनम् ।

[ अथ वृद्धिरोगचिकित्सितम् । ]

शोधयेत्त्रिवृताक्षिग्धं वृद्धौ स्नेहैश्चलात्मके ॥ २९ ॥
कौशाम्रतिल्वकैरण्डसुकुमारकमिश्रकैः ।
ततोऽनिलघ्ननिर्यूहकल्कस्नेहैर्निरूहयेत् ॥ ३० ॥
रसेन भोजितं यष्टितैलेनान्वासयेदनु ।
स्वेदप्रलेपा वातघ्नाः, पक्वे भित्त्वा व्रणक्रियाः ॥ ३१ ॥
पित्तरक्तोद्भवे वृद्धावामपक्वे यथायथम् ।
शोफव्रणक्रियां कुर्यात्, प्रततं च हरेदसृक् ॥ ३२ ॥

---

१ 'त्रिवृता स्नि' इति पाठः.

गोमूत्रेण पिबेत्कल्कं श्लैष्मिके पीतदारुजम् ।
विम्लापनादृते चाऽत्र श्लेष्मग्रन्थिक्रमो हितः ॥ ३३ ॥
पक्के च पाटिते तैलमिष्यते व्रणशोधनम् ।
सुमनोऽरुष्कराङ्कोल्लसप्तपर्णेषु साधितम् ॥ ३४ ॥
पटोलनिम्बरजनीविडङ्गकुटजेषु च ।
मेदोजं मूत्रपिष्टेन सुस्विन्नं सुरसादिना ॥ ३५ ॥
शिरोविरेकद्रव्यैर्वा वर्जयन्फलसेवनीम् ।
दारयेद्वृद्धिपत्रेण सम्यङ्मेदसि सूद्धृते ॥ ३६ ॥
व्रणं माक्षिककासीससैन्धवप्रतिसारितम् ।
सीव्येदभ्यञ्जनं चाऽस्य योज्यं मेदोविशुद्धये ॥ ३७ ॥
मनःशिलैलासुमनोग्रन्थिभल्लातकैः कृतम् ।
तैलमाव्रणसन्धानात्स्नेहस्वेदौ च शीलयेत् ॥ ३८ ॥
मूत्रजं स्वेदितं स्निग्धैर्वस्त्रपट्टेन वेष्टितम् ।
विध्येदधस्तात्सेवन्या स्रावयेच्च यथोदरम् ॥ ३९ ॥
व्रणं च स्थगिकाबद्धं रोपयेत्

अन्त्रहेतुके ।

फलकोशमसम्प्राप्ते चिकित्सा वातवृद्धिवत् ॥ ४० ॥
पचेत्पुनर्नवतुलां तथा दशपलाः पृथक् ।
दशमूलपयस्याश्वगन्धैरण्डशतावरीः ॥ ४१ ॥
द्विदर्भशरकाशेक्षुमूलपोटगलान्विताः ।
वहेऽपामष्टभागस्थे तत्र त्रिंशत्पलं गुडात् ॥ ४२ ॥

प्रस्थमेरण्डतैलस्य द्वौ घृतात्पयसस्तथा ।
आवपेद् द्विपलांशं च कृष्णातन्मूलसैन्धवम् ॥ ४३ ॥
यष्टीमधुकमृद्वीकायवानीनागराणि च ।
तत्सिद्धं सुकुमाराख्यं सुकुमारं रसायनम् ॥ ४४ ॥
वातातपाध्वयानादिपरिहार्येष्वयन्त्रणम् ।
प्रयोज्यं सुकुमाराणामीश्वराणां सुखात्मनाम् ॥ ४५ ॥
नृणां स्त्रीवृन्दभर्तॄणामलक्ष्मीकलिनाशनम् ।
सर्वकालोपयोगेन कान्तिलावण्यपुष्टिदम् ॥ ४६ ॥
वर्ध्मविद्रधिगुल्मार्शोयोनिमेढ्रानिलार्तिषु ।
शोफोदरखुडप्लीहविड्विबन्धेषु चोत्तमम् ॥ ४७ ॥
यायाद्वर्ध्म न चेच्छान्तिं स्नेहरेकानुवासनैः ।
बस्तिकर्म पुरः कृत्वा वङ्क्षणस्थं ततो दहेत् ॥ ४८ ॥
अग्निना मार्गरोधार्थं मरुतः

अर्धेन्दुवक्रया ।
अङ्गुष्ठस्योपरि स्नाव पीतं तन्तुसमं च यत् ॥ ४९ ॥
उत्क्षिप्य सूच्या तत्तिर्यग्दहेच्छित्वा यतो गदः ।
ततोऽन्यपार्श्वेऽन्ये त्वाहुर्दहेद्वाऽनामिकाङ्गुलेः ॥ ५० ॥
गुल्मेऽन्यैर्वातकफजे प्लीह्नि चायं विधिः स्मृतः ।
कनिष्ठिकानामिकयोर्विश्वाच्यां च यतो गदः ॥ ५१ ॥"

## चतुर्दशोऽध्यायः।

अथाऽतो गुल्मचिकित्सितं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"गुल्मं बद्धशकृद्वातं वातिकं तीव्रवेदनम् ।
रूक्षशीतोद्भवं तैलैः साधयेद्वातरोगिकैः ॥ १ ॥
पानान्नान्वासनाभ्यङ्गैः स्निग्धस्य स्वेदमाचरेत् ।
आनाहवेदनास्तम्भविबन्धेषु विशेषतः ॥ २ ॥
स्रोतसां मार्दवं कृत्वा जित्वा मारुतमुल्बणम् ।
भित्त्वा विबन्धं स्निग्धस्य स्वेदो गुल्ममपोहति ॥ ३ ॥
स्नेहपानं हितं गुल्मे विशेषेणोर्ध्वनाभिजे ।
पक्वाशयगते बस्तिरुभयं जठराश्रये ॥ ४ ॥
दीप्तेऽग्नौ वातिके गुल्मे विबन्धेऽनिलवर्चसोः ।
बृंहणान्यन्नपानानि स्निग्धोष्णानि प्रदापयेत् ॥ ५ ॥
पुनःपुनः स्नेहपानं

निरूहाः सानुवासनाः ।
प्रयोज्या वातजे गुल्मे कफपित्तानुरक्षिणः ॥ ६ ॥
बस्तिकर्म परं विद्याद्गुल्मघ्नं, तद्धि मारुतम् ।
स्वस्थाने प्रथमं जित्वा सद्यो गुल्ममपोहति ॥ ७ ॥
तस्मादभीक्ष्णशो गुल्मा निरूहैः सानुवासनैः ।
प्रयुज्यमानैः शाम्यन्ति वातपित्तकफात्मकाः ॥ ८ ॥
हिङ्गुसौवर्चलव्योषबिडदाडिमदीप्यकैः ।

पुष्कराजाजिधान्याम्लवेतसक्षारचित्रकैः ॥ ९ ॥
शठीवचाजगन्धैलासुरसैर्दधिसंयुतैः ।
शूलानाहहरं सर्पिः साधयेद्वातगुल्मिनाम् ॥ १० ॥
हपुषोषणपृथ्वीकापञ्चकोलकदीप्यकैः ।
साजाजिसैन्धवैर्दध्ना दुग्धेन च रसेन च ॥ ११ ॥
दाडिमान्मूलकात्कोलात्पचेत्सर्पिर्निहन्ति तत् ।
वातगुल्मोदरानाहपार्श्वहृत्कोष्ठवेदनाः ॥ १२ ॥
योन्यर्शोग्रहणीदोषकासश्वासारुचिज्वरान् ।
दशमूलं बलां कालां सुषवीं द्वौ पुनर्नवौ ॥ १३ ॥
पौष्करैरण्डरास्नाश्वगन्धभार्ग्यमृताशठीः ।
पचेद्गन्धपलाशं च द्रोणेऽपां द्विपलोन्मितम् ॥ १४ ॥
यवैः कोलैः कुलत्थैश्च माषैश्च प्रास्थिकैः सह ।
क्वाथेऽस्मिन् दधिपात्रे च घृतप्रस्थं विपाचयेत् ॥ १५ ॥
स्वरसैर्दाडिमाम्रातमातुलुङ्गोद्भवैर्युतम् ।
तथा तुषाम्बुधान्याम्लयुतैः श्लक्ष्णैश्च कल्कितैः ॥ १६ ॥
भार्गीतुम्बुरुषड्ग्रन्थाग्रन्थिरास्नाग्निधान्यकैः ।
यवानकयवान्यम्लवेतसासितजीरकैः ॥ १७ ॥
अजाजीहिङ्गुहपुषाकारवीवृषकोषकैः ।
निकुम्भकुम्भमूर्वेभपिप्पलीवेल्लदाडिमैः ॥ १८ ॥
श्वदंष्ट्रात्रपुसैर्वारुबीजहिंस्राश्मभेदकैः ।
मिशिद्विक्षारसुरससारिवानीलिनीफलैः ॥ १९ ॥

शिरोरोगनिषेधोक्तमाचरेन्मूर्धगेष्वनु ।
उद्रिक्ततिक्तकटुकमल्पस्नेहं च भोजनम् ॥ २४ ॥
विडङ्गकृष्णामरिचपिप्पलीमूलशिग्रुभिः ।
पिबेत्ससर्जिकाक्षारां यवागूं तक्रसाधिताम् ॥ २५ ॥
रसं शिरीषकिणिहीपारिभद्रककेम्बुकात् ।
पलाशबीजपत्तूरपूतीकाद्वा पृथक् पिबेत् ॥ २६ ॥
सक्षौद्रं सुरसादीन्वा लिह्यात्क्षौद्रयुतान् पृथक् ।
शतकृत्वोऽश्वविट्चूर्णं विडङ्गक्काथभावितम् ॥ २७ ॥
कृमिमान्मधुना लिह्याद्भावितं वा वरारसैः ।
शिरोगतेषु कृमिषु चूर्णं प्रधमनं च तत् ॥ २८ ॥
आखुपर्णीकिसलयैः सुपिष्टैः पिष्टमिश्रितैः ।
पक्त्वा पूपलिकां खादेद्धान्याम्लं च पिबेदनु ॥ २९ ॥
सपञ्चकोललवणमसान्द्रं तक्रमेव वा ।
नीपमार्कवनिर्गुण्डीपल्लवेष्वप्ययं विधिः ॥ ३० ॥
विडङ्गचूर्णमिश्रैर्वा पिष्टैर्भक्ष्यान् प्रकल्पयेत् ।
विडङ्गतण्डुलैर्युक्तमर्धांशैरातपस्थितम् ॥ ३१ ॥
दिनमारुष्करं तैलं पाने बस्तौ च योजयेत् ।
सुराह्वसरलस्नेहं पृथगेवं प्रकल्पयेत् ॥ ३२ ॥
पुरीषजेषु सुतरां दद्याद्बस्तिविरेचने ।
शिरोविरेकं वमनं शमनं कफजन्मसु ॥ ३३ ॥

१ 'पूतिका' इति पाठः. २ 'आखुकर्णी' इति पाठः.

रक्तजानां प्रतीकारं कुर्यात्कुष्ठचिकित्सितात् ।
इन्द्रलुप्तविधिश्चात्र विधेयो रोमभोजिषु ॥ ३४ ॥
क्षीराणि मांसानि घृतं गुडं च
दधीनि शाकानि च पर्णवन्ति ।
समासतोऽम्लान्मधुरान् रसांश्च
क्रमीन् जिहासुः परिवर्जयेच्च ॥ ३५ ॥"

---

## एकविंशोऽध्यायः ।

अथाऽतो वातव्याधिचिकित्सितं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"केवलं निरुपस्तम्भमादौ स्नेहैरुपाचरेत् ।
वायुं, सर्पिर्वसामज्जातैलपानैर्नरं ततः ॥ १ ॥
स्नेहाक्लान्तं समाश्वास्य पयोभिः स्नेहयेत्पुनः ।
यूषैर्ग्राम्यौदकानूपरसैर्वा स्नेहसंयुतैः ॥ २ ॥
पायसैः कृशरैः साम्ललवणैः सानुवासनैः ।
वातघ्नैस्तर्पणैश्चान्यैः सुस्निग्धैः स्नेहयेत्ततः ॥ ३ ॥
स्वभ्यक्तं स्नेहसंयुक्तैः सङ्कराद्यैः पुनः पुनः ।
स्नेहाक्तं स्विन्नमङ्गं तु वक्रं स्तब्धं सवेदनम् ॥ ४ ॥
यथेष्टमानमयितुं सुखमेव हि शक्यते ।
शुष्काण्यपि हि काष्ठानि स्नेहस्वेदोपपादनैः ॥ ५ ॥
शक्यं कर्मण्यतां नेतुं किमु गात्राणि जीवताम् ।

हृषंतोदरुगायामशोफस्तम्भग्रहादयः ॥ ६ ॥
स्निग्धस्याशु प्रशाम्यन्ति मार्दवं चोपजायते ।
स्नेहश्च धातून् संशुष्कान् पुष्णात्याशु प्रयोजितः ॥ ७ ॥
बलमग्निबलं पुष्टिं प्राणं चाऽस्याभिवर्धयेत् ।
असकृत्तं पुनः स्नेहैः स्वेदैश्च प्रतिपादयेत् ॥ ८ ॥
तथा स्नेहमृदौ कोष्ठे न तिष्ठन्त्यनिलामयाः ।
यद्येतेन सदोषत्वात्कर्मणा न प्रशाम्यति ॥ ९ ॥
मृदुभिः स्नेहसंयुक्तैर्भेषजैस्तं विशोधयेत् ।
घृतं तिल्वकसिद्धं वा सातलासिद्धमेव वा ॥ १० ॥
पयसैरण्डतैलं वा पिबेद्दोषहरं शिवम् ।
स्निग्धाम्ललवणोष्णाद्यैराहारैर्हि मलश्चितः ॥ ११ ॥
स्रोतो रुद्ध्वाऽनिलं रुन्ध्यात्तस्मात्तमनुलोमयेत् ।
दुर्बलो यो विरेच्यः स्यात्तं निरूहैरुपाचरेत् ॥ १२ ॥
दीपनैः पाचनीयैर्वा भोज्यैर्वा तद्युतैर्नरम् ।
संशुद्धस्योत्थिते चाऽग्नौ स्नेहस्वेदौ पुनर्हितौ ॥ १३ ॥
आमाशयगते वायौ वमितप्रतिभोजिते ।
सुखाम्बुना षड्धरणं वचादिं वा प्रयोजयेत् ॥ १४ ॥
सन्धुक्षितेऽग्नौ परतो विधिः केवलवातिकः ।
मत्स्यानाभिप्रदेशस्थे सिद्धान् बिल्वशलाटुभिः ॥ १५ ॥

---

१ स योगस्तु 'दार्वीकलिङ्गकटुकातिविषाग्निपाठा मूत्रेण सूक्ष्म-रजसा धरणप्रमाणाः । पीता जयन्ति' इत्यादि सङ्ग्रहोक्तोऽवग-न्तव्यः (धरणं=पलस्य दशमो भागः), 'षट्चरण'मित्यरुण०.

बस्तिकर्म त्वधोनाभेः शस्यते चाऽवपीडकः ।
कोष्ठगे क्षारचूर्णाद्या हिताः पाचनदीपनाः ॥ १६ ॥
हृत्स्थे पयः स्थिरासिद्धम्
शिरोबस्तिः शिरोगते ।
स्नैहिकं नावनं धूमः श्रोत्रादीनां च तर्पणम् ॥ १७ ॥
स्वेदाभ्यङ्गानि शस्तानि हृद्यं चान्नं त्वगाश्रिते ।
शीताः प्रदेहा रक्तस्थे विरेको रक्तमोक्षणम् ॥ १८ ॥
विरेको मांसमेदःस्थे निरूहाः शमनानि च ।
बाह्याभ्यन्तरतः स्नेहैरस्थिमज्जागतं जयेत् ॥ १९ ॥
प्रहर्षोऽन्नं च शुक्रस्थे बलशुक्रकरं हितम् ।
विबद्धमार्गं दृष्ट्वा तु शुक्रं दद्याद्विरेचनम् ॥ २० ॥
विरिक्तं प्रतिभुक्तं च पूर्वोक्तां कारयेत्क्रियाम् ।
गर्भे शुष्के तु वातेन बालानां च विशुष्यताम् ॥ २१ ॥
सिताकाश्मर्यमधुकैः सिद्धमुत्थापने पयः ।
स्नावसन्धिसिराप्राप्ते स्नेहदाहोपनाहनम् ॥ २२ ॥
तैलं सङ्कुचितेऽभ्यङ्गो माषसैन्धवसाधितम् ।
आगारधूमलवणतैलैर्लेपः स्रुतेऽसृजि ॥ २३ ॥
सुप्तेऽङ्गे वेष्टयुक्ते तु कर्तव्यमुपनाहनम् ।
अथाऽपतानकेनार्तमस्रस्ताक्षमवेपनम् ॥ २४ ॥
अस्तब्धमेढ्रमस्वेदं बहिरायामवर्जितम् ।
अखट्वाघातिनं चैनं त्वरितं समुपाचरेत् ॥ २५ ॥

---

१ 'वातानि,' 'वा तानि' इति पाठौ।

तत्र प्रागेव सुस्निग्धस्विन्नाङ्गे तीक्ष्णनावनम् ।
स्रोतोविशुद्धये युञ्ज्यादच्छपानं ततो घृतम् ॥ २६ ॥
विदार्यादिगणक्वाथदधिक्षीररसैः शृतम् ।
नाऽतिमात्रं तथा वायुर्व्याप्नोति सहसैव वा ॥ २७ ॥
कुलत्थयवकोलानि भद्रदार्वादिकं गणम् ।
निःक्वाथ्यानूपमांसं च तेनाम्लैः पयसाऽपि च ॥ २८ ॥
स्वादुस्कन्धप्रतीवापं महास्नेहं विपाचयेत् ।
सेकाभ्यङ्गावगाहान्नपानन्स्यानुवासनैः ॥ २९ ॥
सं हन्ति वातं ते ते च स्नेहस्वेदाः सुयोजिताः ।
वेगान्तरेषु मूर्धानमसकृच्चास्य रेचयेत् ॥ ३० ॥
अवपीडैः प्रधमनैस्तीक्ष्णैः श्लेष्मनिबर्हणैः ।
श्वसनासु विमुक्तासु तथा संज्ञां स विन्दति ॥
सौवर्चलाभयाव्योषसिद्धं सर्पिश्चलेऽधिके ॥ ३१ ॥

पलाष्टकं तिल्वकतो वरायाः
प्रस्थं पलांशं गुरुपञ्चमूलम् ।
सैरण्डसिंहीत्रिवृतं घटेऽपां
पक्त्वा पचेत्पादशृतेन तेन ॥ ३२ ॥
दध्नः पात्रे यावशूकात्रिबिल्वैः
सर्पिःप्रस्थं हन्ति तत्सेव्यमानम् ।
दुष्टान्वातानेकसर्वाङ्गसंस्थान्
योनिव्यापद्गुल्मवर्ध्मोदरं च ॥ ३३ ॥

---

१ 'सहन्ति' इति पाठः.

विधिस्तिल्वकवज्ज्ञेयो शम्याकाशोकयोरपि ।
चिकित्सितमिदं कुर्याच्छुद्धवातापतानके ॥ ३४ ॥
संसृष्टदोषे संसृष्टं
चूर्णयित्वा कफान्विते ।
तुम्बुरूण्यभयाहिङ्गुपौष्करं लवणत्रयम् ॥ ३५ ॥
यवक्वाथाम्बुना पेयं हृत्पार्श्वार्त्यपतन्त्रके ।
हिङ्गु सौवर्चलं शुण्ठीं दाडिमं साम्लवेतसम् ॥ ३६ ॥
पिबेद्वा श्लेष्मपवनहृद्रोगोक्तं च शस्यते ।
आयामयोरर्दितवद्वाह्याभ्यन्तरयोः क्रिया ॥ ३७ ॥
तैलद्रोण्यां च शयनमान्तरोऽत्र सुदुस्तरः ।
विवर्णदन्तवदनः स्रस्ताङ्गो नष्टचेतनः ॥ ३८ ॥
प्रस्विद्यंश्च धनुष्कम्भी दशरात्रं न जीवति ।
वेगेष्वतोऽन्यथा जीवेन्मन्देषु विनतो जडः ॥ ३९ ॥
खञ्जः कुणिः पक्षहतः पङ्गुलो विकलोऽथवा ।
हनुस्रंसे हनू स्निग्धस्विन्नौ स्वस्थानमानयेत् ॥ ४० ॥
उन्नामयेच्च कुशलश्चिबुकं विवृते मुखे ।
नामयेत्संवृते शेषमेकायामवदाचरेत् ॥ ४१ ॥
जिह्वास्तम्भे यथावस्थं कार्यं वातचिकित्सितम् ।
अर्दिते नावनं मूर्ध्नि तैलं श्रोत्राक्षितर्पणम् ॥ ४२ ॥
सशोफे वमनं दाहरागयुक्ते सिराव्यधः ।
स्नेहनं स्नेहसंयुक्तं पक्षाघाते विरेचनम् ॥ ४३ ॥

अववाहौ हितं नस्यं स्नेहश्चोत्तरभक्तिकः ।
ऊरुस्तम्भे न च स्नेहो न च संशोधनं हितम् ॥ ४४ ॥
श्लेष्मामभेदोबाहुल्याद्युक्त्या तत्क्षपणान्यतः ।
कुर्याद्रूक्षोपचारश्च यवश्यामाककोद्रवाः ॥ ४५ ॥
शाकैरलवणैः शस्ताः किंचित्तैलैर्जलैः शृतैः ।
जाङ्गलैरघृतैर्मांसैर्मध्वम्भोऽरिष्टपायिनः ॥ ४६ ॥
वत्सकादिर्हरिद्रादिर्वचादिर्वा ससैन्धवैः ।
आमवाते सुखाम्भोभिः पेयः षड्धरणोऽथवा ॥ ४७ ॥
लिह्यात्क्षौद्रेण वा श्रेष्ठाचव्यतिक्ताकणाघनान् ।
कल्कं समधु वा चव्यपथ्याग्निसुरदारुजम् ॥ ४८ ॥
मूत्रैर्वा शीलयेत्पथ्यां गुग्गुलुं गिरिसम्भवम् ।
व्योषाग्निमुस्तत्रिफलाविडङ्गैर्गुग्गुलुं समम् ॥ ४९ ॥
खादन् सर्वान् जयेद्व्याधीन् मेदःश्लेष्मामवातजान् ।
शाम्यत्येवं कफाक्रान्तः समेदस्कः प्रभञ्जनः ॥ ५० ॥
क्षारमूत्राग्नितान् स्वेदान् सेकानुद्वर्तनानि च ।
कुर्याद्दिह्याच्च मूत्राढ्यैः करञ्जफलसर्षपैः ॥ ५१ ॥
मूलैर्वाप्यर्कतर्कारीनिम्बजैः ससुराह्वयैः ।
सक्षौद्रसर्षपापक्वलोष्टवल्मीकमृत्तिकैः ॥ ५२ ॥
कफक्षयार्थं व्यायामे सह्ये चैनं प्रवर्तयेत् ।
स्थलान्युल्लङ्घयेन्नारीः शक्तितः परिशीलयेत् ॥ ५३ ॥
स्थिरतोयं सरः क्षेमं प्रतिस्रोतो नदीं तरेत् ।
श्लेष्ममेदःक्षये चाऽत्र स्नेहादीनवचारयेत् ॥ ५४ ॥

स्थानदूष्यादि चालोच्य कार्या शेषेष्वपि क्रिया ।
सहचरं सुरदारु सनागरं
क्वथितमम्भसि तैलविमिश्रितम् ।
पवनपीडितदेहगतिः पिबेद्
द्रुतविलम्बितगो भवतीच्छया ॥ ५५ ॥
रास्नामहौषधद्वीपिपिप्पलीशठिपौष्करम् ।
पिष्ट्वा विपाचयेत्सर्पिर्वातरोगहरं परम् ॥ ५६ ॥
निम्बामृतावृषपटोलनिदिग्धिकानां
भागान् पृथग्दश पलान् विपचेद्धटेऽपाम् ।
अष्टांशशेषितरसेन पुनश्च तेन
प्रस्थं घृतस्य विपचेत्पिचुभागकल्कैः ॥ ५७ ॥
पाठाविडङ्गसुरदारुगजोपकुल्या-
द्विक्षारनागरनिशामिशिचव्यकुष्ठैः ।
तेजोवतीमरिचवत्सकदीप्यकाग्नि-
रोहिण्यरुष्करवचाकणमूलयुक्तैः ॥ ५८ ॥
मञ्जिष्ठयातिविषया विषया यवान्या
संशुद्धगुग्गुलुपलैरपि पञ्चसंख्यैः ।
तत्सेवितं प्रधमति प्रबलं समीरं
सन्ध्यस्थिमज्जगतमप्यथ कुष्ठमीदृक् ॥ ५९ ॥
नाडीव्रणार्बुदभगन्दरगण्डमाला-
जत्रूर्ध्वसर्वगदगुल्मगुदोत्थमेहान् ।

१ 'अष्टांशके' इति पाठः.

यक्ष्मारुचिश्वासजपीनसकासशोष-
हृत्पाण्डुरोगमदविद्रधिवातरक्तम् ॥ ६० ॥
बलाबिल्वशृते क्षीरे घृतमण्डं विपाचयेत् ।
तस्य शुक्तिः प्रकुञ्चो वा नस्यं वाते शिरोगते ॥ ६१ ॥
तद्वत्सिद्धा वसा नक्रमत्स्यकूर्मचुलूकजा ।
विशेषेण प्रयोक्तव्या केवले मातरिश्वनि ॥ ६२ ॥
जीर्णं पिण्याकं पञ्चमूलं पृथक्च
क्वाथ्यं क्वाथाभ्यामेकतस्तैलमाभ्याम् ।
क्षीरादष्टांशं पाचयेत्तेन पानाद्
वाता नश्येयुः श्लेष्मयुक्ता विशेषात् ॥ ६३ ॥
प्रसारिणीतुलाक्वाथे तैलप्रस्थं पयःसमम् ।
द्विमेदामिशिमञ्जिष्ठाकुष्ठरास्नाकुचन्दनैः ॥ ६४ ॥
जीवकर्षभकाकोलीयुगुलामरदारुभिः ।
कल्कितैर्विपचेत्सर्वमारुतामयनाशनम् ॥ ६५ ॥
समूलशाखस्य सहाचरस्य
तुलां समेतां दशमूलतश्च ।
पलानि पञ्चाशदभीरुतश्च
पादावशेषं विपचेद्वहेऽपाम् ॥ ६६ ॥
तत्र सेव्यनखकुष्ठहिमैला-
स्पृक्प्रियङ्गुनलिकाम्बुशिलाजैः ।

लोहितानलदलोहसुराह्वैः
कोपनामिसितुरुष्कनतैश्च ॥ ६७ ॥
तुल्यं क्षीरं पालिकैस्तैलपात्रं
सिद्धं कृच्छ्रान् शीलितं हन्ति वातान् ।
कम्पाक्षेपस्तम्भशोषादियुक्तान्
गुल्मोन्मादौ पीनसं योनिरोगान् ॥ ६८ ॥
सहाचरतुलायास्तु रसे तैलाढकं पचेत् ।
मूलकल्काद्दशपलं पयो दत्वा चतुर्गुणम् ॥ ६९ ॥
अथवा नतषड्ग्रन्थास्थिराकुष्ठसुराह्वयान् ।
सैलानलदशैलेयशताह्वारक्तचन्दनान् ॥ ७० ॥
सिद्धेऽस्मिन् शर्कराचूर्णादष्टादशपलं क्षिपेत् ।
भेडस्य सम्मतं तैलं तत्कृच्छ्रानिलामयान् ॥ ७१ ॥
वातकुण्डलिकोन्मादगुल्मवर्ध्मादिकान् जयेत् ।
बलाशतं छिन्नरुहापादं रास्नाष्टभागिकम् ॥ ७२ ॥
जलाढकशते पक्त्वा शतभागस्थिते रसे ।
दधिमस्त्विक्षुनिर्यासशुक्तैस्तैलाढकं समैः ॥ ७३ ॥
पचेत्साजपयोर्धांशैः कल्कैरेभिः पलोन्मितैः ।
शठीसरलदार्वेलामञ्जिष्ठागुरुचन्दनैः ॥ ७४ ॥
पद्मकातिबलामुस्ताशूर्पपर्णीहरेणुभिः ।
यष्ट्याह्वसुरसव्याघ्रनखर्षभकजीवकैः ॥ ७५ ॥

---

१ 'मिश्रि' इति पाठः. २ 'पयोर्धांशं क' इति पाठः.

पलाशरसकस्तूरीनीलिकाजातिकोशकैः ।
स्पृक्काकुङ्कुमशैलेयजातिकाकट्फलाम्बुभिः ॥ ७६ ॥
त्वक्कुन्दरुककर्पूरतुरुष्कश्रीनिवासकैः ।
लवङ्गनखकङ्कोलकुष्ठमांसीप्रियङ्गुभिः ॥ ७७ ॥
स्थौणेयतगरध्यामवचामदनकप्लवैः ।
सनागकेसरैः सिद्धे दद्याच्चाऽत्रावतारिते ॥ ७८ ॥
पत्रकल्कं ततः पूतं विधिना तत्प्रयोजितम् ।
कासश्वासज्वरच्छर्दिमूर्च्छागुल्मक्षतक्षयान् ॥ ७९ ॥
प्लीहशोषमपस्मारमलक्ष्मीं च प्रणाशयेत् ।
बलातैलमिदं श्रेष्ठं वातव्याधिविनाशनम् ॥ ८० ॥

पाने नस्येऽन्वासनेऽभ्यञ्जने च
स्नेहाः काले सम्यगेते प्रयुक्ताः ।
दुष्टान्वातानाशु शान्तिं नयेयु-
र्वन्ध्या नारीः पुत्रभाजश्च कुर्युः ॥ ८१ ॥

स्नेहस्वेदैर्द्रुतः श्लेष्मा यदा पक्वाशये स्थितः ।
पित्तं वा दर्शयेद्रूपं बस्तिभिस्तं विनिर्जयेत् ॥ ८२ ॥"

---

## द्वाविंशोऽध्यायः ।

अथाऽतो वातशोणितचिकित्सितं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥
"वातशोणितिनो रक्तं स्निग्धस्य बहुशो हरेत् ।
अल्पाल्पं पालयन् वायुं यथादोषं यथाबलम् ॥ १ ॥

रुग्रागतोददाहेषु जलौकोभिर्विनिर्हरेत्।
शृङ्गतुम्बैश्चिमिचिमाकण्डूरुग्दूयनान्वितम्॥ २ ॥
प्रच्छानेन सिराभिर्वा देशाद्देशान्तरं व्रजत्[1]।
अङ्गग्लानौ तु न स्राव्यं रूक्षं वातोत्तरं च यत्॥ ३ ॥
गम्भीरं श्वयथुं स्तम्भं कम्पस्नायुसिरामयान्।
ग्लानिमन्यांश्च वातोत्थान् कुर्याद्वायुरसृक्क्षयात्॥ ४ ॥
विरेच्यः स्नेहयित्वा तु स्नेहयुक्तैर्विरेचनैः।
वातोत्तरे वातरक्ते पुराणं पाययेद्घृतम्॥ ५ ॥
श्रावणीक्षीरकाकोलीक्षीरिणीजीवकैः समैः।
सिद्धं सर्षपकैः सर्पिः सक्षीरं वातरक्तनुत्॥ ६ ॥
द्राक्षामधूकवारिभ्यां सिद्धं वा ससितोपलम्।
घृतं पिबेत्तथा क्षीरं गुडूचीस्वरसे शृतम्॥ ७ ॥
तैलं पयः शर्करां च पाययेद्वा सुमूर्च्छितम्।
बलाशतावरीरास्नादशमूलैः सपीलुभिः॥ ८ ॥
श्यामैरण्डस्थिराभिश्च वातार्तिघ्नं शृतं पयः।
धारोष्णं मूत्रयुक्तं वा क्षीरं दोषानुलोमनम्॥ ९ ॥
पैत्ते पक्त्वा वरीतिक्तापटोलत्रिफलामृताः।
पिबेद्घृतं वा क्षीरं वा स्वादुतिक्तकसाधितम्॥ १० ॥
क्षीरेणैरण्डतैलं च प्रयोगेण पिबेन्नरः।
बहुदोषो विरेकार्थं जीर्णे क्षीरौदनाशनः॥ ११ ॥

---

१ 'व्रजेत्' इति क्वचित्.

कषायमभयानां वा पाययेद्घृतभर्जितम् ।
क्षीरानुपानं त्रिवृताचूर्णं द्राक्षारसेन वा ॥ १२ ॥
निर्हरेद्वा मलं तस्य सघृतैः क्षीरबस्तिभिः ।
नहि बस्तिसमं किंचिद्वातरक्तचिकित्सितम् ॥ १३ ॥
विशेषात्पायुपार्श्वोरुपर्वास्थिजठरार्तिषु ।
मुस्तद्राक्षाहरिद्राणां पिबेत्क्वाथं कफोल्बणे ॥ १४ ॥
सक्षौद्रं त्रिफलाया वा गुडूचीं वा यथा तथा ।
यथाऽर्हस्नेहपीतं च वामितं मृदु रूक्षयेत् ॥ १५ ॥
त्रिफलाव्योषपत्रैलात्वक्क्षीरीचित्रकं वचाम् ।
विडङ्गं पिप्पलीमूलं लोमशां वृषकं त्वचम् ॥ १६ ॥
ऋद्धिं लाङ्गलिकं चव्यं समभागानि पेषयेत् ।
कल्कैर्लिह्यादयसीं पात्रीं मध्याह्ने भक्षयेदिदम् ॥ १७ ॥
वातास्रे सर्वदोषेऽपि परं शूलान्विते हितम् ।
कोकिलाक्षकनिर्यूहः पीतस्तच्छाकभोजिना ॥ १८ ॥
कृपाभ्यास इव क्रोधं वातरक्तं नियच्छति ।
पञ्चमूलस्य धान्या वा रसैर्लीढ्वा बलाम् ॥ १९ ॥
खुडं सुरूढमप्यङ्गे ब्रह्मचारी नियच्छति ।
इत्याभ्यन्तरमुद्दिष्टं कर्म बाह्यमतः परम् ॥ २० ॥
आरनालाढके तैलं पादसर्जरसं शृतम् ।

---

१ कोकिलाक्षः-तालिमखानेति प्रसिद्धं बीजम्. २ 'पिबन् जयेत्' इति पाठः.

प्रभूते खजितं तोये ज्वरदाहार्तिनुत्परम् ॥ २१ ॥
समधूच्छिष्टमञ्जिष्ठं ससर्जरससारिवम् ।
पिण्डतैलं तदभ्यङ्गाद्वातरक्तरुजापहम् ॥ २२ ॥
दशमूलशृतं क्षीरं सद्यः शूलनिवारणम् ।
परिषेकोऽनिलप्राये तद्वत्कोष्णेन सर्पिषा ॥ २३ ॥
स्नेहैर्मधुरसिद्धैर्वा चतुर्भिः परिषेचयेत् ।
स्तम्भाक्षेपकशूलार्तं कोष्णैर्दाहे तु शीतलैः ॥ २४ ॥
तद्वद्गव्याविकच्छागैः क्षीरैस्तैलविमिश्रितैः ।
निःक्वाथैर्जीवनीयानां पञ्चमूलस्य वा लघोः ॥ २५ ॥
द्राक्षेक्षुरसमद्यानि दधिमस्त्वम्लकाञ्जिकम् ।
सेकार्थं तण्डुलक्षौद्रशर्कराम्भश्च शस्यते ॥ २६ ॥
प्रियाः प्रियंवदा नार्यश्चन्दनार्द्रकरस्तनाः ।
स्पर्शशीताः सुखस्पर्शा घ्नन्ति दाहं रुजं क्लमम् ॥ २७ ॥
सरागे सरुजे दाहे रक्तं हृत्वा प्रलेपयेत् ।
प्रपौण्डरीकमञ्जिष्ठादार्वीमधुकचन्दनैः ॥ २८ ॥
ससितोपलकासेक्षुमसूरैरकसक्तुभिः ।
लेपो रुग्दाहवीसर्परागशोफनिबर्हणः ॥ २९ ॥
वातघ्नैः साधितः स्निग्धः कृशरो मुद्गपायसः ।
तिलसर्षपपिण्डैश्च शूलघ्नमुपनाहनम् ॥ ३० ॥
औदकप्रसहानूपवेसवाराः सुसंस्कृताः ।

---

१ 'मूले शृत' इति पाठः.

जीवनीयौषधस्नेहयुक्ताः स्युरुपनाहने ॥ ३१ ॥
स्तम्भतोदरुगायामशोफाङ्गग्रहनाशनाः ।
जीवनीयौषधैः सिद्धाः सपयस्का वसाऽपि वा ॥ ३२ ॥
घृतं सहचरान्मूलं जीवन्ती च्छागलं पयः ।
लेपः पिष्टा तिलास्तद्वद्भृष्टाः पयसि निर्वृताः ॥ ३३ ॥
क्षीरपिष्टक्षुमालेपमेरण्डस्य फलानि वा ।
कुर्याच्छूलनिवृत्त्यर्थं शताह्वां वाऽनिलेऽधिके ॥ ३४ ॥
[1]मुस्तक्षारसितापक्कं घृतमभ्यञ्जने हितम् ।
सिद्धं समधु[2]सूक्तं वा [3]सेकेऽभ्यङ्गे

कफोत्तरे ॥ ३५ ॥

गृहधूमो वचा कुष्ठं शताह्वा रजनीद्वयम् ।
प्रलेपः शूलनुद्वातरक्ते

वातकफोत्तरे ॥ ३६ ॥

मधुशिग्रोर्हितं तद्वद्बीजं धान्याम्लसंयुतम् ।
मुहूर्तलिप्तमम्लैश्च सिञ्चेद्वातकफोत्तरे ॥ ३७ ॥
उत्तानं लेपनाभ्यङ्गपरिषेकावगाहनैः ।
विरेकास्थापनैः स्नेहपानैर्गम्भीरमाचरेत् ॥ ३८ ॥
वातश्लेष्मोत्तरे कोष्णा लेपाद्यास्तत्र शीतलैः ।
विदाहशोफरुक्कण्डूविवृद्धिः स्तम्भनाद्भवेत् ॥ ३९ ॥

---

१ 'मूत्रक्षारसुरापक्कं' इति पाठः. २ 'शुक्तं वा' इति पाठः. ३ 'सेकाभ्यङ्गाः' इति पाठः.

पित्तरक्तोत्तरे वातरक्ते लेपादयो हिमाः।
उष्णैः प्लोषोषरुग्रागस्वेदावदरणोद्भवः ॥ ४० ॥
मधुयष्ट्याः पलशतं कषाये पादशेषिते।
तैलाढकं समक्षीरं पचेत्कल्कैः पलोन्मितैः ॥ ४१ ॥
स्थिरातामलकीदूर्वापयस्याभीरुचन्दनैः।
लोहहंसपदीमांसीद्विमेदामधुपर्णिभिः ॥ ४२ ॥
काकोलीक्षीरकाकोलीशतपुष्पर्द्धिपद्मकैः।
जीवकर्षभजीवन्तीत्वक्पत्रनखवालकैः ॥ ४३ ॥
प्रपौण्डरीकमञ्जिष्ठासारिवैन्द्रीवितुन्नकैः।
चतुःप्रयोगं वातासृक्पित्तदाहज्वरार्तिनुत् ॥ ४४ ॥
बलाकल्ककषायाभ्यां तैलं क्षीरसमं पचेत्।
सहस्रशतपाकं तद्वातासृग्वातरोगनुत् ॥ ४५ ॥
रसायनं मुख्यतममिन्द्रियाणां प्रसादनम्।
जीवनं बृंहणं स्वर्यं शुक्रासृग्दोषनाशनम् ॥ ४६ ॥
कुपिते मार्गसंरोधान्मेदसो वा कफस्य वा।
अतिवृद्ध्यानिले शस्तं नादौ स्नेहनबृंहणम् ॥ ४७ ॥
कृत्वा तत्रावृतवातोक्तं वातशोणितिकं ततः।
भेषजं स्नेहनं कुर्याच्च रक्तप्रसादनम् ॥ ४८ ॥
प्राणादिकोपे युगपद्यथोद्दिष्टं यथामयम्।
यथासन्नं च भेषज्यं विकल्प्यं स्याद्यथाबलम् ॥ ४९ ॥

---

१ 'स्वेदापद' इति पाठः. २ हंसपदी–लाजरी. ३ 'स्तमा- दौ स्नेह' इत्यरुणः.

नीते निरामतां सामे स्वेदलङ्घनपाचनैः ।
रूक्षैश्चालेपसेकाद्यैः कुर्यात्केवलवातनुत् ॥ ५० ॥
शोषाक्षेपणसङ्कोचस्तम्भस्वपनकम्पनम् ।
हनुस्रंसोऽर्दितं खाञ्ज्यं पाङ्गुल्यं खुडवातता ॥ ५१ ॥
सन्धिच्युतिः पक्षवधो मेदोमज्जास्थिगा गदाः ।
एते स्थानस्य गाम्भीर्यात्सिध्येयुर्यत्नतो न वा ॥ ५२ ॥
तस्माज्जयेन्नवानेतान् बलिनो निरुपद्रवान् ।
वायौ पित्तावृते शीतामुष्णां च बहुशः क्रियाम् ॥ ५३ ॥
व्यत्यासाद्योजयेत्सर्पिर्जीवनीयं च पाययेत् ।
धन्वमांसं यवाः शालिर्विरेकः क्षीरवान्मृदुः ॥ ५४ ॥
सक्षीरा बस्तयः क्षीरं पञ्चमूलबलाशृतम् ।
कालेऽनुवासनं तैलं मधुरौषधसाधितम् ॥ ५५ ॥
यष्टीमधुबलातैलघृतक्षीरैश्च सेचनम् ।
पञ्चमूलकषायेण वारिणा शीतलेन च ॥ ५६ ॥
कफावृते यवान्नानि जाङ्गला मृगपक्षिणः ।
स्वेदास्तीक्ष्णा निरूहाश्च वमनं सविरेचनम् ॥ ५७ ॥
पुराणसर्पिस्तैलं च तिलसर्षपजं हितम् ।
संसृष्टे कफपित्ताभ्यां पित्तमादौ विनिर्जयेत् ॥ ५८ ॥
कारयेद्रक्तसंसृष्टे वाते शोणितिकीं क्रियाम् ।
स्वेदाभ्यङ्गरसाः क्षीरं स्नेहो मांसावृते हितः ॥ ५९ ॥
प्रमेहमेदोवातघ्नमाढ्यवाते भिषग्जितम् ।

महास्नेहोऽस्थिमज्जस्थे

पूर्वोक्तः रेतसावृते ॥ ६० ॥

अन्नावृते पाचनीयं वमनं दीपनं लघु ।
मूत्रावृते मूत्रलानि स्वेदा उत्तरबस्तयः ॥ ६१ ॥
एरण्डतैलं वर्चःस्थे बस्तिस्नेहाश्च भेदिनः ।
कफवाताविरुद्धं यद्यच्च वातानुलोमनम् ॥ ६२ ॥
सर्वस्थानावृते त्वाशु तत्कार्यं मातरिश्वनि ।
अनभिष्यन्दि च स्निग्धं स्रोतसां शुद्धिकारणम् ॥ ६३ ॥
पाचना बस्तयः प्रायो मधुराः सानुवासनाः ।
प्रसमीक्ष्य बलाधिक्यं मृदु [1]कायविरेचनम् ॥ ६४ ॥
रसायनानां सर्वेषामुपयोगः प्रशस्यते ।
शिलाह्वस्य विशेषेण पयसा शुद्धगुग्गुलोः ॥ ६५ ॥
लेहो वा [2]भार्गवस्तद्वदेकादश[3]सिताशितः ।
अपाने त्वावृते सर्वं दीपनं ग्राहि भेषजम् ॥ ६६ ॥
वातानुलोमनं कार्यं मूत्राशयविशोधनम् ।
इति सङ्क्षेपतः प्रोक्तमावृतानां चिकित्सितम् ॥ ६७ ॥
प्राणादीनां भिषक्कुर्याद्वितर्क्यं स्वयमेव तत् ।
उदानं योजयेदूर्ध्वमपानं चानुलोमयेत् ॥ ६८ ॥

---

१ 'कार्यं विरेचनम्' इति पाठः. २ 'भार्ङ्गवस्त' इत्यरुणः, ( भार्गवः=च्यवनप्राशावलेहः ). ३ 'सितासितः' इति पाठः.

समानं शमयेद्विद्वांस्त्रिधा व्यानं च योजयेत् ।
प्राणो रक्ष्यश्चतुर्भ्योऽपि तत्स्थितौ देहसंस्थितिः ॥ ६९ ॥
स्वं स्वं स्थानं नयेदेवं वृतान् वातान् विमार्गगान् ।
सर्वं चावरणं पित्तरक्तसंसर्गवर्जितम् ॥ ७० ॥
रसायनविधानेन लशुनो हन्ति शीलितः ।
पित्तावृते पित्तहरं मरुतश्चानुलोमनम् ॥ ७१ ॥
रक्तावृतेऽपि तद्वच्च खुडोक्तं यच्च भेषजम् ।
रक्तपित्तानिलहरं विविधं च रसायनम् ॥ ७२ ॥
यथानिदानं निर्दिष्टमिति सम्यक् चिकित्सितम् ।
आयुर्वेदफलं स्थानमेतत्सद्योऽर्तिनाशनम् ॥ ७३ ॥
चिकित्सितं हितं पथ्यं प्रायश्चित्तं भिषग्जितम् ।
भेषजं शमनं शस्तं पर्यायैः स्मृतमौषधम् ॥ ७४ ॥"

समाप्तमिदं चिकित्सितं स्थानम् ॥

# अष्टाङ्गहृदयम् ।

## कल्पस्थानम् ।

### प्रथमोऽध्यायः ।

अथाऽतो वमनकल्पं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"वमने मदनं श्रेष्ठं त्रिवृन्मूलं विरेचने ।
नित्यमन्यस्य तु व्याधिविशेषेण विशिष्टता ॥ १ ॥
फलानि तानि पाण्डूनि नचाऽतिहरितान्यपि ।
आददीयाऽह्नि प्रशस्तर्क्षे मध्ये ग्रीष्मवसन्तयोः ॥ २ ॥
प्रमृज्य कुशमुस्तोल्यां क्षिप्त्वा बद्ध्वा प्रलेपयेत् ।
गोमयेनानु मुस्तोलीं धान्यमध्ये निधापयेत् ॥ ३ ॥
मृदुभूतानि मध्विष्टगन्धानि कुशवेष्टनात् ।
निष्कृष्य निर्गतेऽष्टाहे शोषयेत्तान्यथातपे ॥ ४ ॥
तेषां ततः सुशुष्काणामुद्धृत्य फलपिप्पलीः ।
दधिमध्वाज्यपललैर्मृदित्वा शोषयेत्पुनः ॥ ५ ॥
ततः सुगुप्तं संस्थाप्य कार्यकाले प्रयोजयेत् ।
अथाऽऽदाय ततो मात्रां जर्जरीकृत्य वासयेत् ॥ ६ ॥

---

१ 'मध्विष्ट'इति पाठः.

शर्वरीं मधुयष्ट्या वा कोविदारस्य वा जले ।
कर्बुदारस्य बिम्ब्या वा नीपस्य विदुलस्य वा ॥ ७ ॥
शणपुष्प्याः सदापुष्प्याः प्रत्यक्पुष्प्युदकेऽथवा ।
ततः पिबेत्कषायं तं प्रातर्मृदितगालितम् ॥ ८ ॥
सूत्रोदितेन विधिना साधु तेन तथा वमेत् ।
श्लेष्मज्वरप्रतिश्यायगुल्मान्तर्विद्रधीषु च ॥ ९ ॥
प्रच्छर्दयेद्विशेषेण यावत्पित्तस्य दर्शनम् ।
फलपिप्पलिचूर्णं वा क्काथेन स्वेन भावितम् ॥ १० ॥
त्रिभागत्रिफलाचूर्णं कोविदारादिवारिणा ।
पिबेज्ज्वरारुचिष्ठीवग्रन्थ्यपच्यर्बुदोदरी ॥ ११ ॥
पित्ते कफस्थानगते जीमूतादिजलेन तत् ।
हृद्दाहेऽधोस्रपित्ते च क्षीरं तत्पिप्पलीशृतम् ॥ १२ ॥
क्षैरेयीं वा

कफच्छर्दिप्रसेकतमकेषु तु ।
दध्युत्तरं वा दधि वा तच्छृतक्षीरसम्भवम् ॥ १३ ॥
फलादिक्काथकल्काभ्यां सिद्धं तत्सिद्धदुग्धजम् ।
सर्पिः कफाभिभूतेऽग्नौ शुष्यद्देहे च वामनम् ॥ १४ ॥
स्वरसं फलमज्ज्ञो वा भल्लातकविधिशृतम् ।
आदर्वीलेपनात्सिद्धं लीढ्वा प्रच्छर्दयेत्सुखम् ॥ १५ ॥
तं लेहं भक्ष्यभोज्येषु तत्कषायांश्च योजयेत् ।

१ 'चिष्ठेवं ग्र' इति पाठः.

वत्सकादिप्रतीवापः कषायः फलमज्जजः ॥ १६ ॥
निम्बार्कान्यतरक्काथसमायुक्तो नियच्छति ।
बहुमूलानपि व्याधीन् सर्वान्सन्तर्पणोद्भवान् ॥ १७ ॥
शाठपुष्पफलश्लक्ष्णचूर्णैर्माल्यं सुरूषितम् ।
वमेन्मण्डरसादीनां तृप्तो जिघ्रन् सुखं सुखी ॥ १८ ॥
एवमेव फलाभावे कल्प्यं पुष्पं शलाटु वा ।
जीमूताद्याश्च फलवत्

जीमूतं तु विशेषतः ॥ १९ ॥
प्रयोक्तव्यं ज्वरश्वासकासहिध्मादिरोगिणाम् ।
पयः पुष्पेऽस्य निर्वृत्ते फले पेया पयस्कृता ॥ २० ॥
लोमशे क्षीरसन्तानं दध्युत्तरमलोमशे ।
शृते पयसि दध्यम्लं जातं हरितपाण्डुके ॥ २१ ॥
आसुत्य वारुणीमण्डं पिबेन्मृदितगालितम् ।
कफादरोचके कासे पाण्डुत्वे राजयक्ष्मणि ॥ २२ ॥
इयं च कल्पना कार्या तुम्बीकोशातकीष्वपि ।
पर्यागतानां शुष्काणां फलानां वेणिजन्मनाम् ॥ २३ ॥
चूर्णस्य पयसा शुक्तिं वातपित्तार्दितः पिबेत् ।
द्वे वा त्रीण्यपि वाऽऽपोथ्य क्काथे तिक्तोत्तमस्य वा ॥२४॥
आरग्वधादिनवकादासुत्यान्यतमस्य वा ।
विमृद्य पूतं तं क्काथं पित्तश्लेष्मज्वरी पिबेत् ॥ २५ ॥
जीमूतकल्कं चूर्णं वा पिबेच्छीतेन वारिणा ।

---

१ 'तच्चूर्णं कल्कं वा' इति पदव्यत्यासः क्वचित्.

ज्वरे पैत्ते कवोष्णेन कफवातात्कफादपि ॥ २६ ॥
कासश्वासविषच्छर्दिज्वरार्ते कफकर्षिते । [1]
इक्ष्वाकुर्वमने शस्तः प्रताम्यति च मानवे ॥ २७ ॥
फलपुष्पविहीनस्य प्रवालैस्तस्य साधितम् ।
पित्तश्लेष्मज्वरे क्षीरं पित्तोद्रिक्ते प्रयोजयेत् ॥ २८ ॥
हृतमध्ये फले जीर्णे स्थितं क्षीरं यदा दधि ।
स्यात्तदा कफजे कासश्वासे वम्यां च पाययेत् ॥ २९ ॥ [2]
मस्तुना वा फलान्मध्यं पाण्डुकुष्ठविषार्दितः ।
तेन तक्रं विपक्कं वा पिबेत्समधुसैन्धवम् ॥ ३० ॥
भावयित्वाऽऽजदुग्धेन बीजं तेनैव वा पिबेत् ।
विषगुल्मोदरग्रन्थिगण्डेषु श्लीपदेषु च ॥ ३१ ॥
सक्तुभिर्वा पिबेन्मन्थं तुम्बीस्वरसभावितैः ।
कफोद्भवे ज्वरे कासे गलरोगेष्वरोचके ॥ ३२ ॥
गुल्मे ज्वरे प्रसक्ते च कल्कं मांसरसैः पिबेत् ।
नरः साधु वमत्येवं न च दौर्बल्यमश्नुते ॥ ३३ ॥
तुम्ब्याः फलरसैः शुष्कैः सपुष्पैरवचूर्णितम् ।
छर्दयेन्माल्यमाघ्राय गन्धसम्पत्सुखोचितः ॥ ३४ ॥
कासगुल्मोदरगरे वाते श्लेष्माशयस्थिते ।
कफे च कण्ठवक्त्रस्थे कफसञ्चयजेषु च ॥ ३५ ॥
धामार्गवो गदेष्विष्टः स्थिरेषु च महत्सु च ।
जीवकर्षभकौ वीरा कपिकच्छूः शतावरी ॥ ३६ ॥

---

१ 'कफकर्शिते' इति पाठः. २ 'वम्यं(वमनार्थं)च' इत्यरुणः.

काकोली श्रावणी मेदा महामेदा मधूलिका ।
तद्रजोभिः पृथग्लेहा धामार्गवरजोऽन्विताः ॥ ३७ ॥
कासे हृदयदाहे च शस्ता मधुसिताद्रुताः ।
ते सुखाम्भोनुपानाः स्युः पित्तोष्मसहिते कफे ॥ ३८ ॥
धान्यतुम्बरुयूषेण कल्कस्तस्य विषापहः ।
बिम्ब्याः पुनर्नवाया वा कासमर्दस्य वा रसे ॥ ३९ ॥
एकं धामार्गवं द्वे वा मानसे मृदितं पिबेत् ।
तच्छृतक्षीरजं सर्पिः साधितं वा फलादिभिः ॥ ४० ॥
क्ष्वेडोऽतिकटुतीक्ष्णोष्णः प्रगाढेषु प्रशस्यते ।
कुष्ठपाण्ड्वामयप्लीहशोफगुल्मगरादिषु ॥ ४१ ॥
पृथक् फलादिषट्कस्य क्वाथे मांसमनूपजम् ।
कोशातक्या समं सिद्धं तद्रसं लवणं पिबेत् ॥ ४२ ॥
फलादिपिप्पलीतुल्यं सिद्धं क्ष्वेडरसेऽथवा ।
क्ष्वेडक्वाथे पिबेत्सिद्धं मिश्रमिक्षुरसेन वा ॥ ४३ ॥
कुटजं सुकुमारेषु पित्तरक्तकफोदये ।
ज्वरे विसर्पे हृद्रोगे खुडे कुष्ठे च पूजितम् ॥ ४४ ॥
सर्षपाणां मधूकानां तोयेन लवणस्य वा ।
पाययेत्कौटजं बीजं युक्तं कृशरयाऽथवा ॥ ४५ ॥
ससाहं वाऽर्कदुग्धाक्तं तच्चूर्णं पाययेत्पृथक् ।
फलजीमूतकेक्ष्वाकुजीवन्तीजीवकोदकैः ॥ ४६ ॥
वमनौषधमुख्यानामिति कल्पदिगीरिता ।
बीजेनानेन मतिमानन्यान्यपि च कल्पयेत् ॥ ४७ ॥"

## द्वितीयोऽध्यायः ।

अथाऽतो विरेचनकल्पं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"कषाया मधुरा रूक्षा विपाके कटुका त्रिवृत् ।
कफपित्तप्रशमनी रौक्ष्याच्चानिलकोपनी ॥ १ ॥
सेदानीमौषधैर्युक्ता वातपित्तकफापहैः ।
कल्पवैशेष्यमासाद्य जायते सर्वरोगजित् ॥ २ ॥
द्विधा ख्यातं च तन्मूलं श्यामं श्यामारुणं त्रिवृत् ।
त्रिवृदाख्यं वरतरं निरपायं सुखं तयोः ॥ ३ ॥
सुकुमारे शिशौ वृद्धे मृदुकोष्ठे च तद्धितम् ।
मूर्च्छासम्मोहहृत्कण्ठकर्षणक्षपणप्रदम् ॥ ४ ॥
श्यामं तीक्ष्णाशुकारित्वादतस्तदपि शस्यते ।
क्रूरे कोष्ठे बहौ दोषे क्लेशक्षमिणि चातुरे ॥ ५ ॥
गम्भीरानुगतं श्लक्ष्णमतिर्यग्विसृतं च यत् ।
गृहीत्वा विसृजेत्काष्ठं त्वचं शुष्कां निधापयेत् ॥ ६ ॥
अथ काले तु तच्चूर्णं किंचिन्नागरसैन्धवम् ।
वातामये पिबेदम्लैः पित्ते साज्यसितामधु ॥ ७ ॥
क्षीरद्राक्षेक्षुकाश्मर्यस्वादुस्कन्धवरारसैः ।
कफामये पीलुरसमूत्रमद्याम्लकाञ्जिकैः ॥ ८ ॥
पञ्चकोलादिचूर्णैश्च युक्त्या युक्तं कफापहैः ।
त्रिवृत्कल्ककषायेण साधितः ससितो हिमः ॥ ९ ॥

मधुत्रिजातसंयुक्तो लेहो हृद्यं विरेचनम् ।
अजगन्धा तवक्षीरी विदारी शर्करा त्रिवृत् ॥ १० ॥
चूर्णितं मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते ।
सन्निपातज्वरस्तम्भपिपासादाहपीडितः ॥ ११ ॥
लिम्पेदन्तस्त्रिवृतया द्विधा कृत्वेक्षुगण्डिकाम्[1] ।
एकीकृत्य च[2] तस्विन्नं पुटपाकेन भक्षयेत् ॥ १२ ॥
त्वगेलाभ्यां समा नीली तैस्त्रिवृत्तैश्च शर्करा ।
चूर्णं फलरसक्षौद्रसक्तुभिस्तर्पणं पिबेत् ॥ १३ ॥
वातपित्तकफोत्थेषु रोगेष्वल्पानलेषु च ।
नरेषु सुकुमारेषु निरपायं विरेचनम् ॥ १४ ॥
विडङ्गतण्डुलवरायावशूककणास्त्रिवृत् ।
सर्वेभ्योऽर्धेन तल्लीढं मध्वाज्येन गुडेन वा ॥ १५ ॥
गुल्मं प्लीहोदरं कासं हलीमकमरोचकम् ।
कफवातकृतांश्चान्यान् परिमार्ष्टि गदान्बहून् ॥ १६ ॥
विडङ्गपिप्पलीमूलत्रिफलाधान्यचित्रकम् ।
मरिचेन्द्रयवाजाजीपिप्पलीहस्तिपिप्पलीः ॥ १७ ॥
दीप्यकं पञ्चलवणं चूर्णितं कार्षिकं पृथक् ।
तिलतैलत्रिवृच्चूर्णभागौ चाष्टपलोन्मितौ ॥ १८ ॥
धात्रीफलरसप्रस्थांस्त्रीन् गुडार्धतुलान्वितान् ।
पक्त्वा मृद्वग्निना खादेत्ततो मात्रामयन्त्रणः ॥ १९ ॥

---

१ 'क्षुगण्डिकाः' इति पाठः. २ 'पचेत्स्विन्न' इति पाठः.

कुष्ठार्शःकामलागुल्ममेहोदरभगन्दरान् ।
ग्रहणीपाण्डुरोगांश्च हन्ति पुंसवनश्च सः ॥ २० ॥
गुदः कल्याणको नाम सर्वेष्वृतुषु यौगिकः ।
व्योषत्रिजातकाम्भोदकृमिघ्नामलकैस्त्रिवृत् ॥ २१ ॥
सर्वैः समा समसिता क्षौद्रेण गुटिकाः कृताः ।
मूत्रकृच्छ्रज्वरच्छर्दिकासशोषभ्रमक्षये ॥ २२ ॥
तापे पाण्ड्वामयेऽल्पेऽग्नौ शस्ताः सर्वविषेषु च ।
त्रिवृता कौटजं बीजं पिप्पली विश्वभेषजम् ॥ २३ ॥
क्षौद्रद्राक्षारसोपेतं वर्षाकाले विरेचनम्, ।
त्रिवृद्दुरालभामुस्ताशर्करोदीच्यचन्दनम् ॥ २४ ॥
द्राक्षाम्बुना सयष्ट्याह्वसातलं जलदात्यये, ।
त्रिवृतां चित्रकं पाठामजाजीं सरलं वचाम् ॥ २५ ॥
स्वर्णक्षीरीं च हेमन्ते चूर्णमुष्णाम्बुना पिबेत्, ।
त्रिवृता शर्करातुल्या ग्रीष्मकाले विरेचनम्, ॥ २६ ॥
त्रिवृत्त्रायन्तिहपुषासप्तलाकटुरोहिणीः ।
स्वर्णक्षीरीं च सञ्चूर्ण्य गोमूत्रे भावयेत्त्र्यहम् ॥ २७ ॥
एष सर्वर्तुको योगः स्निग्धानां मलदोषहृत् ।
श्यामात्रिवृद्दुरालभाहस्तिपिप्पलिवत्सकम् ॥ २८ ॥
नीलिनीकटुकामुस्ताश्रेष्ठायुक्तं सुचूर्णितम् ।
रसाज्योष्णाम्बुभिः शस्तं रूक्षाणामपि सर्वदा ॥ २९ ॥
ज्वरहृद्रोगवाताऽसृगुदावर्तादिरोगिषु ।

राजवृक्षोऽधिकं पथ्यो मृदुर्मधुरशीतलः ॥ ३० ॥
बाले वृद्धे क्षते क्षीणे सुकुमारे च मानवे ।
योज्यो मृद्वनपायित्वाद्विशेषाच्चतुरङ्गुलः ॥ ३१ ॥
फलकाले परिणतं फलं तस्य समाहरेत् ।
तेषां गुणवतां भारं सिकतासु विनिक्षिपेत् ॥ ३२ ॥
सप्तरात्रात्समुद्धृत्य शोषयेदातपे[1] ततः ।
ततो मज्जानमुद्धृत्य शुचौ पात्रे निधापयेत् ॥ ३३ ॥
द्राक्षारसेन तं दद्याद्दाहोदावर्तपीडिते ।
चतुर्वर्षे सुखं बाले यावद्द्वादशवार्षिके ॥ ३४ ॥
चतुरङ्गुलमज्ज्ञो वा कषायं पाययेद्धिमम् ।
दधिमण्डसुरामण्डधात्रीफलरसैः पृथक् ॥ ३५ ॥
सौवीरकेण वा युक्तं कल्केन त्रैवृतेन वा ।
दन्तीकषाये तन्मज्ज्ञो गुडं जीर्णं च निक्षिपेत् ॥ ३६ ॥
तमरिष्टं स्थितं मासं पाययेत् पक्षमेव वा ।
त्वचं तिल्वकमूलस्य त्यक्त्वाऽऽभ्यन्तरवल्कलम् ॥ ३७ ॥
विशोष्य चूर्णयित्वा च द्वौ भागौ गालयेत्ततः ।
रोध्रस्यैव कषायेण तृतीयं तेन भावयेत् ॥ ३८ ॥
कषाये दशमूलस्य तं भागं भावितं पुनः ।
शुष्कं चूर्णं पुनः कृत्वा ततः पाणितलं पिबेत् ॥ ३९ ॥
मस्तुमूत्रसुरामण्डकोलधात्रीफलाम्बुभिः ।
तिल्वकस्य कषायेण कल्केन च सशर्करः ॥ ४० ॥

---

१ 'षयेच्चातपे' इति पाठः.

सघृतः साधितो लेहः स च श्रेष्ठं विरेचनम् ।
सुधा भिनत्ति दोषाणां महान्तमपि सञ्चयम् ॥ ४१ ॥
आश्वेव कष्टविभ्रंशाच्चैव तां कल्पयेदतः ।
मृदौ कोष्ठेऽबले बाले स्थविरे दीर्घरोगिणि ॥ ४२ ॥
कल्प्या गुल्मोदरगरत्वग्रोगमधुमेहिषु ।
पाण्डौ दूषीविषे शोफे दोषविभ्रान्तचेतसि ॥ ४३ ॥
सा श्रेष्ठा कण्टकैस्तीक्ष्णैर्बहुभिश्च समाचिता ।
द्विवर्षां वा त्रिवर्षां वा शिशिरान्ते विशेषतः ॥ ४४ ॥
तां पाटयित्वा शस्त्रेण क्षीरमुद्धारयेत्ततः ।
बिल्वादीनां बृहत्योर्वा क्राथेन सममेकशः ॥ ४५ ॥
मिश्रयित्वा सुधाक्षीरं ततोऽङ्गारेषु शोषयेत् ।
पिबेत्कृत्वा तु गुटिकां मस्तुमूत्रसुरादिभिः ॥ ४६ ॥
त्रिवृतादीश्च वरां स्वर्णक्षीरीं ससातलाम् ।
सप्ताहं स्नुक्पयःपीतान् रसेनाज्येन वा पिबेत् ॥ ४७ ॥
तद्वद्घोषोत्तमाकुम्भनिकुम्भादीन् गुडाम्बुना ।
नातिशुष्कं फलं ग्राह्यं शङ्खिन्या निस्तुषीकृतम् ॥ ४८ ॥
सप्तलायास्तथा मूलं ते तु तीक्ष्णविकाषिणी ।
श्लेष्मामयोदरगरश्वयथ्वादिषु कल्पयेत् ॥ ४९ ॥
अक्षमात्रं तयोः पिण्डं मदिरालवणान्वितम् ।
हृद्रोगे वातकफजे तद्वद्गुल्मे प्रयोजयेत् ॥ ५० ॥

१ 'कोष्ठविभ्रंशा' इति क्वचित्.

दन्तिदन्तस्थिरं स्थूलं मूलं दन्तीद्रवन्तिजम् ।
आवाम्रश्यावतीक्ष्णोष्णमाशुकारि विकाषि च ॥ ५१ ॥
गुरु प्रकोपि वातस्य पित्तश्लेष्मविलायनम् ।
तत्क्षौद्रपिप्पलीलिप्तं स्वेद्यं मृद्भवेष्टितम् ॥ ५२ ॥
शोष्यं मन्दातपेऽग्न्यर्कौ हतो ह्यस्य विकाषिताम् ।
तत्पिबेन्मस्तुमदिरातक्रपीलुरसासवैः ॥ ५३ ॥
अभिष्यण्णतनुर्गुल्मी प्रमेही जठरी गरी ।
गोमृगाजरसैः पाण्डुः कृमिकोष्ठी भगन्दरी ॥ ५४ ॥
सिद्धं तत्क्वाथकल्काभ्यां दशमूलरसेन च ।
विसर्पविद्रध्यलजीकक्षादाहान् जयेद्घृतम् ॥ ५५ ॥
तैलं तु गुल्ममेहार्शोविबन्धकफमारुतान् ।
महास्नेहः शकृच्छुक्रवातसङ्गानिलव्यथाः ॥ ५६ ॥
विरेचने मुख्यतमा नवैते त्रिवृदादयः ।
हरीतकीमपि त्रिवृद्विधानेनोपकल्पयेत् ॥ ५७ ॥
गुडस्याष्टपले पथ्याविंशतिः स्यात्पलं पलम् ।
दन्तीचित्रकयोः कर्षौ पिप्पलीत्रिवृतोर्दश ॥ ५८ ॥
प्रकल्प्य मोदकानेवं दशमे दशमेऽहनि ।
उष्णाम्भोऽनु पिबेत्खादेत्तान्सर्वान्विधिनाऽमुना ॥ ५९ ॥
एते निःपरिहाराः स्युः सर्वव्याधिनिबर्हणाः ।
विशेषाद्ग्रहणीपाण्डुकण्डूकोठार्शसां हिताः ६० ॥
अल्पस्याऽपि महार्थत्वं प्रभूतस्याऽल्पकर्मताम् ।

---

१ 'विकाशि' इति पाठः. २ 'अभिष्यन्न' इति पाठः.

कुर्यात्संश्लेषविश्लेषकालसंस्कारयुक्तिभिः ॥ ६१ ॥
त्वक्केसराम्रातकदाडिमैला-
सितोपलामाक्षिकमातुलुङ्गैः ।
मद्यैश्च तैस्तैश्च मनोनुकूलै-
र्युक्तानि देयानि विरेचनानि ॥ ६२ ॥"

---

## तृतीयोऽध्यायः ।

अथाऽतो वमनविरेचनव्यापत्सिद्धिं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"वमनं मृदुकोष्ठेन क्षुद्वताऽल्पकफेन वा ।
अतितीक्ष्णहिमस्तोकमजीर्णे दुर्बलेन वा ॥ १ ॥
पीतं प्रयात्यधस्तस्मिन्निष्टहानिर्मलोदयः ।
वामयेत्तं पुनः स्निग्धं स्मरन् पूर्वमतिक्रमम् ॥ २ ॥
अजीर्णिनः श्लेष्मवतो व्रजत्यूर्ध्वं विरेचनम् ।
अतितीक्ष्णोष्णलवणमहृद्यमतिभूरि वा ॥ ३ ॥
तत्र पूर्वोदिता व्यापत्सिद्धिश्च न तथापि चेत् ।
आशये तिष्ठति ततस्तृतीयं नावचारयेत् ॥ ४ ॥
अन्यत्र सात्म्याद्धृद्याद्वा भेषजात्स्निग्धपायतः ।
अस्निग्धस्विन्नदेहस्य पुराणं रूक्षमौषधम् ॥ ५ ॥
दोषानुत्क्लेश्य निर्हर्तुमशक्तं जनयेद्गदान् ।

---

१ 'अस्निग्धास्विन्न' इति क्वचित्.

चि[1]भ्रंशं श्वयथुं हिध्मां तमसो दर्शनं तृषम् ॥ ६ ॥
पिण्डिकोद्वेष्टनं कण्डूमूर्वोः सादं विवर्णताम् ।
स्निग्धस्विन्नस्य वाऽत्यल्पं दीप्ताग्नेर्जीर्णमौषधम् ॥ ७ ॥
शीतैर्वा स्तब्धमामे वा तमु[2]त्क्लेश्याहरन्मलान् ।
तानेव जनयेद्रोगानयोगः सर्व एव सः ॥ ८ ॥
तं तैललवणाभ्यक्तं स्विन्नं [3]संस्तरसङ्करैः ।
निरूढं जाङ्गलरसैर्भोजयित्वाऽनुवासयेत् ॥ ९ ॥
फलमागधिकादारुसिद्धतैलेन मात्रया ।
स्निग्धं वातहरैः स्नेहैः पुनस्तीक्ष्णेन शोधयेत् ॥ १० ॥
बहुदोषस्य रूक्षस्य मन्दाग्नेरल्पमौषधम् ।
सोदावर्तस्य चोत्क्लेश्य दोषान्मार्गं निरुध्य तैः ॥ ११ ॥
भृशमाध्मापयेन्नाभिं पृष्ठपार्श्वशिरोरुजम् ।
श्वासं विण्मूत्रवातानां सङ्गं कुर्याच्च दारुणम् ॥ १२ ॥
अभ्यङ्गस्वेदवर्त्यादिसनिरूहानुवासनम् ।
उदावर्तहरं सर्वं कर्माऽऽध्मातस्य शस्यते ॥ १३ ॥

---

१ 'विभ्रंश' इति पाठः २ 'मुत्क्लेश्य हरेन्म' इति पाठः.

३ संस्तरसङ्करा तु ऊष्मस्वेदपिण्डस्वेदनामभ्यां व्यवह्रियेते; चरकस्तु–'तत्र वस्त्रान्तरितैरवस्त्रान्तरितैर्वा पिण्डैर्यथोक्तैरुपस्वेदनं सङ्करस्वेदः, शूकशमीधान्यपुलाकानां वेशवारायसकृशरोत्कारिकादीनां वा प्रस्तरे······ स्वभ्यक्तसर्वगात्रस्य शयानस्योपरि स्वेदनं प्रस्तरस्वेदः'; 'प्रस्तरशङ्करैः' इत्यपि पाठः.

पञ्चमूलयवक्षारवचाभूतिकसैन्धवैः ।
यवागूः सुकृता शूलविबन्धानाहनाशनी ॥ १४ ॥
पिप्पलीदाडिमक्षारहिङ्गुशुण्ठ्यम्लवेतसान् ।
ससैन्धवान्पिबेन्मद्यैः सर्पिषोष्णोदकेन वा ॥ १५ ॥
प्रवाहिकापरिस्रावे वेदनापरिकर्तने ।
पीतौषधस्य वेगानां निग्रहान्मारुतादयः ॥ १६ ॥
कुपिता हृदयं गत्वा घोरं कुर्वन्ति हृद्ग्रहम् ।
हिध्मापार्श्वरुजाकासदैन्यलालाक्षिविभ्रमैः ॥ १७ ॥
जिह्वां खादति निःसंज्ञो दन्तान्कटकटाययन् ।
न गच्छेद्विभ्रमं तत्र वामयेदाशु तं भिषक् ॥ १८ ॥
मधुरैः पित्तमूर्छार्तं कटुभिः कफमूर्छितम् ।
पाचनीयैस्ततश्चास्य दोषशेषं विपाचयेत् ॥ १९ ॥
कायाऽग्निं च बलं चास्य क्रमेणाऽभिप्रवर्धयेत् ।
पवनेनाऽतिवमतो हृदयं यस्य पीड्यते । ॥ २० ॥
तस्मै स्निग्धाम्ललवणं दद्यात्पित्तकफेऽन्यथा ।
पीतौषधस्य वेगानां निग्रहेण कफेन वा ॥ २१ ॥
रुद्धोऽति वा विशुद्धस्य गृह्णात्यङ्गानि मारुतः ।
स्तम्भवेपथुनिस्तोदसादोद्वेष्टार्तिभेदनैः ॥ २२ ॥
तत्र वातहरं सर्वं स्नेहस्वेदादि शस्यते ।
बहुतीक्ष्णं क्षुधार्तस्य मृदुकोष्ठस्य भेषजम् ॥ २३ ॥
हत्वाऽऽशु विट्पित्तकफान्धातून्स्रावयेद्द्रवान् ।

तत्रातियोगे मधुरैः शेषमौषधमुल्लिखेत् ॥ २४ ॥
योज्योऽतिवमने रेको, विरेके वमनं मृदु ।
परिषेकावगाहाद्यैः सुशीतैः स्तम्भयेच्च तम् ॥ २५ ॥
अञ्जनं चन्दनोशीरमज्जासृक्शर्करोदकम् ।
लाजचूर्णैः पिबेन्मन्थमतियोगहरं परम् ॥ २६ ॥
वमनस्याऽतियोगे तु शीताम्बुपरिषेचितः ।
पिबेत्फलरसैर्मन्थं सघृतक्षौद्रशर्करम् ॥ २७ ॥
सोद्गारायां भृशं छर्द्यां मूर्वाया धान्यमुस्तयोः ।
समधूकाञ्जनं चूर्णं लेहयेन्मधुसंयुतम् ॥ २८ ॥
वमतोऽन्तःप्रविष्टायां जिह्वायां कवलग्रहाः ।
स्निग्धाम्ललवणा हृद्या यूषमांसरसा हिताः ॥ २९ ॥
फलान्यम्लानि खादेयुस्तस्य चान्येऽग्रतो नराः ।
निःसृतां तु तिलद्राक्षाकल्कलिप्तां प्रवेशयेत् ॥ ३० ॥
वाग्ग्रहानिलरोगेषु घृतमांसोपसाधिताम् ।
यवागूं तनुकां दद्यात्स्नेहस्वेदौ च कालवित् ॥ ३१ ॥
अतियोगाच्च भैषज्यं जीवं हरति शोणितम् ।
तज्जीवादानमित्युक्तमादत्ते जीवितं यतः ॥ ३२ ॥
शुने काकाय वा दद्यात्तेनान्नमसृजा सह ।
भुङ्क्ते तस्मिन् वदेज्जीवमभुङ्क्ते पित्तमादिशेत् ॥ ३३ ॥
शुक्लं वा भावितं वस्त्रमावानं कोष्णवारिणा ।

---

१ 'शीरमज्जासृक्' इति पाठः.

प्रक्षालितं विवर्णं स्यात्पित्ते शुद्धं तु शोणिते ॥ ३४ ॥
तृष्णामूर्च्छामदार्तस्य कुर्यादामरणं क्रियाम् ।
रक्तपित्तातिसारघ्नीं तस्याशु प्राणरक्षणीम् ॥ ३५ ॥
मृगगोमहिषाजानां सद्यस्कं जीवतामसृक् ।
पिबेज्जीवाभिसन्धानं जीवं तद्ध्याशु गच्छति[1] ॥ ३६ ॥
तदेव दर्भमृदितं रक्तं बस्तौ निषेचयेत् ।
श्यामाकाश्मर्यमधुकदूर्वोशीरैः शृतं पयः ॥ ३७ ॥
घृतमण्डाञ्जनयुतं बस्तिं वा योजयेद्धिमम् ।
पिच्छाबस्तिं सुशीतं वा घृतमण्डानुवासनम् ॥ ३८ ॥
गुदं भ्रष्टं कषायैश्च स्तम्भयित्वा प्रवेशयेत् ।
विसंज्ञं श्रावयेत्सामवेणुगीतादिनिस्वनम् ॥ ३९ ॥"

---

## चतुर्थोऽध्यायः ।

अथाऽतो दोषहरणसाकल्यं[2] बस्तिकल्पं
व्याख्यास्यामः ।

इति ह स्माहुरात्रेयादयो महर्षयः ।

"बलां गुडूचीं त्रिफलां सरास्नां
द्विपञ्चमूलं च पलोन्मितानि ।
अष्टौ फलान्यर्धतुलां च मांसा-
च्छागात्पचेदप्सु चतुर्थशेषम् ॥ १ ॥

---

१ 'यच्छति' इति पाठः. २ 'दोषहरणसाकल्य'मिति क्वचिन्न पठ्यते.

पूतो यवानीफलबिल्वकुष्ठ-
वचाशताह्वाघनपिप्पलीनाम् ।
कल्कैर्गुडक्षौद्रघृतैः सतैलै-
र्युक्तः सुखोष्णो लवणान्वितश्च ॥ २ ॥

बस्तिः परं सर्वगदप्रमाथी
स्वस्थे हितो जीवनबृंहणश्च ।
बस्तौ च यस्मिन्पठितो न कल्कः
सर्वत्र दद्यादमुमेव तत्र ॥ ३ ॥

द्विपञ्चमूलस्य रसोऽम्लयुक्तः
सच्छागमांसस्य सपूर्वकल्कः ।
त्रिस्नेहयुक्तः प्रवरो निरूहः
सर्वानिलव्याधिहरः प्रदिष्टः ॥ ४ ॥

बलापटोलीलघुपञ्चमूल-
त्रायन्तिकैरण्डयवात्सुसिद्धात् ।
प्रस्थो रसाच्छागरसार्धयुक्तः
साध्यः पुनः प्रस्थसमः स यावत् ॥ ५ ॥

प्रियङ्गुकृष्णाघनकल्कयुक्तः
सतैलसर्पिर्मधुसैन्धवश्च ।
स्याद्दीपनो मांसबलप्रदश्च
चक्षुर्बलं चोपदधाति सद्यः ॥ ६ ॥

एरण्डमूलात्त्रिपलं पलाशा-
त्तथा पलांशं लघुपञ्चमूलम् ।

रास्नावृचाच्छिन्नरुहाश्वगन्धा-
पुनर्नवारग्वधदेवदारु ॥ ७ ॥
फलानि चाऽष्टौ सलिलाढकाभ्यां
विपाचयेदष्टमशेषितेऽस्मिन् ।
वचाशताह्वाह्वपुषाप्रियङ्गु-
यष्टीकणावत्सकबीजमुस्तम् ॥ ८ ॥
दध्यात्सुपिष्टं सहतार्क्ष्यशैल-
मक्षप्रमाणं लवणांशयुक्तम् ।
समाक्षिकस्तैलयुतः समूत्रो
बस्तिर्जयेल्लेखनदीपनोऽसौ ॥ ९ ॥
जङ्घोरुपादत्रिकपृष्ठकोष्ठ-
हृद्गुह्यशूलं गुरुतां विबन्धम् ।
गुल्माश्मवर्ध्मग्रहणीगुदोत्थां-
स्तांस्तांश्च रोगान्कफवातजातान् ॥ १० ॥
यष्ट्याह्वरोध्राभयचन्दनैश्च
शृतं पयोऽग्र्यं कमलोत्पलैश्च ।
सशर्कराक्षौद्रघृतं सुशीतं
पित्तामयान्हन्ति सजीवनीयम् ॥ ११ ॥
रास्नां वृषं लोहितिकामनन्तां
बलां कनीयस्तृणपञ्चमूल्यौ ।

---

१ 'बलाच्छिन्न' इति पाठः.

गोपाङ्गनाचन्दनपद्मकर्द्धि-
   यष्ट्याह्वरोध्राणि पलार्धकानि ॥ १२ ॥
निःक्वाथ्य तोयेन रसेन तेन
   शृतं पयोऽर्धाढकमम्बुहीनम् ।
जीवन्तिमेदर्द्धिवरीविदारी-
   वीराह्विकाकोलिकसेरुकाभिः ॥ १३ ॥
सितोपलाजीवकपद्मरेणु-
   प्रपौण्डरीकोत्पलपुण्डरीकैः ।
लोहात्मगुप्तामधुयष्टिकाभि-
   र्नागाह्वमुञ्जातकचन्दनैश्च ॥ १४ ॥
पिष्टैर्घृतक्षौद्रयुतैर्निरूहं
   ससैन्धवं शीतलमेव दद्यात् ।
प्रत्यागते धन्वरसेन शालीन्
   क्षीरेण वाऽद्यात्परिषिक्तगात्रः ॥ १५ ॥
दाहातिसारप्रदरास्रपित्त-
   हृत्पाण्डुरोगान्विषमज्वरं च ।
सगुल्ममूत्रग्रहकामलादीन्
   सर्वामयान् पित्तकृतान्निहन्ति ॥ १६ ॥
कोशातकारग्वधदेवदारु-
   मूर्वाश्वदंष्ट्राकुटजार्कपाठाः ।
पक्त्वा कुलत्थान्बृहतीं च तोये
   रसस्य तस्य प्रसृता दश स्युः ॥ १७ ॥

तान् सर्षपैलामदनैः सकुष्ठै-
रक्षप्रमाणैः प्रसृतैश्च युक्तान् ।
क्षौद्रस्य तैलस्य फलाह्वयस्य
क्षारस्य तैलस्य च[1] सार्षपस्य ॥ १८ ॥
दद्यान्निरूहं कफरोगिताय
मन्दाग्नये चाशनविद्विषे च ।
वक्ष्ये मृदून्स्नेहकृतो निरूहान्
सुखोचितानां प्रसृतैः पृथक् स्युः ॥ १९ ॥
अथेमान्सुकुमाराणां निरूहान् स्नेहनान्मृदून् ।
कर्मणा विप्लुतानां तु वक्ष्यामि प्रसृतैः पृथक् ॥ २० ॥
क्षीराद् द्वौ प्रसृतौ कार्यौ मधुतैलघृतास्त्रयः ।
खजेन मथितो बस्तिर्वातघ्नो बलवर्णकृत् ॥ २१ ॥
एकैकः प्रसृतस्तैलप्रसन्नाक्षौद्रसर्पिषाम् ।
बिल्वादिमूलक्वाथाद् द्वौ कौलत्थाद् द्वौ स
वातजित् ॥ २२ ॥
पटोलनिम्बभूतीकरास्नासप्तच्छदाम्भसः ।
प्रसृतः पृथगाज्याच्च बस्तिः सर्षपकल्कवान् ॥ २३ ॥
सपञ्चतिक्तोऽभिष्यन्दकृमिकुष्ठप्रमेहहा ।
चत्वारस्तैलगोमूत्रदधिमण्डाम्लकाञ्जिकात् ॥ २४ ॥
प्रसृताः सर्षपैः पिष्टैर्विट्सङ्गानाहभेदनः ।
पयस्येक्षुस्थिरारास्नाविदारीक्षौद्रसर्पिषाम् ॥ २५ ॥

---

१ 'ससर्पिषश्च' इति पाठः.

ऐकैकः[1] प्रसृतो बस्तिः कृष्णाकल्को वृषत्वकृत् ।
सिद्धबस्तीनतो वक्ष्ये सर्वदा यान्प्रयोजयेत् ॥ २६ ॥
निर्व्यापदो बहुफलान् बलपुष्टिकरान् सुखान् ।
मधुतैले समे कर्षः सैन्धवाद्द्विपिचुर्मिसिः ॥ २७ ॥
एरण्डमूलक्काथेन निरूहो माधुतैलिकः ।
रसायनं प्रमेहार्शःकृमिगुल्मान्त्रवृद्धिनुत् ॥ २८ ॥
सयष्टिमधुकश्चैष चक्षुष्यो रक्तपित्तजित् ।
यापनो घनकल्केन मधुतैलरसाज्यवान् ॥ २९ ॥
पायुजङ्घोरुवृषणबस्तिमेहनशूलजित् ।
प्रसृतांशैर्घृतक्षौद्रवसातैलैः प्रकल्पयेत् ॥ ३० ॥
यापनं सैन्धवार्धाक्षहपुषार्धपलान्वितम् ।
एरण्डमूलनिःक्काथो मधुतैलः ससैन्धवः ॥ ३१ ॥
एष युक्तरथो[2] बस्तिः सवचापिप्पलीफलः ।
स क्काथो मधु षड्ग्रन्था शताह्वा हिङ्गु सैन्धवः ॥ ३२ ॥
सुरदा च[3] रास्नाबस्तिर्दोषहरः परः ।
पञ्चमूलस्य निःक्काथस्तैलं मागधिका मधु ॥ ३३ ॥
ससैन्धवः समधुकः सिद्धबस्तिरिति स्मृतः ।

---

१ 'एकैकप्र' इति पाठः. २ एतद्बस्तेरर्वाक् पश्चाद्वा बहिर्गमनादि कर्म न वर्ज्यत्वादेतन्नामोक्तं तस्य; स च सुश्रुते—'रथेष्वपि च युक्तेषु हस्त्यश्वे चापि कारिपवे । यस्मान्न प्रतिषिद्धोऽयमतो युक्तरथः स्मृतः' इत्युक्तः. ३ 'वचा रास्ना' इति पाठः.

द्विपञ्चमूलत्रिफलाफलबिल्वानि पाचयेत् ॥ ३४ ॥
गोमूत्रेण च पिष्टैश्च पाठावत्सकतोयदैः ।
सफलैः क्षौद्रतैलाभ्यां क्षारेण लवणेन च ॥ ३५ ॥
युक्तो बस्तिः कफव्याधिपाण्डुरोगविषूचिषु ।
शुक्रानिलविबन्धेषु बस्त्याटोपे च पूजितः ॥ ३६ ॥
मुस्तापाठामृतैरण्डबलारास्नापुनर्नवान् ।
मञ्जिष्ठारग्वधोशीरत्रायमाणाक्षरोहिणीः ॥ ३७ ॥
कनीयः पञ्चमूलं च पालिकं मदनाष्टकम् ।
जलाढके पचेत्तच्च पादशेषं परिस्रुतम् ॥ ३८ ॥
क्षीरद्विप्रस्थसंयुक्तं क्षीरशेषं पुनः पचेत् ।
सपादजाङ्गलरसः ससर्पिर्मधुसैन्धवः ॥ ३९ ॥
पिष्टैर्यष्टिमिसिश्यामाकलिङ्गकरसाञ्जनैः ।
बस्तिः सुखोष्णो मांसाग्निबलशुक्रविवर्धनः ॥ ४० ॥
वातासृङ्मोहमेहार्शोगुल्मविण्मूत्रसङ्ग्रहम् ।
विषमज्वरवीसर्पवर्ध्माऽऽध्मानप्रवाहिकाः ॥ ४१ ॥
वङ्क्षणोरुकटीकुक्षिमन्याश्रोत्रशिरोरुजः ।
हन्यादसृग्दरोन्मादशोफकासाश्मकुण्डलान् ॥ ४२ ॥
चक्षुष्यः पुत्रदो राजा यापनानां रसायनम् ।
मृगाणां लघुवभ्रूणां दशमूलस्य चाम्भसा ॥ ४३ ॥
हपुषामिसिशाङ्केयीकल्कैर्वातहरः परम् ।
निरूहोऽत्यर्थवृष्यश्च महास्नेहसमन्वितः ॥ ४४ ॥
मयूरं पक्षपित्तान्त्रपादविट्तुण्डवर्जितम् ।

लघुना पञ्चमूलेन पालिकेन समन्वितम् ॥ ४५ ॥
पक्त्वा क्षीरजले क्षीरशेषं सघृतमाक्षिकम् ।
तद्विदारीकणायष्टिशताह्वाफलकल्कवत् ॥ ४६ ॥
बस्तिरीषत्पटुयुतः परमं बलशुक्रकृत् ।
कल्पनेयं पृथक् कार्या तित्तिरिप्रभृतिष्वपि ॥ ४७ ॥
विष्किरेषु समस्तेषु प्रतुदप्रसहेषु च ।
जलचारिषु तद्वच्च मत्स्येषु क्षीरवर्जिता ॥ ४८ ॥
गोधानकुलमार्जारशल्यकोन्दुरजं पलम् ।
पृथग्दशपलं क्षीरे पञ्चमूलं च साधयेत् ॥ ४९ ॥
तत्पयः फलवैदेहीकल्कद्विलवणान्वितम् ।
ससितातैलमध्वाज्यो बस्तिर्योज्यो रसायनम् ॥ ५० ॥
व्यायाममथितोरस्कक्षीणेन्द्रियबलौजसाम् ।
विबद्धशुक्रविण्मूत्रशुद्धवातविकारिणाम् ॥ ५१ ॥
गजवाजिरथक्षोभभग्नजर्जरितात्मनाम् ।
पुनर्नवत्वं कुरुते वाजीकरणमुत्तमम् ॥ ५२ ॥
सिद्धेन पयसा भोज्यमात्मगुप्तोच्चटेक्षुरैः ।
स्नेहांश्चायमणान् सिद्धान्सिद्धद्रव्यैः प्रकल्पयेत् ॥ ५३ ॥
दोषघ्नाः सपरीहारा वक्ष्यन्ते स्नेहबस्तयः ।
दशमूलं बलां रास्नामश्वगन्धां पुनर्नवाम् ॥ ५४ ॥
गुडूच्येरण्डभूतीकभार्ङ्गीवृषकरोहिषम् ।

१ 'सत्तमः' इति पाठः.

शतावरीं सहचरं काकनासां पलाशकम् ॥ ५५ ॥
यवमाषातसीकोलकुलत्थान्प्रसृतोन्मितान् ।
वहे विपाच्य तोयस्य द्रोणशेषेण तेन च ॥ ५६ ॥
पचेत्तैलाढकं पेष्यैर्जीवनीयैः पलोन्मितैः ।
अनुवासनमित्येतत्सर्ववातविकारनुत् ॥ ५७ ॥
अनूपानां वसा तद्वज्जीवनीयोपसाधिता ।
शताह्वाचिरिबिल्वाम्लैस्तैलं सिद्धं समीरणे ॥ ५८ ॥
सैन्धवेनाग्निवर्णेन तप्तं वाऽनिलजिद् घृतम् ।
जीवन्तीं मदनं मेदां श्रावणीं मधुकं बलाम् ॥ ५९ ॥
शताह्वर्षभकौ कृष्णां काकनासां शतावरीम् ।
स्वगुप्तां क्षीरकाकोलीं कर्कटाख्यां शठीं वचाम् ॥ ६० ॥
पिष्ट्वा तैलघृतं क्षीरे साधयेत्तच्चतुर्गुणे ।
बृंहणं वातपित्तघ्नं बलशुक्राग्निवर्धनम् ॥ ६१ ॥
रजःशुक्रामयहरं पुत्रीयमनुवासनम् ।
सैन्धवं मदनं कुष्ठं शताह्वा निचुलो वचा ॥ ६२ ॥
ह्रीवेरं मधुकं भार्ङ्गी देवदारुसकट्फलम् ।
नागरं पुष्करं मेदा चविका चित्रकः शठी ॥ ६३ ॥
विडङ्गातिविषं श्यामा हरेणुर्नीलिनी स्थिरा ।
बिल्वाजमोदचपला दन्ती रास्ना च तैः समैः ॥ ६४ ॥
साध्यमैरण्डतैलं वा तैलं वा कफरोगनुत् ।

---

१ जीवनीयैः—पुष्पैः ।

वर्ध्मोदावर्तगुल्मार्शःप्लीहमेहाढ्यमारुतान् ॥ ६५ ॥
आनाहमश्मरीं चाशु हन्यात्तदनुवासनम् ।
साधितं पञ्चमूलेन तैलं बिल्वादिनाऽथवा ॥ ६६ ॥
कफघ्नं कल्पयेत्तैलं द्रव्यैर्वा कफघातिभिः ।
फलैरष्टगुणे[1] चाम्ल सिद्धमन्वासनं कफे ॥ ६७ ॥
मृदुबस्तौ जडीभूते तीक्ष्णोऽन्यो बस्तिरिष्यते ।
तीक्ष्णैर्विकर्षिते स्निग्धो मधुरः शिशिरो मृदुः ॥ ६८ ॥
तीक्ष्णत्वं मूत्रपील्वग्निलवणक्षारसर्षपैः ।
प्राप्तकालं विधातव्यं घृतक्षीरैस्तु मार्दवम् ॥ ६९ ॥
बलकालरोगदोषप्रकृतीः प्रविभज्य योजितो बस्तिः ।
स्वैः स्वैरौषधवर्गैः स्वान् स्वान् रोगान्निवर्तयति ॥ ७० ॥
उष्णार्तानां शीतान् शीतार्तानां तथा सुखोष्णांश्च ।
तद्योग्यौषधयुक्तान्बस्तीन्सन्तर्क्य युञ्जीत ॥ ७१ ॥
बस्तींश्च बृंहणीयान् दद्याद्व्याधिषु विशोधनीयेषु ।
मेदस्विनो विशोध्या ये च नराः कुष्ठमेहार्ताः ॥ ७२ ॥
न क्षीणक्षतदुर्बलमूर्च्छितकृशशुष्कशुद्धदेहानाम् ।
दद्याद्विशोधनीयान् दोषनिबद्धायुषो ये च ॥ ७३ ॥”

---

## पञ्चमोऽध्यायः ।

अथाऽतो बस्तिव्यापत्सिद्धिं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।

---

१ ‘गुणैश्चाम्लैः’ इति पाठः.

"अस्निग्धस्विन्नदेहस्य गुरुकोष्ठस्य योजितः ।
शीताऽल्पस्नेहलवणद्रव्यमात्रो घनोऽपि वा ॥ १ ॥
बस्तिः सङ्क्षोभ्य तं दोषं दुर्बलत्वादनिर्हरन् ।
करोत्ययोगं, तेन स्याद्वातमूत्रशकृद्ग्रहः ॥ २ ॥
नाभिबस्तिरुजादाहौ हृल्लेपः श्वयथुर्गुदे ।
कण्डूर्गण्डानि वैवर्ण्यमरतिर्वह्निमार्दवम् ॥ ३ ॥
क्वाथद्वयं प्राग्विहितं मध्यदोषेऽतिसारिणि ।
उष्णस्य तस्मात्कोकस्य तत्र पानं प्रशस्यते ॥ ४ ॥
फलवर्त्यस्तथा स्वेदाः कालं ज्ञात्वा विरेचनम् ।
बिल्वमूलत्रिवृद्दारुयवकोलकुलत्थवान् ॥ ५ ॥
सुरादिमांस्तत्र बस्तिः स प्राक्पेष्यस्तमानयेत् ।
युक्तोऽल्पवीर्यो दोषाढ्ये रूक्षे क्रूराशयेऽथवा ॥ ६ ॥
बस्तिर्दोषावृतो रुद्धमार्गो रुन्ध्यात्समीरणम् ।
सविमार्गोऽनिलः कुर्यादाध्मानं मर्मपीडनम् ॥ ७ ॥
विदाहं गुदकोष्ठस्य मुष्कवङ्क्षणवेदनाम् ।
रुणद्धि हृदयं शूलैरितश्चेतश्च धावति ॥ ८ ॥
स्वभ्यक्तस्विन्नगात्रस्य तत्र वर्तिं प्रयोजयेत् ।
बिल्वादिश्च निरूहः स्यात्पीलुसर्षपमूत्रवान् ॥ ९ ॥
सरलामरदारुभ्यां साधितं वाऽनुवासनम् ।
कुर्वतो वेगसंरोधं पीडितो वाऽतिमात्रया ॥ १० ॥

१ 'द्रव्यमा' इति पाठः.

अस्निग्धलवणोष्णो वा बस्तिरल्पोऽल्पभेषजः ।
मृदुर्वा मारुतेनोर्ध्वं विक्षिप्तो मुखनासिकात् ॥ ११ ॥
निरेति मूर्च्छाहृल्लासतृड्दाहादीन्प्रवर्तयन् ।
मूर्च्छाविकारं दृष्ट्वास्य सिञ्चेच्छीताम्बुना मुखम् ॥ १२ ॥
व्यजेदाक्रमनाशाच्च प्राणायामं च कारयेत् ।
पृष्ठपार्श्वोदरं [1]मृष्यात्करैरुष्णैरधोमुखम् ॥ १३ ॥
केशेषूत्क्षिप्य धुन्वीत भीषयेद्व्यालदंष्ट्रिभिः ।
शस्त्रोल्काराजपुरुषैर्बस्तिरेति तथा ह्यधः ॥ १४ ॥
पाणिवस्त्रैर्गलापीडं कुर्यान्न म्रियते यथा ।
प्राणोदाननिरोधाद्धि सुप्रसिद्धतरायनः ॥ १५ ॥
अपानः पवनो बस्तिं तमाश्वेवापकर्षति ।
कुष्ठक्रमुककल्कं च पाययेताम्लसंयुतम् ॥ १६ ॥
औष्ण्यात्तैक्ष्ण्यात्सरत्वाच्च बस्तिं सोऽस्यानुलोमयेत् ।
गोमूत्रेण त्रिवृत्पथ्याकल्कं चाधोऽनुलोमनम् ॥ १७ ॥
पक्वाशयस्थिते स्विन्ने निरूहो दाशमूलिकः ।
यवकोलकुलत्थैश्च विधेयो मूत्रसाधितैः ॥ १८ ॥
बस्तिर्गोमूत्रसिद्धैर्वा साम्लतावंशपल्लवैः ।
पूतीकरञ्जत्वक्पत्रशठीदेवाह्वरोहिषैः ॥ १९ ॥
सतैलगुडसि[2]न्धूत्थविरेकौषधकल्कवान् ।
बिल्वादिपञ्चमूलेन सिद्धो बस्तिरुरःस्थिते ॥ २० ॥

---

१ 'मृज्यात्क' इति पाठः. २ 'सिन्धूत्थो वि' इति पाठः.

शिरःस्थे नावनं धूमं[1] प्रच्छाद्यं सर्षपैः शिरः ।
बस्तिरत्युष्णतीक्ष्णाम्लघनोऽतिस्वेदितस्य वा ॥ २१ ॥
अल्पे दोषे मृदौ कोष्ठे प्रयुक्तो वा पुनः पुनः ।
अतियोगत्वमापन्नो भवेत्कुक्षिरुजाकरः ॥ २२ ॥
विरेचनातियोगेन सतुल्याकृतिसाधनः ।
बस्तिः क्षाराम्लतीक्ष्णोष्णलवणः पैत्तिकस्य वा ॥ २३ ॥
गुदं दहन् लिखन् क्षिण्वन्करोत्यस्य परिस्रवम् ।
सविदग्धं स्रवत्यस्रं वर्णैः पित्तं च भूरिभिः ॥ २४ ॥
बहुशश्चातिवेगेन मोहं गच्छति सोऽसकृत् ।
रक्तपित्तातिसारघ्नी क्रिया तत्र प्रशस्यते ॥ २५ ॥
दाहादिषु त्रिवृत्कल्कं मृद्वीकावारिणा पिबेत् ।
तद्धि पित्तशकृद्वातान्हृत्वा दाहादिकाञ्जयेत् ॥ २६ ॥
विशुद्धश्च पिबेच्छीतां यवागूं शर्करायुताम् ।
युञ्ज्याद्वाऽतिविरिक्तस्य क्षीणविड्कस्य भोजनम् ॥ २७ ॥
माषयूषेण कुल्माषान्पानं दध्यथवा सुराम् ।
सिद्धिर्बस्त्यापदामेवं, स्नेहबस्तेस्तु वक्ष्यते ॥ २८ ॥
शीतोऽल्पो वाऽधिके वाते पित्तेऽत्युष्णः कफे मृदुः ।
अतिभुक्ते गुरुर्वर्चःसञ्चयेऽल्पबलस्तथा ॥ २९ ॥
दत्तस्तैरावृतः स्नेहो नायात्यभिभवादपि ।
सम्भोरुसदनाध्मानज्वरशूलाङ्गमर्दनैः ॥ ३० ॥

---

१ 'धूमः' इति क्वचित्.

पार्श्वरुग्वेष्टनैर्विद्याद्वायुना स्नेहमावृतम् ।
स्निग्धाम्ललवणोष्णैस्तं रास्नापीतद्रुतैलिकैः ॥ ३१ ॥
सौवीरकसुराकोलकुलत्थयवसाधितैः ।
निरूहैर्निर्हरेत्सम्यक् समूत्रैः पाञ्चमूलिकैः ॥ ३२ ॥
ताभ्यामेव च तैलाभ्यां सायं भुक्तेऽनुवासयेत् ।
तृड्दाहरागसम्मोहवैवर्ण्यतमकज्वरैः ॥ ३३ ॥
विद्यात्पित्तावृतं स्वादुतिक्तैस्तं बस्तिभिर्हरेत् ।
तन्द्राशीतज्वरालस्यप्रसेकारुचिगौरवैः ॥ ३४ ॥
सम्मूर्च्छाग्लानिभिर्विद्याच्छ्लेष्मणा स्नेहमावृतम् ।
कषायतिक्तकटुकैः सुरागोमूत्रसाधितैः ॥ ३५ ॥
फलतैलयुतैः साम्लैर्बस्तिभिस्तं विनिर्हरेत् ।
छर्दिमूर्च्छारुचिग्लानिशूलनिद्राङ्गमर्दनैः ॥ ३६ ॥
आमलिङ्गैः सदाहैस्तं विद्यादत्यशनावृतम् ।
कटूनां लवणानां च क्वाथैश्चूर्णैश्च पाचनम् ॥ ३७ ॥
मृदुर्विरेकः सर्वं च तत्रामविहितं हितम् ।
विण्मूत्रानिलसङ्गार्तिगुरुत्वाध्मानहृद्ग्रहैः ॥ ३८ ॥
स्नेहं विडावृतं ज्ञात्वा स्नेहस्वेदैः सवर्तिभिः ।
श्यामाबिल्वादिसिद्धैश्च निरूहैः सानुवासनैः ॥ ३९ ॥
निर्हरेद्विधिना सम्यगुदावर्तहरेण च ।
अभुक्ते शूनपायौ वा पेया मात्राशितस्य वा ॥ ४० ॥

१ 'मूत्रोपसाधितैः' इति पाठः. २ 'च' इति पाठः.

गुदे प्रणिहितः स्नेहो वेगाद्वावल्गनावृतः ।
ऊर्ध्वकायं ततः कण्ठादूर्ध्वेभ्यः खेभ्य एत्यपि ॥ ४१ ॥
मूत्रश्यामात्रिवृत्सिद्धो यवकोलकुलत्थवान् ।
तत्सिद्धतैलो देयः स्यान्निरूहः सानुवासनः ॥ ४२ ॥
कण्ठादागच्छतः स्तम्भकण्ठग्रहविरेचनैः ।
छर्दिघ्नीभिः क्रियाभिश्च तस्य कुर्यान्निबर्हणम् ॥ ४३ ॥
नापक्कं प्रणयेत्स्नेहं गुदं स ह्युपलिम्पति ।
ततः कुर्यात्स तृण्मोहकण्डूशोफान् क्रियाऽत्र च ॥ ४४ ॥
तीक्ष्णो बस्तिस्तथा तैलमर्कपत्ररसे शृतम् ।
अनुच्छ्रास्य तु बद्धे वा दत्ते निःशेष एव च ॥ ४५ ॥
प्रविश्य क्षुभितो वायुः शूलतोदकरो भवेत् ।
तत्राभ्यङ्गो गुदे स्वेदो वातघ्नान्यशनानि च ॥ ४६ ॥
द्रुतं प्रणीते निष्कृष्टे सहसोत्क्षिप्त एव वा ।
स्यात्कटीगुदजङ्घोरुबस्तिस्तम्भार्तिभेदनम् ॥ ४७ ॥
भोजनं तत्र वातघ्नं स्वेदाभ्यङ्गाः सबस्तयः ।
पीड्यमानेऽन्तरा मुक्ते गुदे प्रतिहतोऽनिलः ॥ ४८ ॥
उरःशिरोरुजं सादमूर्वोश्च जनयेद्बली ।
बस्तिः स्यात्तत्र बिल्वादिफलश्यामादिमूत्रवान् ॥ ४९ ॥
अतिप्रपीडितः कोष्ठे तिष्ठत्यायाति वा गलम् ।
तत्र बस्तिर्विरेकश्च गलपीडादि कर्म च ॥ ५० ॥

---

१ 'तोदपरो भ' इति पाठः. २ 'फलैः श्या' इति पाठः.

वमनाद्यैर्विशुद्धं च क्षामदेहबलानलम् ।
यथाण्डं तरुणं पूर्णं तैलपात्रं यथा तथा ॥ ५१ ॥
भिषक् प्रयत्नतो रक्षेत्सर्वस्मादपचारतः ।
दद्यान्मधुरहृद्यानि ततोऽम्ललवणौ रसौ ॥ ५२ ॥
स्वादुतिक्तौ ततो भूयः कषायकटुकौ ततः ।
अन्योन्यप्रत्यनीकानां रसानां स्निग्धरूक्षयोः ॥ ५३ ॥
व्यत्यासादुपयोगेन क्रमात्तं प्रकृतिं नयेत् ।
सर्वसहः स्थिरबलो विज्ञेयः प्रकृतिं गतः ॥ ५४ ॥"

---

## षष्ठोऽध्यायः ।

अथाऽतो भेषजकल्पं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"धन्वे[1] साधारणे देशे समे सन्मृत्तिके शुचौ ।
श्मशानचैत्यायतनश्वभ्रवल्मीकवर्जिते ॥ १ ॥
मृदौ प्रदक्षिणजले कुशरोहिषसंस्तृते ।
अफालकृष्टेऽनाक्रान्ते पादपैर्बलवत्तरैः ॥ २ ॥
शस्यते भेषजं जातं युक्तं वर्णरसादिभिः ।
जन्त्वजग्धं दवादग्धमविदग्धं च वैकृतैः ॥ ३ ॥
भूतैश्छायातपाम्ब्वाद्यैर्यथाकालं च सेवितम् ।
अवगाढमहामूलमुदीचीं दिशमाश्रितम् ॥ ४ ॥

---

१ 'धन्वसाधारणे' इति पाठः.

अथ कल्याणचरितः श्राद्धः शुचिरुपोषितः ।
गृह्णीयादौषधं सुस्थं स्थितं काले च कल्पयेत् ॥ ५ ॥
सक्षीरं तदसम्पत्तावनतिक्रान्तवत्सरम् ।
ऋते गुडघृतक्षौद्रधान्यकृष्णाविडङ्गतः ॥ ६ ॥
पयो बाष्कयणं ग्राह्यं विण्मूत्रं तच्च नीरुजम् ।
वयोबलवतां धातुपिच्छशृङ्गखुरादिकम् ॥ ७ ॥
कषाययोनयः पञ्च रसा लवणवर्जिताः ।
रसः कल्कः शृतः शीतः फाण्टश्चेति प्रकल्पना ॥ ८ ॥
पञ्चधैव कषायाणां पूर्वं पूर्वं बलाधिकाः ।
सद्यःसमुद्धृतात्क्षुण्णाद्यः स्रवेत्पटपीडितात् ॥ ९ ॥
स्वरसः स समुद्दिष्टः

कल्कः पिष्टो द्रवाप्लुतः ।

चूर्णोऽप्लुतः

शृतः क्वाथः

शीतो रात्रिं द्रवे स्थितः ॥१०॥

सद्योऽभिपूतपूतस्तु फाण्टः

तन्मानकल्पने ।

युञ्ज्याद्व्याधिबलतस्तथा च वचनं मुनेः ॥ ११ ॥
मात्राया न व्यवस्थाऽस्ति व्याधिं कोष्ठं बलं वयः ।
आलोच्य देशकालौ च योज्या तद्वच्च कल्पना ॥ १२ ॥

---

१ बाष्कयणं नाम तरुणवत्सा या गौस्तस्या इत्यर्थः ।

मध्यं तु मानं निर्दिष्टं स्वरसस्य चतुःपलम् ।
पेष्यस्य कर्षमालोड्यं तद्द्रवस्य पलत्रये ॥ १३ ॥
क्वाथं द्रव्यपले कुर्यात्प्रस्थार्धं पादशेषितम् ।
शीतं पले पलैः षड्भिः

चतुर्भिश्च ततोऽपरम् ॥ १४ ॥

स्नेहपाके त्वमानोक्तौ चतुर्गुणविवर्धितम् ।
कल्कस्नेहद्रवं योज्यम्

अधीते शौनकः पुनः ॥ १५ ॥

स्नेहे सिध्यति शुद्धाम्बुनिःक्वाथस्वरसैः क्रमात् ।
कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टकम् ॥ १६ ॥
पृथक् स्नेहसमं दद्यात्पञ्चप्रभृति तु द्रवम् ।
नाङ्गुलिग्राहिता कल्के न स्नेहेऽग्नौ सशब्दता ॥ १७ ॥
वर्णादिसम्पच्च यदा तदैनं शीघ्रमाहरेत् ।
घृतस्य फेनोपशमः, तैलस्य तु तदुद्भवः, ॥ १८ ॥
लेहस्य तन्तुमत्ताऽप्सु मज्जनं शरणं न च, ।
पाकस्तु त्रिविधो मन्दश्चिक्कणः खरचिक्कणः ॥ १९ ॥
मन्दः कल्कसमे किट्टे चिक्कणो मदनोपमे ।
किंचित्सीदति कृष्णे च वर्त्यमाने च पश्चिमः ॥ २० ॥
दग्धोत ऊर्ध्वं निष्कार्यः स्यादामस्त्वग्निसादकृत् ।
मृदुर्नस्ये खरोऽभ्यङ्गे पाने बस्तौ च चिक्कणः ॥ २१ ॥

---

१ वर्तमानकाले एतन्मानस्यापि द्वित्रिचतुरंशकल्पना देशकालप्रकृत्यादिना कार्या । २ 'किञ्चिच्चिक्क' इति पाठः.

शाणं पाणितलं मुष्टिं कुडवं प्रस्थमाढकम् ।
द्रोणं वहं च क्रमशो विजानीयाच्चतुर्गुणम् ॥ २२ ॥
द्विगुणं योजयेदार्द्रं कुडवादि तथा द्रवम् ।
पेषणालोडणे वारि स्नेहपाके च निर्द्रवे ॥ २३ ॥
कल्पयेत्सदृशान् भागान् प्रमाणं यत्र नोदितम् ।
कल्कीकुर्याच्च भैषज्यमनिरूपितकल्पनम् ॥ २४ ॥
द्वौ शाणौ वटकः कोलं बदरं द्रङ्क्षणश्च तौ ।
अक्षं पिचुः पाणितलं सुवर्णं कवलग्रहः ॥ २५ ॥
कर्षो बिडालपदकं तिन्दुकं पाणिमानिका ।
शब्दान्यत्वमभिन्नेऽर्थे शुक्तिरष्टमिका पिचू ॥ २६ ॥
पलं प्रकुञ्चो बिल्वं च मुष्टिराम्रं चतुर्थिका ।
द्वे पले प्रसृतस्तौ द्वावञ्जलिस्तौ तु मानिका ॥ २७ ॥
आढकं भाजनं कंसो द्रोणः कुम्भो घटोऽर्मणम् ।
तुलापलशतं तानि विंशतिर्भार उच्यते ॥ २८ ॥
हिमवद्विन्ध्यशैलाभ्यां प्रायो व्याप्ता वसुन्धरा ।
सौम्यं पथ्यं च तत्राद्यमाग्नेयं वैन्ध्यमौषधम्" ॥ २९ ॥

# अष्टाङ्गहृदयम् ।

## उत्तरस्थानम् ।

### प्रथमोऽध्यायः ।

अथाऽतो बालोपचरणीयमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥
"जातमात्रं विशोध्योल्बाद्बालं सैन्धवसर्पिषा ।
प्रसूतिक्लेशितं चानु बलातैलेन सेचयेत् ॥ १ ॥
अश्मनोर्वादनं चास्य कर्णमूले समाचरेत् ।
अथास्य दक्षिणे कर्णे मन्त्रमुच्चारयेदिमम् ॥ २ ॥
"अङ्गादङ्गात्सम्भवसि हृदयादभिजायसे" ।
"आत्मा वै पुत्रनामासि स जीव शरदां शतम्" ॥ ३ ॥
"शतायुः शतवर्षोऽसि दीर्घमायुरवाप्नुहि" ।
"नक्षत्राणि दिशो रात्रिरहश्च त्वाभिरक्षतु" ॥ ४ ॥
स्वस्थीभूतस्य नाभिं च सूत्रेण चतुरङ्गुलात् ।
बद्ध्वोर्ध्वं वर्धयित्वा च ग्रीवायामवसञ्जयेत् ॥ ५ ॥
नाभिं च कुष्ठतैलेन सेचयेत्स्नापयेदनु ।
क्षीरिवृक्षकषायेण सर्वगन्धोदकेन वा ॥ ६ ॥

---

१ 'सञ्जीवश्च' इति पाठः. २ 'सञ्जयेत्' पाठः.

कोष्णेन तप्तरजततपनीयनिमज्जनैः ।
ततो दक्षिणतर्जन्या तालून्नम्यावगुण्ठयेत् ॥ ७ ॥
शिरसि स्नेहपिचुना प्राश्यं चास्य प्रयोजयेत् ।
हरेणुमात्रं मेधायुर्बलार्थमभिमन्त्रितम् ॥ ८ ॥
ऐन्द्रीब्राह्मीवचाशङ्खपुष्पीकल्कं घृतं मधु ।
चामीकरवचाब्राह्मीताप्यपथ्या रजीकृताः ॥ ९ ॥
लिह्यान्मधुघृतोपेता हेमधात्रीरजोऽथवा ।
गर्भाम्भः सैन्धववता सर्पिषा वामयेत्ततः ॥ १० ॥
प्राजापत्येन विधिना जातकर्माणि कारयेत् ।
सिराणां हृदयस्थानां विवृतत्वात्प्रसूतितः ॥ ११ ॥
तृतीयेऽह्नि चतुर्थे वा स्त्रीणां स्तन्यं प्रवर्तते ।
प्रथमे दिवसे तस्मात्त्रिकालं मधुसर्पिषी ॥ १२ ॥
अनन्तामिश्रिते मन्त्रपाविते प्राशयेच्छिशुम् ।
द्वितीये लक्ष्मणासिद्धं तृतीये च घृतं ततः ॥ १३ ॥
प्राङ्निषिद्धस्तनस्यास्य तत्पाणितलसम्मितम् ।
स्तन्यानुपानं द्वौ कालौ नवनीतं प्रयोजयेत् ॥ १४ ॥
मातुरेव पिबेत्स्तन्यं तत्परं देहवृद्धये ।
स्तन्यधात्र्यावुभे कार्ये तदसम्पदि वत्सले ॥ १५ ॥
अव्यङ्गे ब्रह्मचारिण्यौ वर्णप्रकृतितः समे ।
नीरुजे मध्यवयसौ जीवद्वत्से न लोलुपे ॥ १६ ॥
हिताहारविहारेण यत्नादुपचरेच्च ते ।

शुक्क्रोधलङ्घनायासाः स्तन्यनाशस्य हेतवः ॥ १७ ॥
स्तन्यस्य सीधुवर्ज्यानि मद्यान्यानूपजा रसाः ।
क्षीरं क्षीरिण्यौषधयः शोकादीनां विपर्ययः ॥ १८ ॥
विरुद्धाहारभुक्तायाः क्षुधिताया विचेतसः ।
प्रदुष्टधातोर्गर्भिण्याः स्तन्यं रोगकरं शिशोः ॥ १९ ॥
स्तन्याभावे पयश्छागं गव्यं वा तद्गुणं पिबेत् ।
ह्रस्वेन पञ्चमूलेन स्थिरया वा सितायुतम् ॥ २० ॥
षष्ठीं निशां विशेषेण कृतरक्षाबलिक्रियाः ।
जागृयुर्बान्धवास्तस्य दधतः परमां मुदम् ॥ २१ ॥
दशमे दिवसे पूर्णे विधिभिः स्वकुलोचितैः ।
कारयेत्सूतिकोत्थानं नाम बालस्य चार्चितम् ॥ २२ ॥
बिभ्रतोऽङ्कैर्मनोह्लालरोचनागुरुचन्दनम् ।
नक्षत्रदेवतायुक्तं बान्धवं वा समाक्षरम् ॥ २३ ॥
ततः प्रकृतिभेदोक्तरूपैरायुःपरीक्षणम् ।
प्रागुदक्शिरसः कुर्याद्बालस्य ज्ञानवान् भिषक् ॥ २४ ॥
शुचिधौतोपधानानि निर्बलीनि[2] मृदूनि च ।
शय्यास्तरणवासांसि रक्षोघ्नधूपितानि च ॥ २५ ॥
काको विशस्तः शस्तश्च धूपने त्रिवृतान्वितः ।
जीवत्खड्गादिशृङ्गोत्थान् सदा बालः शुभान् मणीन् ॥२६॥
धारयेदौषधीः श्रेष्ठा ब्राह्यैन्द्रीजीवकादिकाः ।
हस्ताभ्यां ग्रीवया मूर्ध्ना विशेषात्सततं वचाम् ॥ २७ ॥

---

१ 'क्षीरिण्य ओषध्यः' इति पाठः. २ 'निर्वलीनि' इति पाठः.

भस्माद्भिः स्नावयेत्ताभिर्भावयेत्करभास्थिजम् ॥ ५३ ॥
चूर्णं शुक्रेऽवसाध्येषु तद्वद्वर्ण्यञ्चमञ्जनम् ।
साध्येषु साधनायालमिदमेव च शीलितम् ॥ ५४ ॥
अजकां पार्श्वतो विद्ध्वा सूच्या विस्राव्य चोदकम् ।
समं प्रपीड्याङ्गुष्ठेन वसार्द्रेणानुपूरयेत् ॥ ५५ ॥
व्रणं गोमांसचूर्णेन बद्धं बद्धं विमुच्य च ।
सप्तरात्राद्व्रणे रूढे कृष्णभागे समे स्थिरे ॥ ५६ ॥
स्नेहाञ्जनं च कर्तव्यं नस्यं च क्षीरसर्पिषा ।
तथापि पुनराध्माने भेदच्छेदादिकां क्रियाम् ॥ ५७ ॥
युक्त्या कुर्याद्यथा नातिच्छेदेन स्याद्विमञ्जनम् ।
नित्यं च शुक्रेषु घृतं यथास्वं
पाने च मर्शे च घृतं विदध्यात् ।
न हीयते लब्धबला तथान्त-
स्तीक्ष्णाञ्जनैर्दृक् सततं प्रयुक्तैः ॥ ५८ ॥"

## द्वादशोऽध्यायः ।

अथाऽतो दृष्टिरोगविज्ञानीयमध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"सिरानुसारिणि मले प्रथमं पटलं श्रिते ।
अव्यक्तमीक्षते रूपं व्यक्तमप्यनिमित्ततः ॥ १ ॥
प्राप्ते द्वितीयं पटलमभूतमपि पश्यति ।
भूतं तु यत्नादासन्नं दूरे सूक्ष्मं च नेक्षते ॥ २ ॥

दूरान्तिकस्थं रूपं च विपर्यासेन मन्यते ।
दोषे मण्डलसंस्थाने मण्डलानीव पश्यति ॥ ३ ॥
द्विधैकं दृष्टिमध्यस्थे बहुधा बहुधा स्थिते ।
दृष्टेरभ्यन्तरगते ह्रस्ववृद्धविपर्ययम् ॥ ४ ॥
नान्तिकस्थमधःसंस्थे दूरगं नोपरि स्थिते ।
पार्श्वे पश्येन्न पार्श्वस्थे तिमिराख्योऽयमामयः ॥ ५ ॥
प्राप्नोति काचतां दोषे तृतीयपटलाश्रिते ।
तेनोर्ध्वमीक्षते नाधस्तनुचैलावृतोपमम् ॥ ६ ॥
यथावर्णं च रज्येत दृष्टिर्हीयेत च क्रमात् ।
तथाप्युपेक्षमाणस्य चतुर्थं पटलं गतः ॥ ७ ॥
लिङ्गनाशं मलः कुर्वन् छादयेद्दृष्टिमण्डलम् ।
तत्र वातेन तिमिरे व्याविद्धमिव पश्यति ॥ ८ ॥
चलाविलारुणाभासं प्रसन्नं चेक्षते मुहुः ।
जालानि केशान्मशकान् रश्मींश्चोपेक्षितेऽत्र च ॥ ९ ॥
काचीभूते दृगरुणा पश्यत्यास्यमनासिकम् ।
चन्द्रदीपाद्यनेकत्वं वक्रमृज्वपि मन्यते ॥ १० ॥
वृद्धः काचो दृशं कुर्याद्रजोधूमावृतामिव ।
स्पष्टारुणाभां विस्तीर्णां सूक्ष्मां वा हतदर्शनाम् ॥ ११ ॥
स लिङ्गनाशः

वाते तु सङ्कोचयति दृक्सिराः ।
दृङ्मण्डलं विशत्यन्तर्गम्भीरा दृगसौ स्मृता ॥ १२ ॥

पित्तजे तिमिरे विद्युत्खद्योतद्योतदीपितम्[1] ।
शिखितित्तिरिपिच्छाभं प्रायो नीलं च पश्यति ॥ १३ ॥
काचे दृक् काचनीलाभा तादृगेव च पश्यति ।
अर्केन्दुपरिवेषाग्निमरीचीन्द्रधनूंषि च ॥ १४ ॥
भृङ्गनीला निरालोका दृक् स्निग्धा लिङ्गनाशतः ।
दृष्टिः पित्तेन ह्रस्वाख्या सा ह्रस्वा ह्रस्वदर्शना[2] ॥ १५ ॥
भवेत्पित्तविदग्धाख्या पीता पीताभदर्शना ।
कफेन तिमिरे प्रायः स्निग्धं श्वेतं च पश्यति ॥ १६ ॥
शङ्खेन्दुकुन्दकुसुमैः कुमुदैरिव चाचितम् ।
काचे तु निष्प्रभेन्द्वर्कप्रदीपाद्यैरिवाचितम् ॥ १७ ॥
सिताभासा[3] च दृष्टिः स्याल्लिङ्गनाशे तु लक्ष्यते ।
मूर्तः कफो दृष्टिगतः स्निग्धो दर्शननाशनः ॥ १८ ॥
बिन्दुर्जलस्येव चलः पद्मिनीपुटसंस्थितः ।
उष्णे सङ्कोचमायाति छायायां परिसर्पति ॥ १९ ॥
शङ्खकुन्देन्दुकुमुदस्फटिकोपमशुक्लिमा ।
रक्तेन तिमिरे रक्तं तमोभूतं च पश्यति ॥ २० ॥
काचेन रक्ता कृष्णा वा दृष्टिस्तादृक् च पश्यति ।
लिङ्गनाशेऽपि तादृग् दृङ् निःप्रभा हतदर्शना ॥ २१ ॥
संसर्गसन्निपातेषु विद्यात्सङ्कीर्णलक्षणान् ।
तिमिरादीनकस्माच्च तैः स्याद्व्यक्ताकुलेक्षणम् ॥ २२ ॥

---

१ 'तोद्द्योतदी' इति पाठः. २ 'ह्रस्वदर्शिनी' इति पाठः. ३ 'भा सा च' इति पाठः.

तिमिरे शेषयोर्दृष्टौ चित्रो रागः प्रजायते ।
द्योत्यते नकुलस्येव यस्य दृङ् निचिता मलैः ॥ २३ ॥
नकुलान्धः स तत्राह्नि चित्रं पश्यति नो निशि ।
अर्केऽस्तमस्तकन्यस्तगभस्तौ स्तम्भमागताः ॥ २४ ॥
स्थगयन्ति दृशं दोषा दोषान्धः स गदोऽपरः ।
दिवाकरकरस्पृष्टा भ्रष्टा दृष्टिपथान्मलाः ॥ २५ ॥
विलीनलीना यच्छन्ति व्यक्तमत्राह्नि दर्शनम् ।
उष्णतप्तस्य सहसा शीतवारिनिमज्जनात् ॥ २६ ॥
त्रिदोषरक्तसम्पृक्तो यात्यूष्मोर्ध्वं ततोऽक्षिणि ।
दाहोषे मलिनं शुक्लमहन्याविलदर्शनम् ॥ २७ ॥
रात्रावान्ध्यं च जायेत विदग्धोष्णेन सा स्मृता ।
भृशमम्लाशनाद्दोषैः सास्रैर्या दृष्टिराचिता ॥ २८ ॥
सक्लेदकण्डूकलुषा विदग्धाम्लेन सा स्मृता ।
शोकज्वरशिरोरोगसन्तप्तस्यानिलादयः ॥ २९ ॥
धूमाविलां धूमदर्शां दृशं कुर्युः स धूमरः ।
सहसैवाल्पसत्त्वस्य पश्यतो रूपमद्भुतम् ॥ ३० ॥
भास्वरं भास्करादिं वा वाताद्या नयनाश्रिताः ।
कुर्वन्ति तेजः संशोष्य दृष्टिं मुषितदर्शनाम् ॥ ३१ ॥
वैडूर्यवर्णां स्तिमितां प्रकृतिस्थामिवाव्यथाम् ।
औपसर्गिक इत्येष लिङ्गनाशः

अत्र वर्जयेत् ।

विना कफाल्लिङ्गनाशान् गम्भीरां ह्रस्वजामपि ॥ ३२ ॥

षट् काचा नकुलान्ध्यश्च याप्याः शेषांस्तु साधयेत् ।
द्वादशेति गदा दृष्टौ निर्दिष्टाः सप्तविंशतिः ॥ ३३ ॥"

---

## त्रयोदशोऽध्यायः ।

अथाऽतस्तिमिरप्रतिषेधं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"तिमिरं काचतां याति, काचोऽप्यान्ध्यमुपेक्षया ।
नेत्ररोगेष्वतो घोरं तिमिरं साधयेद्द्रुतम् ॥ १ ॥
तुलां पचेत जीवन्त्या द्रोणेऽपां पादशेषिते ।
तत्क्वाथे द्विगुणक्षीरं घृतप्रस्थं विपाचयेत् ॥ २ ॥
प्रपौण्डरीककाकोलीपिप्पलीरोध्रसैन्धवैः ।
शताह्वामधुकद्राक्षासितादारुफलत्रयैः ॥ ३ ॥
कार्षिकैर्निशि तत्पीतं तिमिरापहरं परम् ।
द्राक्षाचन्दनमञ्जिष्ठाकाकोलीद्वयजीवकैः ॥ ४ ॥
सिताशतावरीमेदापुण्ड्राह्वमधुकोत्पलैः ।
पचेज्जीर्णं घृतप्रस्थं समक्षीरं पिचून्मितैः ॥ ५ ॥
हन्ति तत्काचतिमिररक्तराजीशिरोरुजः ।
पटोलनिम्बकटुकादार्वीसेव्यवरावृषम् ॥ ६ ॥
सधन्वयासत्रायन्तीपर्पटं पालिकं पृथक् ।
प्रस्थमामलकानां च क्वाथयेन्नल्वणेऽम्भसि ॥ ७ ॥

तद्वाढकेऽर्धपलिकैः पिष्टैः प्रस्थं घृतात्पचेत् ।
मुस्तभूनिम्बयष्ट्याह्वकुटजोदीच्यचन्दनैः ॥ ८ ॥
सपिप्पलीकैस्तत्सर्पिर्घ्राणकर्णास्यरोगजित् ।
विद्रधिज्वरदुष्टास्रविसर्पापचिकुष्ठनुत् ॥ ९ ॥
विशेषाच्छुक्रतिमिरनक्तान्ध्योष्णाम्लदाहनुत् ।
त्रिफलाष्टपलं क्वाथ्यं पादशेषं जलाढके ॥ १० ॥
तेन तुल्यपयस्केन त्रिफलापलकल्कवान् ।
अर्धप्रस्थो घृतात्सिद्धः सितया माक्षिकेण वा ॥ ११ ॥
युक्तं पिबेत्तत्तिमिरी तद्युक्तं वा वरारसम् ।
यष्टीमधुद्विकाकोलीव्याघ्रीकृष्णामृतोत्पलैः ॥ १२ ॥
पालिकैः ससिताद्राक्षैर्घृतप्रस्थं पचेत्समैः ।
अजाक्षीरवरावासामार्कवस्वरसैः पृथक् ॥ १३ ॥ ॥
महात्रैफलमित्येतत्परं दृष्टिविकारजित् ।
त्रैफलेनाथ हविषा लिहानस्त्रिफलां निशि ॥ १४ ॥
यष्टीमधुकसंयुक्तां मधुना च परिप्लुताम् ।
मासमेकं हिताहारः पिबन्नामलकोदकम् ॥ १५ ॥
सौपर्णं लभते चक्षुरित्याह भगवान्निमिः ।
ताप्यायोहेमयष्ट्याह्वसिताजीर्णाज्यमाक्षिकैः ॥ १६ ॥
संयोजिता यथाकामं तिमिरघ्नी वरा वरा ।
सघृतं वा वराक्वाथं शीलयेत्तिमिरामयी ॥ १७ ॥
अपूपसूपसक्तून्वा त्रिफलाचूर्णसंयुतान् ।

१ 'दुष्टारुर्विसर्पा' इति पाठः.

पायसं वा वरायुक्तं शीतं समधुशर्करम् ॥ १८ ॥
प्रातर्भक्तस्य वा पूर्वमद्यात्पथ्यां पृथक् पृथक् ।
मृद्वीकाशर्कराक्षौद्रैः सततं तिमिरातुरः ॥ १९ ॥
स्रोतोजांशांश्चतुःषष्टिं ताम्रायोरूप्यकाञ्चनैः ।
युक्तान् प्रत्येकमेकांशैरन्धमूषोदरस्थितान् ॥ २० ॥
ध्मापयित्वा समावृत्तं ततस्तच्च निषेचयेत् ।
रसस्कन्धकषायेषु सप्तकृत्वः पृथक् पृथक् ॥ २१ ॥
वैडूर्यमुक्ताशङ्खानां त्रिभिर्भागैर्युतं ततः ।
चूर्णाञ्जनं प्रयुञ्जीत तत्सर्वतिमिरापहम् ॥ २२ ॥
मांसीत्रिजातकायःकुङ्कुमनीलोत्पलाभयातुत्थैः ।
सितकाचशङ्खफेनकमरीचाञ्जनपिप्पलीमधुकैः ॥ २३ ॥
चन्द्रेऽश्विनीसनाथे सुचूर्णितैरञ्जयेद्युगलमक्ष्णोः ।
तिमिरार्मरक्तराजीकण्डूकाचादिशममिच्छन् ॥ २४ ॥
मरिचवरलवणभागौ भागौ द्वौ कणसमुद्रफेनाभ्याम् ।
सौवीरभागनवकं चित्रायां चूर्णितं कफामयजित् ॥ २५ ॥
द्राक्षामृणालीस्वरसे क्षीरमद्यवसासु च ।
पृथक् दिव्याप्सु स्रोतोजं सप्तकृत्वो निषेचयेत् ॥ २६ ॥
तच्चूर्णितं स्थितं शङ्खे दृक्प्रसादनमञ्जनम् ।
शस्तं सर्वाक्षिरोगेषु विदेहपतिनिर्मितम् ॥ २७ ॥
निर्दग्धं बादराङ्गारैस्तुत्थं चेत्थं निषेचितम् ।
क्रमादजापयःसर्पिःक्षौद्रे तस्मात् पलद्वयम् ॥ २८ ॥

१ 'मृद्वीकां शर्करा' इत्यरुणः. २ 'ग्गुगुल' इति पाठः.

कार्षिकैस्ताप्यमरिचस्रोतोजकटुकानतैः ।
पटुरोध्रशिलापथ्याकणैलाञ्जनफेनिकैः ॥ २९ ॥
युक्तं पलेन यष्ट्याश्च मूषान्तर्ध्मातचूर्णितम् ।
हन्ति काचार्मनक्तान्ध्यरक्तराजीः सुशीलितः ॥ ३० ॥
चूर्णो विशेषात्तिमिरं भास्करो भास्करो यथा ।
त्रिंशद्भागा भुजङ्गस्य गन्धपाषाणपञ्चकम् ॥
शुल्बतारकयोर्द्वौ द्वौ वङ्गस्यैकोऽञ्जनात्त्रयम्[1] ॥ ३१ ॥
अन्धमूषीकृतं ध्मातं पक्कं विमलमञ्जनम् ।
तिमिरान्तकरं लोके द्वितीय इव भास्करः ॥ ३२ ॥

गोमूत्रे छगणरसेऽम्लकाञ्जिके च
स्त्रीस्तन्ये हविषि विषे च माक्षिके च ।
यत्तुत्थं ज्वलितमनेकशो निषिक्तं
तत्कुर्याद्गरुडसमं नरस्य चक्षुः ॥ ३३ ॥

श्रेष्ठाजलं भृङ्गरसं सविषाज्यमजापयः ।
यष्टीरसं च यत्सीसं सप्तकृत्वः पृथक् पृथक् ॥ ३४ ॥

तप्तं तप्तं पायितं तच्छलाका
नेत्रे युक्ता साञ्जनानञ्जना वा ।
तैमिर्यार्मस्रावपैच्छिल्यपैल्लं
कण्डूं जाड्यं रक्तराजीं च हन्ति ॥ ३५ ॥

रसेन्द्रभुजगौ तुल्यौ तयोस्तुल्यमथाञ्जनम् ।
ईषत्कर्पूरसंयुक्तमञ्जनं तिमिरापहम् ॥ ३६ ॥

---

१ 'जनत्रयम्' इति क्वचित्.

यो गृध्रस्तरुणरविप्रकाशगल-
स्तस्यास्थं समयमृतस्य गोशकृद्भिः ।
निर्दग्धं समघृतमञ्जनं च पेष्यं
योगोऽयं नयनबलं करोति गार्ध्रम् ॥ ३७ ॥

कृष्णसर्पवदने सहविष्कं दग्धमञ्जनमनिःसृतधूमम् ।
चूर्णितं नलदपत्रविमिश्रं भिन्नतारमपि रक्षति चक्षुः॥३८॥

कृष्णं सर्पं मृतं न्यस्य चतुरश्चापि वृश्चिकान् ।
क्षीरकुम्भे त्रिसप्ताहं क्लेदयित्वाथ मन्थयेत् ॥ ३९ ॥

तत्र यन्नवनीतं स्यात्पुष्णीयात्तेन कुक्कुटम् ।
अन्धस्तस्य पुरीषेण प्रेक्षते ध्रुवमञ्जनात् ॥ ४० ॥

कृष्णसर्पवसा शङ्खः कतकात् फलमञ्जनम् ।
रसक्रियेयमचिरादन्धानां दर्शनप्रदा ॥ ४१ ॥

मरिचानि दशार्धपिचु-
स्ताप्यात्तुत्थार्धपलं पिचुर्यष्ट्याः ।
क्षीरार्द्रदग्धमञ्जन-
मप्रतिसाराख्यमुत्तमं तिमिरे ॥ ४२ ॥

अक्षबीजमरिचामलकत्वक्-
तुत्थयष्टिमधुकैर्जलपिष्टैः ।
छाययैव गुटिकाः परिशुष्का
नाशयन्ति तिमिराण्यचिरेण ॥ ४३ ॥

१ 'तुत्थात् पलं' इत्यरुणः.

मरिचामलकजलोद्भव-
तुत्थाञ्जनताप्यधातुभिः क्रमवृद्धैः ।
षण्माक्षिक इति योग-
स्तिमिरार्मक्लेदकाचकण्डूहन्ता ॥ ४४ ॥
रत्नानि रूप्यं स्फटिकं सुवर्णं
स्रोतोञ्जनं ताम्रमयः सशङ्खम् ।
कुचन्दनं लोहितगैरिकं च
चूर्णाञ्जनं सर्वदृगामयघ्नम् ॥ ४५ ॥
तिलतैलमक्षतैलं भृङ्गस्वरसोऽसनाच्च निर्यूहः ।
आयसपात्रविपक्वं करोति दृष्टेर्बलं नस्यम् ॥ ४६ ॥
दोषानुरोधेन च नैकशस्तं
स्नेहास्रविस्रावणरेकनस्यैः ।
उपाचरेदञ्जनमूर्धबस्ति-
बस्तिक्रियातर्पणलेपसेकैः ॥ ४७ ॥
सामान्यं साधनमिदम्, प्रतिदोषमतः शृणु ।
वातजे तिमिरे तत्र दशमूलाम्भसा घृतम् ॥ ४८ ॥
क्षीरे चतुर्गुणे श्रेष्ठाकल्कपक्वं पिबेत्ततः ।
त्रिफलापञ्चमूलानां कषायं क्षीरसंयुतम् ॥ ४९ ॥
एरण्डतैलसंयुक्तं योजयेच्च विरेचनम् ।
समूलजालजीवन्तीतुलां द्रोणेऽम्भसः पचेत् ॥ ५० ॥
अष्टभागस्थिते तस्मिंस्तैलप्रस्थं पय:समे ।

१ 'पय:समम्' इति पाठः.

बलात्रितयजीवन्तीवरीमूलैः पलोन्मितैः ॥ ५१ ॥
यष्टीपलैश्चतुर्भिश्च लोहपात्रे विपाचयेत् ।
लोह एव स्थितं मासं नावनादूर्ध्वजत्रुजान् ॥ ५२ ॥
वातपित्तामयान् हन्ति तद्विशेषाद् दृगाश्रयान् ।
केशास्यकन्धरास्कन्धपुष्टिलावण्यकान्तिदम् ॥ ५३ ॥
सितैरण्डजटासिंहीफलदारुवचानतैः ।
घोषया बिल्वमूलैश्च तैलं पक्वं पयोन्वितम् ॥ ५४ ॥
नस्यं सर्वोर्ध्वजत्रूत्थवातश्लेष्मामयार्तिजित् ।
वसाञ्जने च वैयाघ्री वाराही वा प्रशस्यते ॥ ५५ ॥
गृध्राहिकुक्कुटोत्था वा मधुकेनान्विता पृथक् ।
प्रत्यञ्जने च स्रोतोजं रसक्षीरघृते क्रमात् ॥ ५६ ॥
निषिक्तं पूर्ववद्योज्यं तिमिरघ्नमनुत्तमम् ।
न चेदेवं शमं याति ततस्तर्पणमाचरेत् ॥ ५७ ॥
शताह्वाकुष्ठनलदकाकोलीद्वययष्टिभिः ।
प्रपौण्डरीकसरलपिप्पलीदेवदारुभिः ॥ ५८ ॥
सर्पिरष्टगुणक्षीरं पक्वं तर्पणमुत्तमम् ।
मेदसस्तद्वदैणेयाद्दुग्धसिद्धात्स्वजाहृतात् ॥ ५९ ॥
उद्धृतं साधितं तेजो मधुकोशीरचन्दनैः ।
श्वाविच्छल्यकगोधानां दक्षतित्तिरिबर्हिणाम् ॥ ६० ॥
पृथक्पृथगनेनैव विधिना कल्पयेद्वसाम् ।
प्रसादनं स्नेहनं च पुटपाकं प्रयोजयेत् ॥ ६१ ॥
वातपीनसवच्चात्र निरूहं सानुवासनम् ।

पित्तजे तिमिरे सर्पिर्जीवनीयफलत्रयैः ॥ ६२ ॥
विपाचितं पाययित्वा स्निग्धस्य व्यधयेत्सिराम् ।
शर्करैलात्रिवृच्चूर्णैर्मधुयुक्तैर्विरेचयेत् ॥ ६३ ॥
सुशीतान् सेकलेपादीन् युञ्ज्यान्नेत्रास्यमूर्धसु ।
सारिवापद्मकोशीरमुक्ताशाबरचन्दनैः ॥ ६४ ॥
वर्तिः शस्ताञ्जने चूर्णस्तथा पत्रोत्पलाञ्जनैः ।
सनागपुष्पकर्पूरयष्ट्याह्वस्वर्णगैरिकैः ॥ ६५ ॥
सौवीराञ्जनतुत्थकशृङ्गीधात्रीफलस्फटिककर्पूरम् ।
पञ्चांशं पञ्चांशं त्र्यंशमथैकांशमञ्जनं तिमिरघ्नम् ॥ ६६ ॥
नस्यं चाज्यं शृतं क्षीरजीवनीयसितोत्पलैः ।
श्लेष्मोद्भवेऽमृताक्काथवराकणशृतं घृतम् ॥ ६७ ॥
विध्येत्सिरां पीतवतो दद्याच्चानु विरेचनम् ।
क्काथं पूगाभयाशुण्ठीकृष्णाकुम्भनिकुम्भजम् ॥ ६८ ॥
ह्रीबेरदारुद्विनिशाकृष्णाकल्कैः पयोन्वितैः ।
द्विपञ्चमूलनिर्यूहे तैलं पक्वं च नावनम् ॥ ६९ ॥
शङ्खप्रियङ्गुनेपालीकटुत्रिकफलत्रिकैः ।
द्रव्यैमल्याय विमला वर्तिः स्यात्कोकिला पुनः ॥ ७० ॥
कृष्णलोहरजोव्योषसैन्धवत्रिफलाञ्जनैः ।
शशगोखरसिंहोष्ट्रद्विजा लालाटमस्थि च ॥ ७१ ॥
श्वेतगोवालमरिचशङ्खचन्दनफेनकम् ।
पिष्टं स्तन्याजदुग्धाभ्यां वर्तिस्तिमिरशुक्रजित् ॥
रक्तजे पित्तवत्सिद्धिः शीतैश्चास्रं प्रसादयेत् ॥ ७२ ॥

द्राक्षया नलदरोध्रयष्टिभिः
शङ्खताम्रहिमपद्मपद्मकैः ।
सोत्पलैश्छगलदुग्धवर्तितै-
रस्रजं तिमिरमाशु नश्यति ॥ ७३ ॥

संसर्गसन्निपातोत्थे यथादोषोदयं क्रिया ।
सिद्धं मधूकक्रमिजिन्मरिचामरदारुभिः ॥ ७४ ॥
सक्षीरं नावनं तैलं पिष्टैर्लेपो मुखस्य च ।
नतनीलोत्पलानन्तायष्ट्याह्वसुनिषण्णकैः ॥ ७५ ॥
साधितं नावने तैलं शिरोबस्तौ च शस्यते ।
वृषादुशीरनिर्यूहे चूर्णितं कणसैन्धवम् ॥ ७६ ॥
तच्छृतं सघृतं भूयः पचेत्क्षौद्रं घने क्षिपेत् ।
शीते चास्मिन् हितमिदं सर्वजे तिमिरेऽञ्जनम् ॥ ७७ ॥
अस्थीनि मज्जपूर्णानि सत्त्वानां रात्रिचारिणाम् ।
स्रोतोजाञ्जनयुक्तानि वहत्यम्भसि वासयेत् ॥ ७८ ॥
मासं विंशतिरात्रं वा ततश्चोद्धृत्य शोषयेत् ।
समेषशृङ्गीपुष्पाणि सयष्ट्याह्वानि तानि तु ॥ ७९ ॥
चूर्णितान्यञ्जनं श्रेष्ठं तिमिरे सान्निपातिके ।
काचेऽप्येषा क्रिया मुक्त्वा सिरां, यन्त्रनिपीडिताः ॥ ८० ॥
आन्ध्याय स्युर्मला, दद्यात्तान्ये रक्ते जलौकसः ।
गुडः फेनोऽञ्जनं कृष्णा मरिचं कुङ्कुमाद्रजः ॥ ८१ ॥

रसक्रियेयं सक्षौद्रा काचयापनमञ्जनम् ।
नकुलान्धे त्रिदोषोत्थे तमिर्यंविहितो विधिः ॥ ८२ ॥
रसक्रिया घृतक्षौद्रगोमयस्वरसद्रुतैः ।
तार्क्ष्यगैरिकतालीसैर्निशान्ध्ये हितमञ्जनम् ॥ ८३ ॥
दध्ना विघृष्टं मरिचं रात्र्यान्ध्येऽञ्जनमुत्तमम् ।
करञ्जिकोत्पलस्वर्णगैरिकाम्भोजकेसरैः ॥ ८४ ॥
पिष्टैर्गोमयतोयेन वर्तिर्दोषान्ध्यनाशिनी ।
अजामूत्रेण वा कौन्तीकृष्णास्रोतोजसैन्धवैः ॥ ८५ ॥
कालानुसारीत्रिकटुत्रिफलालमनःशिलाः ।
सफेनाश्छागदुग्धेन रात्र्यान्ध्ये वर्तयो हिताः ८६ ॥
सन्निवेश्य यकृन्मध्ये पिप्पलीरदहन्पचेत् ।
ताः शुष्का मधुना घृष्टा निशान्ध्ये श्रेष्ठमञ्जनम् ॥ ८७ ॥
खादेच्च प्लीहयकृती माहिषे तैलसर्पिषा ।
घृते सिद्धानि जीवन्त्याः पल्लवानि च भक्षयेत् ॥ ८८ ॥
तथातिमुक्तकैरण्डशेफाल्यभिरुजानि च ।
भृष्टं घृतं कुम्भयोनेः पत्रैः पाने च पूजितम् ॥ ८९ ॥
धूमराख्याम्लपित्तोष्णविदाहे जीर्णसर्पिषा ।
स्निग्धं विरेचयेच्छीतैः शीतैर्दिह्याच्च सर्वतः ॥ ९० ॥
गोशकृद्रसदुग्धाज्यैर्विपक्वं शस्यतेऽञ्जनम् ।
स्वर्णगैरिकतालीसचूर्णावापा रसक्रिया ॥ ९१ ॥

---

१ 'न्ध्येऽञ्जनमु' इति पाठः. २ 'रात्र्यन्धे व' इति पाठः.

मेदाशाबरकानन्तामञ्जिष्ठादार्वियष्टिभिः ।
क्षीराष्टांशं घृतं पक्वं सतैलं नावनं हितम् ॥ ९२ ॥
तर्पणं क्षीरसर्पिः स्याद्दशाम्यति सिराव्यधः ।
चिन्ताभिघातभीशोकरौक्ष्यात्सोत्कटकासनात् ॥ ९३ ॥
विरेकनस्यवमनपुटपाकादिविभ्रमात् ।
विदग्धाहारवमनात्क्षुत्तृष्णादिविधारणात् ॥ ९४ ॥
अक्षिरोगावसानाच्च पश्येत्तिमिररोगिवत् ।
यथास्वं तत्र युञ्जीत दोषादीन् वीक्ष्य भेषजम् ॥ ९५ ॥

सूर्योपरागानलविद्युदादि-
विलोकनेनोपहतेक्षणस्य ।
सन्तर्पणं स्निग्धहिमादि कार्यं
तथाञ्जनं हेम घृतेन घृष्टम् ॥ ९६ ॥

चक्षूरक्षायां सर्वकालं मनुष्यै-
र्यत्नः कर्तव्यो जीविते यावदिच्छा ।
व्यर्थो लोकोऽयं तुल्यरात्रिन्दिवानां
पुंसामन्धानां विद्यमानेऽपि वित्ते ॥ ९७ ॥

त्रिफला रुधिरस्रुतिर्विशुद्धि-
र्मनसो निर्वृतिरञ्जनं च नस्यम् ।
शकुनाशनता[1] सपादपूजा
घृतपानं च सदैव नेत्ररक्षा ॥ ९८ ॥

---

१ 'नाशनता' इति पाठः.

अहितादशनात्सदा निवृत्ति-
भृशभास्वच्चलसूक्ष्मवीक्षणाच्च ।
मुनिना निमिनोपदिष्टमेतत्
परमं रक्षणमीक्षणस्य पुंसाम् ॥ ९९ ॥"

---

## चतुर्दशोऽध्यायः ।

अथातो लिङ्गनाशप्रतिषेधं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"विध्येत्सुजातं निःप्रेक्ष्यं लिङ्गनाशं कफोद्भवम् ।
आवर्तक्यादिभिः षड्भिर्विवर्जितमुपद्रवैः ॥ १ ॥
सोऽसञ्जातो हि विषमो दधिमस्तुनिभस्तनुः ।
शलाकयाऽवकृष्टोऽपि पुनरूर्ध्वं प्रपद्यते ॥ २ ॥
करोति वेदनां तीव्रां दृष्टिं च स्थगयेत्पुनः ।
श्लेष्मलैः पूर्यते चाशु सोऽन्यैः सोपद्रवैश्चिरात् ॥ ३ ॥
श्लैष्मिको लिङ्गनाशो हि सितत्वाच्छ्लेष्मणः सितः ।
तस्यान्यदोषाभिभवाद्भवत्यानीलता गदे ॥ ४ ॥
तत्रावर्तचला दृष्टिरावर्तक्यरुणाऽसिता ।
शर्करार्कपयोलेशनिचितेव घनाति च ॥ ५ ॥
राजीमती दृङ्निचिता शालिशूकाभराजिभिः ।
विषमच्छिन्नदग्धाभा सरुक्छिन्नांशुका स्मृता ॥ ६ ॥
दृष्टिः कांस्यसमच्छाया चन्द्रकी चन्द्रकाकृतिः ।

छत्राभा नैकवर्णा च छत्रकी नाम नीलिका ॥ ७ ॥
न विध्येदसिराहाणां न तृट्पीनसकासिनाम् ।
नाजीर्णिभीरुवमितशिरःकर्णाक्षिशूलिनाम् ॥ ८ ॥
अथ साधारणे काले शुद्धसम्भोजितात्मनः ।
देशे प्रकाशे पूर्वाह्णे भिषग् जानूच्चपीठगः ॥ ९ ॥
यन्त्रितस्योपविष्टस्य स्विन्नाक्षस्य मुखानिलैः ।
अङ्गुष्ठमृदिते नेत्रे दृष्टौ दृष्ट्वोत्प्लुतं मलम् ॥ १० ॥
स्वनासां प्रेक्षमाणस्य निष्कम्पं मूर्ध्नि धारिते ।
कृष्णादर्धाङ्गुलं मुक्त्वा तदर्धार्धमपाङ्गतः ॥ ११ ॥
तर्जनीमध्यमाङ्गुष्ठैः शलाकां निश्चलं धृताम् ।
दैवच्छिद्रं नयेत्पार्श्वादूर्ध्वमामन्थयन्निव ॥ १२ ॥
सव्यं दक्षिणहस्तेन नेत्रं सव्येन चेतरत् ।
विध्येत्
सुविद्धे शब्दः स्यादरुक्चाम्बुलवस्रुतिः ॥ १३ ॥
सान्त्वयन्नातुरं चानु नेत्रं स्तन्येन सेचयेत् ।
शलाकायास्ततोऽग्रेण निर्लिखेन्नेत्रमण्डलम् ॥ १४ ॥
अबाधमानः शनकैर्नासां प्रतिनुदंस्ततः ।
[1]उच्छिङ्घनाच्चापहरेद्दृष्टिमण्डलगं कफम् ॥ १५ ॥
स्थिरे दोषे चले वाऽपि स्वेदयेदक्षि बाह्यतः ।
अथ दृष्टेषु रूपेषु शलाकामाहरेच्छनैः ॥ १६ ॥

---

१ 'उत्सिङ्घनात्' इत्यरुणसम्मतः पाठः.

घृताप्लुतं पिचुं दत्वा बद्धाक्षं शाययेत्ततः ।
विद्धादन्येन पार्श्वेन तमुत्तानं द्वयोर्व्यधे ॥ १७ ॥
निवाते शयनेऽभ्यक्तशिरःपादं हिते रतम् ।
क्षवथुं कासमुद्गारं ष्ठीवनं पानमम्भसः ॥ १८ ॥
अधोमुखस्थितिं स्नानं दन्तधावनभक्षणम् ।
सप्ताहं नाचरेत्स्नेहपीतवच्चात्र यन्त्रणा ॥ १९ ॥
शक्तितो लङ्घयेत्सेको रुजि कोष्णेन सर्पिषा ।
सव्योषामलकं वाट्यमश्नीयात्सघृतं द्रवम् ॥ २० ॥
विलेपीं वा त्र्यहाच्चास्य क्वाथैर्मुक्त्वाक्षि सेचयेत् ।
वातघ्नैः सप्तमे त्वह्नि सर्वथैवाक्षि मोचयेत् ॥ २१ ॥
यन्त्रणामनुरुध्येत दृष्टेरास्थैर्यलाभतः ।
रूपाणि सूक्ष्मदीप्तानि सहसा नावलोकयेत् ॥ २२ ॥
शोफरागरुजादीनामभिमन्थस्य चोद्भवः ।
अहितैर्व्यधदोषाच्च यथास्वं तानुपाचरेत् ॥ २३ ॥
कल्किताः सघृता दूर्वायवगैरिकसारिवाः ।
मुखालेपे प्रयोक्तव्या रुजारागोपशान्तये ॥ २४ ॥
ससर्षपास्तिलास्तद्वन्मातुलुङ्गरसाप्लुताः ।
पयस्यासारिवानन्तामञ्जिष्ठामधुयष्टिभिः ॥ २५ ॥
अजाक्षीरयुतैर्लेपः सुखोष्णः शर्मकृत्परम् ।
रोध्रसैन्धवमृद्वीकामधुकैश्छागलं पयः ॥ २६ ॥
शृतमाश्च्योतनं योज्यं रुजारागविनाशनम् ।

---

१ 'बद्धाक्षं' इति पाठः.

मधुकोत्पलकुष्ठैर्वा द्राक्षालाक्षासितान्वितैः ॥ २७ ॥
वातघ्नसिद्धे पयसि श्रृतं सर्पिश्चतुर्गुणे ।
पद्मकादिप्रतीवापं सर्वकर्मसु शस्यते ॥ २८ ॥
सिरां तथानुपशमे स्निग्धस्विन्नस्य मोक्षयेत् ।
मन्थोक्तां च क्रियां कुर्यात्व्रणे रूढेऽञ्जनं मृदु ॥ २९ ॥
आढकीमूलमरिचहरितालरसाञ्जनैः ।
विद्धेऽक्ष्णि सगुडा वर्तिर्योज्या दिव्याम्बुपेषिता ॥ ३० ॥

जातीशिरीषधवमेषविषाणपुष्प-
वैडूर्यमौक्तिकफलं पयसा सुपिष्टम् ।
आजेन ताम्रममुना प्रतनु प्रदिग्धं
सप्ताहतः पुनरिदं पयसैव पिष्टम् ॥ ३१ ॥

पिण्डाञ्जनं हितमनातपशुष्कमक्ष्णि
विद्धे प्रसादजननं बलकृच्च दृष्टेः ।
स्रोतोजविद्रुमशिलाम्बुधिफेनतीक्ष्णै-
रस्यैव तुल्यमुदितं गुणकल्पनाभिः ॥ ३२ ॥"

---

## पञ्चदशोऽध्यायः ।

अथाऽतः सर्वाक्षिरोगविज्ञानं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"वातेन नेत्रेऽभिष्यण्णे[1] नासानाहोऽल्पशोफता ।

---

१ 'ऽभिष्यन्दे' इति क्वचित्.

शङ्खाक्षिभ्रूललाटस्य तोदस्फुरणभेदनम् ॥ १ ॥
शुष्काल्पा दूषिका शीतमच्छमश्रु चला रुजः ।
निमेषोन्मेषणं कृच्छ्राजन्तूनामिव सर्पणम् ॥ २ ॥
अक्ष्याध्मातमिवाभाति सूक्ष्मैः शल्यैरिवाचितम् ।
स्निग्धोष्णैश्चोपशमनं
सोऽभिष्यन्द उपेक्षितः ॥ ३ ॥
अधिमन्थो भवेत्तत्र कर्णयोर्नदनं भ्रमः ।
अरण्येव च मथ्यन्ते ललाटाक्षिभ्रुवादयः ॥ ४ ॥
हताधिमन्थः सोऽपि स्यात् प्रमादात्तेन वेदनाः ।
अनेकरूपा जायन्ते, व्रणो दृष्टौ च दृष्टिहा ॥ ५ ॥
मन्याक्षिशङ्खतो वायुरन्यतो वा प्रवर्तयेत् ।
व्यथां तीव्रामपैच्छिल्यरागशोफं विलोचनम् ॥ ६ ॥
सङ्कोचयति पर्यश्रु सोऽन्यतोवातसंज्ञितः ।
तद्वन्नेत्रं भवेज्जिह्मं शूनं वातविपर्यये ॥ ७ ॥
दाहो धूमायनं शोफः श्यावता वर्त्मनो बहिः ।
अन्तःक्लेदोऽश्रुपीतोष्णं रागः पीताभदर्शनम् ॥ ८ ॥
क्षारोक्षितक्षताक्षित्वं पित्ताभिष्यन्दलक्षणम् ।
ज्वलदङ्गारकीर्णाभं यकृत्पिण्डसमप्रभम् ॥ ९ ॥
अधिमन्थे भवेन्नेत्रं
स्यन्दे तु कफसम्भवे ।
जाड्यं शोफो महान् कण्डूर्निद्रान्नानभिनन्दनम् ॥ १० ॥

---

१ 'ऽन्यतो वात' इत्यरुणः. २ 'ह्यमूनं' इति ह्यरुणः.

सान्द्रस्निग्धबहुश्वेतपिच्छावद्दूषिकाश्रुता ।
अधिमन्थे नतं कृष्णमुन्नतं शुक्लमण्डलम् ॥ ११ ॥
प्रसेको नासिकाध्मानं पांशुपूर्णमिवेक्षणम् ।
रक्ताश्रुराजीदूषीकशुक्लमण्डलदर्शनम् ॥ १२ ॥
रक्तस्यन्देन नयनं सपित्तस्यन्दलक्षणम् ।
मन्थेऽक्षि ताम्रपर्यन्तमुत्पाटनसमानरुक् ॥ १३ ॥
रागेण बन्धूकनिभं ताम्यति स्पर्शनाक्षमम् ।
असृङ्निमग्नारिष्टाभं कृष्णमग्न्याभदर्शनम् ॥ १४ ॥
अधिमन्था यथास्वं च सर्वे स्यन्दाधिकव्यथाः ।
शङ्खदन्तकपोलेषु कपाले चातिरुक्कराः ॥ १५ ॥
वातपित्तोत्तरं घर्षतोदभेदोपदेहवत् ।
रूक्षदारुणवर्त्माक्षि कृच्छ्रोन्मीलनमीलनम् ॥ १६ ॥
विकूणनविशुष्कत्वशीतेच्छाशूलपाकवत् ।
उक्तः शुष्काक्षिपाकोऽयम्

सशोफः स्यात्त्रिभिर्मलैः ॥१७॥
सरक्तैस्तत्र शोफोऽतिरुग्दाहष्ठीवनादिमान् ।
पक्वोदुम्बरसङ्काशं जायते शुक्लमण्डलम् ॥ १८ ॥
अश्रूष्णशीतविशदपिच्छलाच्छघनं मुहुः ।
अल्पशोफेऽल्पशोफस्तु पाकोऽन्यैर्लक्षणैस्तथा ॥ १९ ॥
अक्षिपाकात्यये शोफः संरम्भः कलुषाश्रुता ।
कफोपदिग्धमसितं सितं प्रक्लेदरागवत् ॥ २० ॥

दाहो दर्शनसंरोधो वेदनाश्चानवस्थिताः ।
अक्षसारोऽम्लतां नीतः पित्तरक्तोल्बणैर्मलैः ॥ २१ ॥
सिराभिर्नेत्रमारूढः करोति श्यावलोहितम् ।
सशोफदाहपाकाश्रु भृशं चाविलदर्शनम् ॥ २२ ॥
अम्लोषितोऽयम्

इत्युक्ता गदाः षोडश सर्वगाः ।
हताधिमन्थमेतेषु साक्षिपाकात्ययं त्यजेत् ॥ २३ ॥
वातोद्भूतः पञ्चरात्रेण दृष्टिं
सप्ताहेन श्लेष्मजातोऽधिमन्थः ।
रक्तोत्पन्नो हन्ति तद्वत्रिरात्रात्
मिथ्याचारात् पैत्तिकः सद्य एव ॥ २४ ॥"

---

## षोडशोऽध्यायः ।

अथाऽतः सर्वाक्षिरोगप्रतिषेधं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"प्राग्रूप एव स्यन्देषु तीक्ष्णगण्डूषनावनम् ।
कारयेदुपवासं च कोपादन्यत्र वातजात् ॥ १ ॥
दाहोपदेहरागाश्रुशोफशान्त्यै बिडालकम् ।
कुर्यात्सर्वत्र पत्रैलामरिचस्वर्णगैरिकैः ॥ २ ॥
सरसाञ्जनयष्ट्याह्वनतचन्दनसैन्धवैः ।
सैन्धवं नागरं तार्क्ष्यं भृष्टं मण्डेन सर्पिषः ॥ ३ ॥

वातजे घृतभृष्टं वा योज्यं शबरदेशजम् ।
मांसीपद्मककाकोलीयष्ट्याह्वैः पित्तरक्तयोः ॥ ४ ॥
मनोह्वाफलिनीक्षौद्रैः कफे सर्वैस्तु सर्वजे ।
सितमरिचभागमेकं चतुर्मनोह्वं द्विरष्टशाबरकम् ।
संचूर्ण्यं वस्त्रबद्धं प्रकुपितमात्रेऽवगुण्ठनं नेत्रे ॥ ५ ॥

आरण्याश्छगणरसे पटावबद्धाः
सुस्विन्ना नखवितुषीकृताः कुलत्थाः ।
तच्चूर्णं सकृदवचूर्णनान्निशीथे
नेत्राणां विधमति सद्य एव कोपम् ॥ ६ ॥

वोषाभयातुत्थकयष्टिरोध्रै-
र्भूती ससूक्ष्मैः श्लथवस्त्रबद्धैः ।
ताम्रस्थधान्याम्लनिमग्नमूर्ति-
रर्तिं जयत्यक्षिणि नैकरूपाम् ॥ ७ ॥

षोडशभिः सलिलपलैः
पलं तथैकं कटङ्कटेर्याः सिद्धम् ।
सेकोऽष्टभागशिष्टः
क्षौद्रयुतः सर्वदोषकुपिते नेत्रे ॥ ८ ॥

वातपित्तकफसन्निपातजां
नेत्रयोर्बहुविधामपि व्यथाम् ।
शीघ्रमेव जयति प्रयोजितः
शिग्रुपल्लवरसः समाक्षिकः ॥ ९ ॥

तरुणमुरुबुकपत्रं
मूलं च विभिद्य सिद्धमाजे क्षीरे।
वाताभिष्यन्दरुजं
सद्यो विनिहन्ति सक्तुपिण्डिका चोष्णा ॥१०॥
आश्चोतनं मारुतजे क्वाथो बिल्वादिभिर्हितः।
कोष्णः सहैरण्डजटाबृहतीमधुशिग्रुभिः ॥ ११ ॥
ह्रीबेरवक्रशार्ङ्गेष्टोदुम्बरत्वक्षु साधितम्।
साम्भसा पयसाजेन शूलाश्चोतनमुत्तमम् ॥ १२ ॥
मञ्जिष्ठारजनीलाक्षाद्राक्षार्द्धिमधुकोत्पलैः।
क्वाथः सशर्करः शीतः सेचनं रक्तपित्तजित् ॥ १३ ॥
कसेरुयष्ट्याह्वरजस्तान्तवे शिथिलं स्थितम्।
अप्सु दिव्यासु निहितं हितं स्यन्देऽस्रपित्तजे ॥ १४ ॥
पुण्ड्रयष्टीनिशामूर्ती क्षुता स्तन्ये सशर्करे।
छागदुग्धेऽथवा दाहरुग्रागाश्रुनिवर्तनी ॥ १५ ॥
श्वेतरोध्रं समधुकं घृतभृष्टं सुचूर्णितम्।
वस्त्रस्थं स्तन्यमृदितं पित्तरक्ताभिघातजित् ॥ १६ ॥
नागरत्रिफलानिम्बवासारोध्ररसं[१] कफे।
कोष्णमाश्चोतनम्
मिश्रैर्भेषजैः सान्निपातिके ॥ १७ ॥
सर्पिः पुराणं पवने पित्ते शर्करया युतम्[२]।
व्योषसिद्धं कफे पीत्वा यवक्षारावचूर्णितम् ॥ १८ ॥

---

१ 'रसः क' इति पाठः. २ 'यान्वितम्' इति पाठः.

स्रावयेद्रुधिरं भूयस्ततः स्निग्धं विरेचयेत् ।
आनूपवेसवारेण शिरोवदनलेपनम् ॥ १९ ॥
उष्णेन शूले दाहे तु पयःसर्पिर्युतैर्हिमैः ।
तिमिरप्रतिषेधं च वीक्ष्य युञ्ज्याद्यथायथम् ॥ २० ॥
अयमेव विधिः सर्वो मन्थादिष्वपि शस्यते ।
अशान्तौ सर्वथा मन्थे भ्रुवोरुपरि दाहयेत् ॥ २१ ॥
रूक्ष्यं रूक्षेण गोदध्ना लिम्पेच्छीलत्वमागते ।
शुष्के तु मस्तुना वर्तिर्वातार्क्ष्यामयनाशिनी ॥ २२ ॥
सुमनः कोरकाः शङ्खस्त्रिफला मधुकं बला ।
पित्तरक्तापहा वर्तिः पिष्टा दिव्येन वारिणा ॥ २३ ॥
सैन्धवं त्रिफला व्योषं शङ्खनाभिः समुद्रजः ।
फेनः शैलेयकं सर्जो वर्तिः श्लेष्माक्षिरोगनुत् ॥ २४ ॥
प्रपौण्डरीकं यष्ट्याह्वं दार्वीं चाष्टपलं पचेत् ।
जलद्रोणे रसे पूते पुनः पक्वे घने क्षिपेत् ॥ २५ ॥
पुष्पाञ्जनाद्दशपलं कर्षं च मरिचात्ततः ।
कृतश्चूर्णोऽथवा वर्तिः सर्वाभिष्यन्दसम्भवान् ॥ २६ ॥
हन्ति रागरुजावर्षान् सद्यो दृष्टिं प्रसादयेत् ।
अयं पाशुपतो योगो रहस्यं भिषजां परम् ॥ २७ ॥
शुष्काक्षिपाके हविषः पानमक्ष्णोश्च तर्पणम् ।
घृतेन जीवनीयेन नस्यं तैलेन चाणुना ॥ २८ ॥

---

१ 'वीताक्ष्यामय' इति पाठः.

परिषेको हितश्चात्र पयः कोष्णं ससैन्धवम् ।
सर्पिर्युक्तं स्तन्यपिष्टमञ्जनं हि महौषधम् ॥ २९ ॥
वसा चानूपसत्त्वोत्था किंचित्सैन्धवनागरा ।
घृताक्तान् दर्पणे घृष्टान् केशान् मल्लकसम्पुटे ॥ ३० ॥
दग्ध्वाऽऽज्यपिष्टा लोहस्था सा मषी श्रेष्ठमञ्जनम् ।
सशोफे चाल्पशोफे च स्निग्धस्य व्यधयेत्सिराम् ॥ ३१ ॥
रेकः स्निग्धे पुनर्द्राक्षापथ्याक्वाथत्रिवृद्धृतैः ।
श्वेतरोध्रं घृतभृष्टं चूर्णितं तान्तवस्थितम् ॥ ३२ ॥
उष्णाम्बुना विमृदितं सेकः शूलहरः परम् ।
दार्वीप्रपौण्डरीकस्य क्वाथो वाऽऽश्चोतने हितः ॥ ३३ ॥
सन्धावांश्च प्रयुञ्जीत घर्षरागाश्रुरुग्घरान् ।

ताम्रं लोहे मूत्रघृष्टं प्रयुक्तं
नेत्रे सर्पिर्धूपितं वेदनाघ्नम् ।
ताम्रैर्घृष्टो गव्यदघ्नः सरो वा
युक्तः कृष्णासैन्धवाभ्यां वरिष्ठः ॥ ३४ ॥
शङ्खं ताम्रे स्तन्यघृष्टं घृताक्तैः
शम्याः पत्रैर्धूपितं तद्यवैश्च ।
नेत्रे युक्तं हन्ति सन्धावसंज्ञं
क्षिप्रं घर्षं वेदनां चातितीव्राम् ॥ ३५ ॥

उदुम्बरफलं लोहेघृष्टं स्तन्येन धूपितम् ।

---

१ 'स्निग्धैः पु' इति पाठः. २ 'लोहे घृष्टं' इति हस्तरुणः.

साज्यैः शमीच्छदैर्दाहशूलरागाश्रुहर्षजित् ॥ ३६ ॥
शिग्रुपल्लवनिर्यासः सुघृष्टस्ताम्रसम्पुटे ।
घृतेन धूपितो हन्ति शोफघर्षाश्रुवेदनाः ॥ ३७ ॥
तिलाम्भसा मृत्कपालं कांस्यं घृष्टं सुधूपितम् ।
निम्बपत्रैर्घृताभ्यक्तैर्घर्षशूलाश्रुरागजित् ॥ ३८ ॥
सन्धावेनाञ्जिते नेत्रे विगतौषधवेदने ।
स्तन्येनाश्चोतनं कार्यं त्रिःपरं नाञ्जयेच्च तैः ॥ ३९ ॥
तालीसपत्रचपलानतलोहरजोऽञ्जनैः ।
जातीमुकुलकासीससैन्धवैर्मूत्रपेषितैः ॥ ४० ॥
ताम्रमालिप्य सप्ताहं धारयेत्पेषयेत्ततः ।
मूत्रेणैवानु गुटिकाः कुर्याच्छायाविशोषिताः ॥ ४१ ॥
ताः स्तन्यघृष्टा घर्षाश्रुशोफकण्डूविनाशनाः ।
व्याघ्रीवल्कमधुकं ताम्ररजोऽजाक्षीरकल्कितम् ॥ ४२ ॥
शम्यामलकपत्राज्यधूपितं शोकरुक्प्रणुत् ।
अम्लोषिते प्रयुञ्जीत पित्ताभिष्यन्दसाधनम् ॥ ४३ ॥
उत्क्लिष्टाः कफपित्तास्रनिचयोत्थाः कुकूणकः ।
पक्ष्मोपरोधः शुष्काक्षिपाकः पूयालसो बिसः ॥ ४४ ॥
पोथक्यम्लोषितोऽल्पाख्यः स्यन्दमन्था विनानिलात् ।
एतेऽष्टादश पिल्लाख्या दीर्घकालानुबन्धिनः ॥ ४५ ॥
चिकित्सा पृथगेतेषां स्वं स्वमुक्ताथ वक्ष्यते ।
पिल्लीभूतेषु सामान्यात्

अथ पिल्लाक्षिरोगिणः ॥ ४६ ॥

स्निग्धस्य छर्दितवतः सिराविद्धहृतासृजः।
विरिक्तस्य च वर्त्मानु निर्लिखेदाविशुद्धितः॥ ४७ ॥
तुत्थकस्य पलं श्वेतमरिचानि च विंशतिः।
त्रिंशता काञ्जिकपलैः पिष्ट्वा ताम्रे निधापयेत्॥ ४८ ॥
पिल्लानपिल्लान् कुरुते बहुवर्षोत्थितानपि।
तत्सेकेनोपदेहाश्रुकण्डूशोफांश्च नाशयेत्॥ ४९ ॥
करञ्जबीजं सुरसं सुमनःकोरकाणि च।
संक्षुद्य साधयेत्क्वाथे पूते तत्र रसक्रिया॥ ५० ॥
अञ्जनं पिल्लभैषज्यं पक्ष्मणां च प्ररोहणम्।
रसाञ्जनं सर्जरसो रीतिपुष्पं मनःशिला॥ ५१ ॥
समुद्रफेनं लवणं गैरिकं मरिचानि च।
अञ्जनं मधुना पिष्टं क्लेदकण्डूघ्नमुत्तमम्॥ ५२ ॥
अभयारसपिष्टं वा तगरं पिल्लनाशनम्।
भावितं बस्तमूत्रेण सस्नेहं देवदारु च॥ ५३ ॥
सैन्धवत्रिफलाकृष्णाकटुकाशङ्खनाभयः।
सताम्ररजसो वर्तिः पिल्लशुक्रकनाशिनी॥ ५४ ॥
पुष्पकासीसचूर्णो वा सुरसारसभावितः।
ताम्रे दशाहं तत् पैल्ल्यपक्ष्मशातजिदञ्जनम्॥ ५५ ॥
अलं च सौवीरकमञ्जनं च
ताभ्यां समं ताम्ररजश्च सूक्ष्मम्।

---

१ 'पदेहास्तु कण्डू' इति पाठः।

पिल्लेषु रोमाणि निषेवितोऽसौ
चूर्णः करोत्येकशलाकयापि ॥ ५६ ॥
लाक्षानिर्गुण्डीभृङ्गदार्वीरसेन
श्रेष्ठं कार्पासं भावितं सप्तकृत्वः ।
दीपः प्रज्वाल्यः सर्पिषा तत्समुत्था
श्रेष्ठा पिल्लानां रोपणार्थे मषी सा ॥ ५७ ॥

वर्त्मावलेखं बहुशस्तद्वच्छोणितमोक्षणम् ।
पुनःपुनर्विरेकं च नित्यमाश्च्योतनाञ्जनम् ॥ ५८ ॥
नावनं धूमपानं च पिल्लरोगातुरो भजेत् ।
पूयालसे त्वशान्तेऽन्तर्दाहः सूक्ष्मशलाकया ॥ ५९ ॥
चतुर्नवतिरित्यक्ष्णोर्हेतुलक्षणसाधनैः ।
परस्परमसङ्कीर्णाः कार्त्स्न्येन गदिता गदाः ॥ ६० ॥
सर्वदा च निषेवेत स्वस्थोऽपि नयनप्रियः ।
पुराणयवगोधूमशालिषष्टिककोद्रवान् ॥ ६१ ॥
मुद्गादीन् कफपित्तघ्नान् भूरिसर्पिःपरिप्लुतान् ।
शाकं चैवंविधं मांसं जाङ्गलं दाडिमं सिताम् ॥ ६२ ॥
सैन्धवं त्रिफलां द्राक्षां वारि पाने च नाभसम् ।
आतपत्रं पदत्राणं विधिवद्दोषशोधनम् ॥ ६३ ॥
वर्जयेद्वेगसंरोधमजीर्णाध्यशनानि च ।
शोकक्रोधदिवास्वप्ननिशाजागरणानि च ॥ ६४ ॥
विदाहि विष्टम्भकरं यच्चेहाहारभेषजम् ।

द्वे पादमध्ये पृथुसन्निवेशे
सिरे गते ते बहुधा च नेत्रे ।
ता म्रक्षणोद्वर्तनलेपनादीन्
पादप्रयुक्तान्नयनं नयन्ति ॥ ६५ ॥
मलोष्णसङ्घट्टनपीडनाद्यै-
स्ता दूषयन्ते नयनानि दुष्टाः ।
भजेत्सदा दृष्टिहितानि तस्मा-
दुपानदभ्यञ्जनधावनानि" ॥ ६६ ॥

---

## सप्तदशोऽध्यायः ।

अथातः कर्णरोगविज्ञानीयं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"प्रतिश्यायजलक्रीडाकर्णकण्डूयनैर्मरुत् ।
मिथ्यायोगेन शब्दस्य कुपितोऽन्यैश्च कोपनैः ॥ १ ॥
प्राप्य श्रोत्रसिराः कुर्याच्छूलं स्रोतसि वेगवत् ।
अर्धावभेदकं स्तम्भं शिशिरानभिनन्दनम् ॥ २ ॥
चिराच्च पाकं पक्वं तु लसीकामल्पशः स्रवेत् ।
श्रोत्रं शून्यमकस्माच्च स्यात्सञ्चारविचारवत् ॥ ३ ॥
शूलं पित्तात्सदाहोषाशीतेच्छाश्वयथुज्वरम् ।
आशुपाकं प्रपक्वं च सपीतलसिकास्रुति ॥ ४ ॥
सा लसीका स्पृशेद्यद्यत्तत्पाकमुपैति च ।

कफाच्छिरोहनुग्रीवागौरवं मन्दता रुजः ॥ ५ ॥
कण्डूः श्वयथुरुष्णेच्छा पाकाच्छ्वेतघना स्रुतिः ।
करोति श्रवणे शूलमभिघातादिपीडितम् ॥ ६ ॥
रक्तं पित्तसमानार्तिं किंचिद्वाधिकलक्षणम् ।
शूलं समुदितैर्दोषैः सशोफज्वरतीव्ररुक् ॥ ७ ॥
पर्यायादुष्णशीतेच्छं जायते श्रुतिजाड्यवत् ।
पक्वं सितासितारक्तघनपूयप्रवाहि च ॥ ८ ॥
शब्दवाहिसिरासंस्थे शृणोति पवने मुहुः ।
नादानकस्माद्विविधान्, कर्णनादं वदन्ति तम् ॥ ९ ॥
श्लेष्मणानुगतो वायुर्नादो वा समुपेक्षितः ।
उच्चैः कृच्छ्राच्छ्रुतिं कुर्याद्बधिरत्वं क्रमेण च ॥ १० ॥
वातेन शोषितः श्लेष्मा स्रोतो लिम्पेत्ततो भवेत् ।
रुग्गौरवं पिधानं च, स प्रतीनाहसंज्ञितः ॥ ११ ॥
कण्डूशोफौ कफाच्छ्रोत्रे स्थिरौ तत्संज्ञया स्मृता ।
कफो विदग्धः पित्तेन सरुजं नीरुजं त्वपि ॥ १२ ॥
घनपूतिबहुक्लेदं कुरुते पूतिकर्णकम् ।
वातादिदूषितं श्रोत्रं मांसासृक्क्लेदजां रुजम् ॥ १३ ॥
खादन्तो जन्तवः कुर्युस्तीव्रां स कृमिकर्णकः ।
श्रोत्रकण्डूयनाजाते क्षते स्यात्पूर्वलक्षणः ॥ १४ ॥
विद्रधिः पूर्ववच्चान्यः
शोफोऽर्शोऽर्बुदमीरितम् ।

---

१ 'दूषितम्' इत्यरुणः. २ 'नार्तिं किं' इति पाठः.

तेषु रुक्पूतिकर्णत्वं बधिरत्वं च बाधते ॥ १५ ॥
गर्भेऽनिलात्सङ्कुचिता शष्कुली कूचिकर्णकः ।
एको नीरुगनेको वा गर्भे मांसाङ्कुरः स्थिरः ॥ १६ ॥
पिप्पली पिप्पलीमानः

सन्निपाताद्विदारिका ।

सवर्णः सरुजः स्तब्धः श्वयथुः स उपेक्षितः ॥ १७ ॥
कटुतैलनिभं पक्वः स्रवेत् कृच्छ्रेण रोहति ।
सङ्कोचयति रूढा च सा ध्रुवं कर्णशष्कुलीम् ॥ १८ ॥
सिरास्थः कुरुते वायुः पालीशोषं तदाह्वयम् ।
कृशा दृढा च तन्त्रीवत् पाली वातेन तन्त्रिका ॥ १९ ॥
सुकुमारे चिरोत्सर्गात्सहसैव प्रवर्धिते ।
कर्णे शोफः सरुक् पाल्यामरुणः परिपोटवान् ॥ २० ॥
परिपोटः स पवनात्

उत्पातः पित्तशोणितात् ।

गुर्वाभरणभाराद्यैः श्यावो रुग्दाहपाकवान् ॥ २१ ॥
श्वयथुः स्फोटपिटिकारागोषाक्लेदसंयुतः ।
पाल्यां शोफोऽनिलकफात्सर्वतो निर्व्यथः स्थिरः ॥ २२ ॥
स्तब्धः सवर्णः कण्डूमानुन्मन्थो गल्लिरश्च सः ।
दुर्विद्धे वर्धिते कर्णे सकण्डूदाहपाकरुक् ॥ २३ ॥

---

१ 'पिटका' इति पाठः.

श्वयथुः सन्निपातोत्थः, स नाम्ना दुःखवर्धनः ।
कफासृक्कृमिजाः सूक्ष्माः सकण्डूक्लेदवेदनाः ॥ २४ ॥
लेह्याख्याः पिटिकास्ता हि लिह्युः पालीमुपेक्षिताः ।
पिप्पली सर्वजं शूलं विदारी कुचिकर्णकः ॥ २५ ॥
एषामसाध्या याप्यैका तन्निकान्यांस्तु साधयेत् ।
पञ्चविंशतिरित्युक्ताः कर्णरोगा विभागतः ॥ २६ ॥"

## अष्टादशोऽध्यायः ।

अथाऽतः कर्णरोगप्रतिषेधं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"कर्णशूले पवनजे पिबेद्रात्रौ रसाशितः ।
वातघ्नसाधितं सर्पिः कर्णं स्विन्नं च पूरयेत् ॥ १ ॥
पत्राणां पृथगश्वत्थबिल्वार्कैरण्डजन्मनाम् ।
तैलसिन्धूत्थदिग्धानां स्विन्नानां पुटपाकतः ॥ २ ॥
रसैः कवोष्णैस्तद्वच्च मूलकस्यारलोरपि ।
गणे वातहरेऽम्लेषु मूत्रेषु च विपाचितः ॥ ३ ॥
महास्नेहो द्रुतं हन्ति सुतीव्रामपि वेदनाम् ।
महतः पञ्चमूलस्य काष्ठात्क्षौमेण वेष्टितात् ॥ ४ ॥
तैलसिक्तात्प्रदीप्ताग्रात् स्नेहः सद्यो रुजापहः ।
योज्यश्चैवं भद्रकाष्ठात् कुष्ठात् काष्ठाच्च सारलात् ॥ ५ ॥

वातव्याधिप्रतिश्यायविहितं हितमत्र च ।
वर्जयेच्छिरसा स्नानं शीताम्भःपानमह्न्यपि ॥ ६ ॥
पित्तशूले सितायुक्तघृतस्निग्धं विरेचयेत् ।
द्राक्षायष्टिश्रृतं स्तन्यं शस्यते कर्णपूरणम् ॥ ७ ॥
यष्ट्यनन्ताहिमोशीरकाकोलीरोध्रजीवकैः ।
मृणालबिसमञ्जिष्ठासारिवाभिश्च साधयेत् ॥ ८ ॥
यष्टीमधुरसप्रस्थं क्षीरद्विप्रस्थसंयुतम् ।
तैलस्य कुडवं नस्यपूरणाभ्यञ्जनैरिदम् ॥ ९ ॥
निहन्ति शूलदाहोषाः केवलं क्षौद्रमेव वा ।
यष्ट्यादिभिश्च सघृतैः कर्णौ दिह्यात्समन्ततः ॥ १० ॥
वामयेत् पिप्पलीसिद्धसर्पिःस्निग्धं कफोद्भवे ।
धूमनावनगण्डूषस्वेदान् कुर्यात्कफापहान् ॥ ११ ॥
लशुनार्द्रकशिग्रूणां सुरङ्ग्या मूलकस्य च ।
कदल्याः स्वरसः श्रेष्ठः कदुष्णः कर्णपूरणे ॥ १२ ॥
अर्काङ्कुरानम्लपिष्टांस्तैलाक्तांल्लवणान्वितान् ।
सन्निधाय स्नुहीकाण्डे कोरिते तच्छदावृतान् ॥ १३ ॥
स्वेदयेत्पुटपाकेन स रसः शूलजित्परम् ।
रसेन बीजपूरस्य कपित्थस्य च पूरयेत् ॥ १४ ॥
सूक्तेन पूरयित्वा वा फेनेनान्ववचूर्णयेत् ।
अजाविमूत्रवंशत्वक्सिद्धं तैलं च पूरणम् ॥ १५ ॥

सिद्धं वा सार्षपं तैलं हिङ्गुतुम्बरुनागरैः।
रक्तजे पित्तवत्कार्यं सिरां चाशु विमोक्षयेत् ॥ १६ ॥
पक्के पूयवहे कर्णे धूमगण्डूषनावनम्।
युञ्ज्यान्नाडीविधानं च दुष्टव्रणहरं च यत् ॥ १७ ॥
स्रोतः प्रमृज्य दिग्धं तु द्वौ कालौ पिचुवर्तिभिः।
पूरेण धूपयित्वा वा माक्षिकेण प्रपूरयेत् ॥ १८ ॥
सुरसादिगणक्वाथफाणिताक्तां च योजयेत्।
पिचुवर्तिं सुसूक्ष्मैश्च तच्चूर्णैरवचूर्णयेत् ॥ १९ ॥
शूलक्लेदगुरुत्वानां विधिरेष निवर्तकः।
प्रियङ्गुमधुकाम्बष्ठाधातक्युत्पलपर्णिभिः ॥ २० ॥
मञ्जिष्ठालोध्रलाक्षाभिः कपित्थस्य रसेन च।
पचेत्तैलं तदास्रावं निगृह्णात्याशु पूरणात् ॥ २१ ॥
नादबाधिर्ययोः कुर्याद्वातशूलोक्तमौषधम्।
श्लेष्मानुबन्धे श्लेष्माणं प्राग्जयेद्वमनादिभिः ॥ २२ ॥
एरण्डशिग्रुवरुणमूलकात्पत्रजे रसे।
चतुर्गुणे पचेत्तैलं क्षीरे चाष्टगुणोन्मिते ॥ २३ ॥
यष्ट्याह्वाक्षीरकाकोलीकल्कयुक्तं निहन्ति तत्।
नादबाधिर्यशूलानि नावनाभ्यङ्गपूरणैः ॥ २४ ॥
पक्कं प्रतिविषाहिङ्गुमिशित्वक्स्वर्जिकोषणैः।
ससूक्तैः पूरणात्तैलं रुक्स्रावश्रुतिनादनुत् ॥ २५ ॥

१ 'पूरयेद्रूप' इति पाठः।

कर्णनादे हितं तैलं सर्षपोत्थं च पूरणे ।
शुष्कमूलकखण्डानां क्षारो हिङ्गु महौषधम् ॥ २६ ॥
शतपुष्पावचाकुष्ठदारुशिग्रुरसाञ्जनम् ।
सौवर्चलयवक्षारस्वर्जिकौद्भिदसैन्धवम् ॥ २७ ॥
भूर्जग्रन्थिबिडं मुस्ता मधुसूक्तं चतुर्गुणम् ।
मातुलुङ्गरसस्तद्वत् कदलीस्वरसश्च तैः ॥ २८ ॥
पक्वं तैलं जयत्याशु सुकृच्छ्रानपि पूरणात् ।
कण्डूं क्लेदं च बाधिर्यं पूतिकर्णं च सकृमीन् ॥ २९ ॥
क्षारतैलमिदं श्रेष्ठं मुखदन्तामयेषु च ।
अथ सुप्ताविव स्यातां कर्णौ रक्तं हरेत्ततः ॥ ३० ॥
सशोफक्लेदयोर्मन्दश्रुतेर्वमनमाचरेत् ।
बाधिर्यं वर्जयेद्बालवृद्धयोश्चिरजं च यत् ॥ ३१ ॥
प्रतीनाहे परिक्लेद्य स्नेहस्वेदैर्विशोधयेत् ।
कर्णशोधनकेनानु कर्णौ तैलस्य पूरयेत् ॥ ३२ ॥
ससूक्तसैन्धवमधोर्मातुलुङ्गरसस्य वा ।
शोधनाद् रूक्षतोत्पत्तौ घृतमण्डस्य पूरणम् ॥ ३३ ॥
क्रमोऽयं मलपूर्णेऽपि कर्णे कण्डूं कफापहम् ।
नस्यादि तद्वच्छोफेऽपि कटूष्णैश्चात्र लेपनम् ॥ ३४ ॥
कर्णस्रावोदितं कुर्यात्पूतिकृमिण[२]कर्णयोः ।
पूरणं कटुतैलेन विशेषात् कृमिकर्णके ॥ ३५ ॥

१ 'श्रुतेर्वं' इति पाठः. २ 'कृमिकर्क' इति पाठः.

वमिपूर्वा हिता कर्णविद्रधौ विद्रधिक्रिया । •
पित्तोत्थकर्णशूलोक्तं कर्तव्यं क्षतविद्रधौ ॥ ३६ ॥
अर्शोऽर्बुदेषु नासावत्
आमा कर्णविदारिका ।
कर्णविद्रधिवत्साध्या यथादोषोदयेन च ॥ ३७ ॥
पालीशोषेऽनिलश्रोत्रशूलवन्नस्यलेपनम् ।
स्वेदं च कुर्यात् स्निग्धां च पालीमुद्वर्तयेत्तिलैः ॥ ३८ ॥
प्रियालबीजयष्ट्याह्वहयगन्धायवान्वितैः ।
ततः पुष्टिकरैः स्नेहैरभ्यङ्गं नित्यमाचरेत् ॥ ३९ ॥
शतावरीवाजिगन्धापयस्यैरण्डजीवकैः ।
तैलं विपक्वं सक्षीरं पालीनां पुष्टिकृत्परम् ॥ ४० ॥
कल्केन जीवनीयेन तैलं पयसि पाचितम् ।
आनूपमांसक्वाथे च पालीपोषणवर्धनम् ॥ ४१ ॥
पाली छित्त्वातिसङ्कीर्णां शेषां सन्धाय पोषयेत् ।
पाल्यैवं तन्त्रिकाख्यापि परिपोटेऽप्ययं विधिः ॥ ४२ ॥
उत्पाते शीतलैर्लेपो जलौकोहृतशोणिते ।
जम्ब्वाम्रपल्लवबलायष्टीरोध्रतिलोत्पलैः ॥ ४३ ॥
सधान्याम्लैः समञ्जिष्ठैः सकदम्बैः ससारिवैः ।
सिद्धमभ्यञ्जनं तैलं विसर्पोक्तघृतानि च ॥ ४४ ॥
उन्मन्थेऽभ्यञ्जनं तैलं गोधाकर्कवसान्वितम् ।
तालपत्र्यश्वगन्धार्कवाकुचीतिलसैन्धवैः ॥ ४५ ॥

सुरसालाङ्गलीभ्यां च सिद्धं तीक्ष्णं च नावनम् ।
दुर्विद्धेऽश्मन्तजम्ब्वाम्रपत्रक्वाथेन सेचिताम् ॥ ४६ ॥
तैलेन पालीं स्वभ्यक्तां सुश्लक्ष्णैरवचूर्णयेत् ।
चूर्णैर्मधुकमञ्जिष्ठाप्रपुण्डाह्वनिशोद्भवैः ॥ ४७ ॥
लाक्षाविडङ्गसिद्धं च तैलमभ्यञ्जने हितम् ।
स्विन्नां गोमयजैः पिण्डैर्बहुशः परिलेहिकाम् ॥ ४८ ॥
विडङ्गसारैरालिम्पेद्गुरभीमूत्रकल्कितैः ।
कौटजेङ्गुदकारञ्जबीजशम्याकवल्कलैः ॥ ४९ ॥
अथवाभ्यञ्जने तैर्वा कटुतैलं विपाचयेत् ।
सनिम्बपत्रमरिचमदनैर्लेहिकाव्रणे ॥ ५० ॥
छिन्ने तु कर्णे शुद्धस्य बन्धमालोच्य यौगिकम् ।
शुद्धास्रं लागयेल्लग्ने सद्यश्छिन्ने विशोधनम् ॥ ५१ ॥
अथ ग्रथित्वा केशान्तं कृत्वा छेदनलेखनम् ।
निवेश्य सन्धिं सुषमं न निम्नं न समुन्नतम् ॥ ५२ ॥
अभ्यज्य मधुसर्पिर्भ्यां पिचुप्लोतावगुण्ठितम् ।
सूत्रेणागाढशिथिलं बद्ध्वा चूर्णैरवाकिरेत् ॥ ५३ ॥
शोणितस्थापनैर्व्रणयमाचारं चादिशेत्ततः ।
सप्ताहादामतैलाक्तं शनैरपनयेत् पिचुम् ॥ ५४ ॥
सुरूढं जातरोमाणं श्लिष्टसन्धिसमस्थिरम् ।
सुवर्त्माणं सुरागं च शनैः कर्णं विवर्धयेत् ॥ ५५ ॥

---

१ 'तमालप' पा. २ 'छिन्नं तु कर्णं शु' इत्यरुणः. ३ 'रवाकिरन्' इति पाठः.

जलशूकः स्वयङ्गुप्ता रजन्यौ बृहतीफलम्[1] ।
अश्वगन्धाबलाहस्तिपिप्पलीगौरसर्षपाः ॥ ५६ ॥
मूलं कोशातकाश्वघ्नरूपिकासप्तपर्णजम् ।
छुच्छुन्दरी कालकृता गृहं मधुकरीकृतम् ॥ ५७ ॥
जतूका[2] जलजन्मा च तथा शाबरकन्दकम् ।
एभिः कल्कैः खरं पक्कं सतैलं माहिषं घृतम् ॥ ५८ ॥
हस्त्यश्वमूत्रेण परमभ्यङ्गात्कर्णवर्धनम् ।
अथ कुर्याद्वयस्थस्य छिन्नां शुद्धस्य नासिकाम् ॥ ५९ ॥
छिन्द्यान्नासासमं पत्रं तत्तुल्यं च कपोलतः ।
त्वङ्मांसं नासिकासन्ने रक्षंस्तत्तनुतां नयेत् ॥ ६० ॥
सीव्येद् गण्डं ततः सूच्या सेविन्या पिचुयुक्तया ।
नासाच्छेदे च लिखिते परिवर्त्योपरि त्वचम् ॥ ६१ ॥
कपोलवन्धं सन्दध्यात्सीव्येन्नासां च यत्नतः ।
नाडीभ्यामुत्क्षिपेदन्तः सुखोच्छ्वासप्रवृत्तये ॥ ६२ ॥
आमतैलेन सिक्त्वा तु पतङ्गमधुकाञ्जनैः ।
शोणितस्थापनैश्चान्यैः सुश्लक्ष्णैरवचूर्णयेत् ॥ ६३ ॥
ततो मधुघृताभ्यक्तं बद्ध्वाऽऽचारिकमादिशेत् ।
ज्ञात्वावस्थान्तरं कुर्यात् सद्योव्रणविधिं ततः ॥ ६४ ॥
छिन्द्याद्रूढेऽधिकं मांसं नासोपान्ते च चर्मवत् ।
सीव्येत्ततश्च सुश्लक्ष्णं हीनं संवर्धयेत्पुनः ॥ ६५ ॥

---

१ 'बृहतीद्वयम्' पाठः. २ 'जन्तूका(-चर्मचटिका)' इत्यरुणः.

निवेशिते यथान्यासं सद्यश्छेदेऽप्ययं विधिः ।
नाडीयोगाद्विनौष्ठस्य नासासन्धानवद्विधिः ॥ ६५ ॥"

---

## एकोनविंशोऽध्यायः ।

अथाऽतो नासारोगविज्ञानीयं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"अवश्यायानिलरजोभाष्यातिस्वप्नजागरैः ।
नीचात्युच्चोपधानेन पीतेनान्येन वारिणा ॥ १ ॥
अत्यम्बुपानरमणच्छर्दिबाष्पग्रहादिभिः ।
क्रुद्धा[1] वातोल्बणा दोषा नासायां स्त्यानतां गताः ॥ २ ॥
जनयन्ति प्रतिश्यायं वर्धमानं क्षयप्रदम् ।
तत्र वातात्प्रतिश्याये मुखशोषो भृशं क्षवः ॥ ३ ॥
घ्राणोपरोधनिस्तोदवन्तशङ्खशिरोव्यथाः ।
कीटका इव सर्पन्ति मन्यते परितो भ्रुवौ ॥ ४ ॥
स्वरसादश्चिरात्पाकः शिशिराच्छकफस्रुतिः ।
पित्तात्तृष्णाज्वरघ्राणपिटिकासम्भवभ्रमाः ॥ ५ ॥
नासाग्रपाको रूक्षोष्णताम्रपीतकफस्रुतिः ।
कफात्कासोऽरुचिः श्वासो वमथुर्गात्रगौरवम् ॥ ६ ॥
माधुर्यं वदने कण्डूः स्निग्धशुक्लघना स्रुतिः ।
सर्वजो लक्षणैः सर्वैरकस्माद्वृद्धिशान्तिमान् ॥ ७ ॥

---

१ 'रुद्धा' इति पाठः.

दुष्टं नासासिराः प्राप्य प्रतिश्यायं करोत्यसृक् ।
उरसः सुप्तता ताम्रनेत्रत्वं श्वासपूतिता ॥ ८ ॥
कण्डूः श्रोत्राक्षिनासासु पित्तोक्तं चात्र लक्षणम् ।
सर्व एव प्रतिश्याया दुष्टतां यान्त्युपेक्षिताः ॥ ९ ॥
यथोक्तोपद्रवाधिक्यात्स सर्वेन्द्रियतापनः ।
साग्निसादज्वरश्वासकासोरःपार्श्ववेदनः ॥ १० ॥
कुप्यत्यकस्माद्बहुशो मुखदौर्गन्ध्यशोफकृत् ।
नासिकाक्लेदसंशोषशुद्धिरोधकरो मुहुः ॥ ११ ॥
पूयोपमाऽसिता रक्तग्रथिता श्लेष्मसंस्रुतिः ।
मूर्च्छन्ति चात्र क्रिमयो दीर्घस्निग्धसिताणवः ॥ १२ ॥
पक्वलिङ्गानि तेष्वङ्गलाघवं क्षवथोः शमः ।
श्लेष्मा सचिक्कणः पीतो ज्ञानं च रसगन्धयोः ॥ १३ ॥
तीक्ष्णाघ्राणोपयोगार्करश्मिसूत्रतृणादिभिः ।
वातकोपिभिरन्यैर्वा नासिकातरुणास्थिनि ॥ १४ ॥
विघट्टितेऽनिलः क्रुद्धो रुद्धः शृङ्गाटकं व्रजन् ।
निवृत्तः कुरुतेऽत्यर्थं क्षवथुं स भृशक्षवः ॥ १५ ॥
शोषयन्नासिकास्रोतः कफं च कुरुतेऽनिलः ।
शूकपूर्णाभनासात्वं कृच्छ्रादुच्छ्वसनं ततः ॥ १६ ॥
स्मृतोऽसौ नासिकाशोषो

नासानाहे तु जायते ।

---

१ 'तीक्ष्णघ्राणोप' इत्यरुणः. २ 'भृशं क्षवः' इति पाठः.

नद्धत्वमिव नासायाः श्लेष्मरुद्धेन वायुना ॥ १७ ॥
नि[1]श्वासोच्छ्वाससंरोधात् स्रोतसी संवृते इव ।
पचेन्नासापुटे पित्तं त्वङ्मांसं दाहशूलवत् ॥ १८ ॥
*स घ्राणपाकः*

स्रावस्तु तत्संज्ञः श्लेष्मसम्भवः ।
अच्छोऽजलोपमोऽजस्रं विशेषान्निशि जायते ॥ १९ ॥
कफः प्रवृद्धो नासायां रुद्ध्वा स्रोतांस्यपीनसम् ।
कुर्यात्[2]स घुर्घुरं श्वासं पीनसाधिकवेदनम् ॥ २० ॥
अवेरिव स्रवत्यस्य प्रक्लिन्ना तेन नासिका ।
अजस्रं पिच्छिलं पीतं पक्वं सिङ्घाणकं घनम् ॥ २१ ॥
रक्तेन [3]नासा दग्धेन बाह्यान्तः स्पर्शनासहा ।
भवेद्धूमोपमोच्छ्वासा सा दीप्तिर्दहतीव च ॥ २२ ॥
तालुमूले मलैर्दुष्टैर्मारुतो मुखनासिकात् ।
श्लेष्मा च पूतिर्निर्गच्छेत्, पूतिनासं वदन्ति तम् ॥२३॥
निचयादभिघाताद्वा पूयासृङ् नासिका स्रवेत् ।
तत्पूयरक्तमाख्यातं शिरोदाहरुजाकरम् ॥ २४ ॥
पित्तश्लेष्मावरुद्धोऽन्तर्नासायां शोषयेन्मरुत् ।
कफं स शुष्कपुटतां प्राप्नोति पुटकं तु तत् ॥ २५ ॥
अर्शोऽर्बुदानि विभजेद्दोषलिङ्गैर्यथायथम् ।
सर्वेषु कृच्छ्रोच्छ्वसनं पीनसः प्रततं क्षवः ॥ २६ ॥

---

१ 'निःश्वासो' पा. २ 'त्सघुर्घुर' पा. ३ 'नासादग्धेन' पाठः.

साजुनासिकवादित्वं पूतिनासः शिरोव्यथा ।
अष्टादशानामित्येषां यापयेद्दुष्टपीनसम् ॥ २७ ॥"

## विंशोऽध्यायः ।

अथातो नासारोगप्रतिषेधं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥
"सर्वेषु पीनसेष्वादौ निवातागारगो भवेत् ।
स्नेहनस्वेदवमनधूमगण्डूषधारणम् ॥ १ ॥
वासो गुरूष्णं शिरसः सुघनं परिवेष्टनम् ।
लघ्वम्ललवणं स्निग्धमुष्णं भोजनमद्रवम् ॥ २ ॥
धन्वमांसगुडक्षीरचणकत्रिकटूत्कटम् ।
यवगोधूमभूयिष्ठं दधिदाडिमसाधितम् ॥ ३ ॥
बालमूलकजो यूषः कुलत्थोत्थश्च पूजितः ।
कवोष्णं दशमूलाम्बु जीर्णां वा वारुणीं पिबेत् ॥ ४ ॥
जिघ्रेच्चोरकतर्कारीवचाजाज्युपकुञ्चिकाः ।
व्योषतालीसचविकातिन्तिडीकाम्लवेतसम् ॥ ५ ॥
साऽयजाजि द्विपलिकं त्वगेलापत्रपादिकम् ।
जीर्णाद्गुडात्तुलार्धेन पक्वेन वटकीकृतम् ॥ ६ ॥
पीनसश्वासकासघ्नं रुचिस्वरकरं परम् ।
शताह्वात्वक्बलामूलं स्योनाकैरण्डबिल्वजम् ॥ ७ ॥

---

१ 'कट्वम्ल' इति पाठः.

सारग्वधं पिबेद्धूमं वसाज्यमदनान्वितम् ।
अथवा सघृतान् सक्तून् कृत्वा मल्लकसम्पुटे ॥ ८ ॥
त्यजेत्स्नानं शुचं क्रोधं भृशं शय्यां हिमं चलम् ।
पिबेद्वातप्रतिश्याये सर्पिर्वातघ्नसाधितम् ॥ ९ ॥
पञ्चपञ्चकसिद्धं वा विदार्यादिगणेन वा ।
स्वेदनस्यादिकां कुर्यात् चिकित्सामर्दितोदिताम् ॥ १० ॥
पित्तरक्तोत्थयोः पेयं सर्पिर्मधुरकैः शृतम् ।
परिषेकान्प्रदेहांश्च शीतैः कुर्वीत शीतलान् ॥ ११ ॥
पयस्त्वक्त्रिफलाश्यामाश्रीपर्णीयष्टिबिल्वकैः ।
क्षीरे दशगुणे तैलं नावनं सनिशैः पचेत् ॥ १२ ॥
कफजे लङ्घनं लेपः शिरसो गौरसर्षपैः ।
सक्षारं वा घृतं पीत्वा वमेत् पिष्टैस्तु नावनम् ॥ १३ ॥
बस्ताम्बुना पटुव्योषवेल्लवत्सकजीरकैः ।
कटुतीक्ष्णैर्घृतैर्नस्यैः कवलैः सर्वजं जयेत् ॥ १४ ॥
यक्ष्मकृमिक्रमं कुर्वन् यापयेद्दुष्टपीनसे ।
व्योषोरुबूककृमिजिद्दारुमाद्रीगदेङ्गुदम् ॥ १५ ॥
वार्ताकबीजं त्रिवृता सिद्धार्थः पूतिमत्स्यकः ।
अग्निमन्थस्य पुष्पाणि पीलुशिग्रुफलानि च ॥ १६ ॥
अश्वविड्रसमूत्राभ्यां हस्तिमूत्रेण चैकतः ।
क्षौमगर्भां कृतां वर्तिं धूमं घ्राणास्यतः पिबेत् ॥ १७ ॥
क्षवथौ पुंटकाख्ये च तीक्ष्णैः प्रधमनं हितम् ।

---

१ 'पुटपाकाख्ये' इत्यरुणः.

शुण्ठीकुष्ठकणावेल्लद्राक्षाकल्ककषायवत् ॥ १८ ॥
साधितं तैलमाज्यं वा नस्यं क्षवपुटप्रणुत् ।
नासाशोषे बलातैलं पानादौ भोजनं रसैः ॥ १९ ॥
स्निग्धो धूमस्तथा स्वेदो नासानाहेऽप्ययं विधिः ।
पाके दीप्तौ च पित्तघ्नं तीक्ष्णं नस्यादि संस्रुतौ ॥ २० ॥
कफपीनसवत्पूतिनासापीनसयोः क्रिया ।
लाक्षाकरञ्जमरिचवेल्लहिङ्गुकणागुडैः ॥ २१ ॥
अविमूत्रद्रुतैर्नस्यं कारयेद्वमने कृते ।
शिग्रुसिंहीनिकुम्भानां बीजैः सव्योषसैन्धवैः ॥ २२ ॥
सवेल्लसुरसैस्तैलं नावनं परमं हितम् ।
पूयरक्ते नवे कुर्याद्रक्तपीनसवत्क्रियाम् ॥ २३ ॥
अतिप्रवृद्धे नाडीवद्
दग्धेष्वर्शोऽर्बुदेषु च ।
निकुम्भकुम्भसिन्धूत्थमनोह्वालवणाग्निकैः ॥ २४ ॥
कल्कितैर्घृतमध्वाक्तां घ्राणे वर्तिं प्रवेशयेत् ।
शिग्र्वादि नावनं चात्र पूतिनासोदितं भजेत् ॥ २५ ॥"

---

## एकविंशोऽध्यायः ।

अथातो मुखरोगविज्ञानं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"[1]मात्स्यमाहिषवाराहपिशितामकमूलकम् ।

---

१ 'मत्स्यमा' इत्यरुणः.

माषसूपदधिक्षीरसुक्तेक्षुरसफाणितम् ॥ १ ॥
अवाक् शय्यां च भजतो द्विषतो दन्तधावनम् ।
धूमच्छर्दनगण्डूषानुचितं च सिराव्यधम् ॥ २ ॥
क्रुद्धाः श्लेष्मोल्बणा दोषाः कुर्वन्त्यन्तर्मुखे गदान् ।
तत्र खण्डौष्ठ इत्युक्तो वातेनोष्ठो द्विधा कृतः ॥ ३ ॥
ओष्ठकोपे तु पवनात् स्तब्धावोष्ठौ महारुजौ ।
दाल्येते परिपाट्येते परुषासितकर्कशौ ॥ ४ ॥
पित्तात्तीक्ष्णासहौ पीतौ सर्षपाकृतिभिश्चितौ ।
पिटिकाभिर्बहुक्लेदावाशुपाकौ

कफात्पुनः ॥ ५ ॥

शीतासहौ गुरू शूनौ सवर्णपिटिकाचितौ ।
सन्निपातादनेकाभौ दुर्गन्धास्रावपिच्छलौ[1] ॥ ६ ॥
अकस्मान्म्लानसंशूनरुजौ विषमपाकिनौ ।
रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ ॥ ७ ॥
खर्जूरसदृशं चाऽत्र क्षीणे रक्तेऽर्बुदं भवेत् ।
मांसपिण्डोपमौ मांसात्स्यातां मूर्च्छत्कृमी क्रमात् ॥ ८ ॥
तैलाभश्वयथुक्लेदौ सकण्डू मेदसा मृदू ।
क्षतजाववदीर्येते पाट्येते चासकृत्पुनः ॥ ९ ॥
ग्रथितौ च पुनः स्यातां कण्डूलौ दशनच्छदौ ।
जलबुद्बुदवद्वातकफादोष्ठे जलार्बुदम् ॥ १० ॥
गण्डालजी स्थिरः शोफो गण्डे दाहज्वरान्वितः ।

---

१ 'गन्धस्रावपिच्छिलौ' इति क्वचित्.

वाताद्युष्णसहा दन्ताः शीतास्पर्शाधिकव्यथाः ॥ ११ ॥
दाल्यन्त इव शूलेन, शीताख्यो दालनश्च सः ।
दन्तहर्षे प्रवाताम्लशीतभक्ष्यासहा[1] द्विजाः ॥ १२ ॥
भवन्त्यम्लाशनेनैव सरुजाश्चलिता इव ।
दन्तभेदे द्विजास्तोदभेदरुक्स्फुटनान्विताः ॥ १३ ॥
चालश्चलद्भिर्दशनैर्भक्षणादधिकव्यथः ।
करालः सुकरालानां दशनानां समुद्भवः ॥ १४ ॥
दन्तोऽधिकोऽधिदन्ताख्यः[2] स चोक्तः खलु वर्धनः ।
जायते जायमानेऽतिरुग् जाते तत्र शाम्यति ॥ १५ ॥
अधावनान्मलो दन्ते कफो वा वातशोषितः ।
पूतिगन्धः स्थिरीभूतः शर्करा

सोऽप्युपेक्षितः ॥ १६ ॥

शातयत्यणुशो दन्तात्कपालानि कपालिका ।
श्यावः श्यावत्वमायाता रक्तपित्तानिलैर्द्विजाः ॥ १७ ॥
समूलं दन्तमाश्रित्य दोषैरुल्बणमारुतैः ।
शोषिते मज्ज्ञि सुषिरे दन्तेऽन्नमलपूरिते ॥ १८ ॥
पूतित्वात्क्रमयः सूक्ष्मा जायन्ते, जायते ततः ।
अहेतुतीव्रार्तिशमः ससंरम्भोऽसितश्चलः ॥ १९ ॥
प्रभूतपूयरक्तस्तु, स चोक्तः क्रिमिदन्तकः ।
श्लेष्मरक्तेन पूतीनि वहन्त्यस्रमहेतुकम् ॥ २० ॥

---

१ 'भक्ष्याक्षमा' इति पाठः, २ 'दन्ताधिको' इति पाठः.

शीर्यन्ते दन्तमांसानि मृदुक्लिन्नासितानि च ।
शीतादोऽसौ

उपकुशः पाकः पित्तासृगुद्भवः ॥ २१ ॥

दन्तमांसानि दह्यन्ते रक्तान्युत्सेधवन्त्यतः ।
कण्डूमन्ति स्रवन्त्यस्रमाध्मायन्तेऽसृजि स्थिते ॥ २२ ॥
चला मन्दरुजो दन्ताः पूति[1] वक्त्रं च जायते ।
दन्तयोस्त्रिषु वा शोफो बदरास्थिनिभो घनः ॥ २३ ॥
कफास्रात्तीव्ररुक् शीघ्रं पच्यते दन्तपुप्पुटः ।
दन्तमांसे मलैः सास्रैर्बाह्यान्तः श्वयथुर्गुरुः ॥ २४ ॥
सरुग्दाहः स्रवेद्भिन्नः पूयास्रं दन्तविद्रधिः ।
श्वयथुर्दन्तमूलेषु रुजावान् पित्तरक्तजः ॥ २५ ॥
लालास्रावी स सुषिरो दन्तमांसप्रशातनः ।
स सन्निपातज्वरवान् सपूयरुधिरस्रुतिः ॥ २६ ॥
महासुषिर इत्युक्तो विशीर्णद्विजबन्धनः ।
दन्तान्ते कीलवच्छोफो हनुकर्णरुजाकरः ॥ २७ ॥
प्रतिहन्त्यभ्यवहृतिं श्लेष्मणा, सोऽधिमांसकः ।
घृष्टेषु दन्तमांसेषु संरम्भो जायते महान् ॥ २८ ॥
यस्मिंश्चलन्ति दन्ताश्च, स विदर्भोऽभिघातजः ।
दन्तमांसाश्रितान् रोगान् यः साध्यानप्युपेक्षते ॥ २९ ॥
अन्तस्तस्यास्रवन् दोषः सूक्ष्मां सञ्जनयेद्गतिम् ।
पूयं मुहुः सा स्रवति त्वङ्मांसास्थिप्रभेदिनी ॥ ३० ॥

---

१ 'पूतिवक्त्रं' इति पाठः.

ताः पुनः पञ्च विज्ञेया लक्षणैः स्वैर्यथोदितैः ।
शाकपत्रखरा सुप्ता स्फुटिता वातदूषिता ॥ ३१ ॥
जिह्वा

पित्तात् सदाहोषा रक्तैर्मांसाङ्कुरैश्चिता ।
शाल्मलीकण्टकाभैस्तु कफेन बहला[1] गुरुः ॥ ३२ ॥
कफपित्तादधः शोफो जिह्वास्तम्भकृदुन्नतः ।
मत्स्यगन्धिर्भवेत्पक्वः, सोऽलसो मांसशातनः ॥ ३३ ॥
प्रबन्धनेऽधो जिह्वायाः शोफो जिह्वाप्रसन्निभः ।
साङ्कुरः कफपित्ताभ्यां लालोषास्तम्भवान् खरः ॥ ३४ ॥
अधिजिह्वः सरुक्कण्डूर्वाक्याहारविघातकृत् ।
तादृगेवोपजिह्वस्तु जिह्वाया उपरि स्थितः ॥ ३५ ॥
तालुमांसेऽनिलाद्दुष्टे पिटिकाः सरुजः खराः ।
बह्व्यो घनाः स्रावयुक्तास्तास्तालुपिटिकाः स्मृताः ॥ ३६ ॥
तालुमूले कफात्सास्रान्मत्स्यबस्तिनिभो मृदुः ।
प्रलम्बः पिच्छिलः शोफो नासयाऽऽहारमीरयन् ॥ ३७ ॥
कण्ठोपरोधतृट्कासवमिकृद्गलशुण्डिका ।
तालुमध्ये निरुङ्मांसं संहतं तालुसंहतिः ॥ ३८ ॥
पद्माकृतिस्तालुमध्ये रक्ताच्छ्वयथुरर्बुदम् ।
कच्छपः कच्छपाकारश्चिरवृद्धिः कफादरुक् ॥ ३९ ॥
कोलाभः श्लेष्ममेदोभ्यां पुप्पुटो नीरुजः स्थिरः ।

---

१ 'बहुला' इति पाठः क्वचित्.

पित्तेन पाकः पाकाख्यः पूयास्रावी महारुजः ॥ ४० ॥
वातपित्तज्वरायासैस्तालुशोषस्तदाह्वयः ।
जिह्वाप्रबन्धजाः कण्ठे दारुणा मार्गरोधिनः ॥ ४१ ॥
मांसाङ्कुराः शीघ्रचया रोहिणी शीघ्रकारिणी ।
कण्ठास्यशोषकृद्वातात्सा हनुश्रोत्ररुक्करी ॥ ४२ ॥
पित्ताज्ज्वरोषातृण्मोहकण्ठधूमायनान्विता ।
क्षिप्रजा क्षिप्रपाकार्तिरागिणी स्पर्शनासहा ॥ ४३ ॥
कफेन पिच्छिला पाण्डुः

असृजा स्फोटकान्विता[1] ।

तप्ताङ्गारनिभा कर्णरुक्करी पित्तजाकृतिः ॥ ४४ ॥
गम्भीरपाका निचयात्सर्वलिङ्गसमन्विता ।
दोषैः कफोल्बणैः शोफः कोलवद् ग्रथितोन्नतः ॥ ४५ ॥
शूककण्टकवत्कण्टे शालूको मार्गरोधनः ।
वृन्दो वृत्तोन्नतो दाहज्वरकृद् गलपार्श्वगः ॥ ४६ ॥
हनुसन्ध्याश्रितः कण्ठे कार्पासीफलसन्निभः ।
पिच्छिलो मन्दरुक् शोफः कठिनस्तुण्डिकेरिका ॥ ४७ ॥
बाह्यान्तः श्वयथुर्घोरो गलमार्गार्गलोपमः ।
गलौघो मूर्धगुरुतातन्द्रालालाज्वरप्रदः ॥ ४८ ॥
वलयं नातिरुक् शोफस्तद्वदेवायतोन्नतः ।
मांसकीलो गले दोषैरेकोऽनेकोऽथवाऽल्परुक् ॥ ४९ ॥

---

१ 'कान्विता' इति पाठः.

कृच्छ्रोच्छ्वासाभ्यवहृतिः पृथुमूलो [1]गिलायुकः ।
भूरिमांसाङ्कुरवृता तीव्रतृड्ज्वरमूर्धरुक् ॥ ५० ॥
शतघ्नी निचिता वर्तिः शतघ्नीवातिरुक्करी ।
व्याप्तसर्वगलः शीघ्रजन्मपाको महारुजः ॥ ५१ ॥
पूतिपूयनिभस्रावी श्वयथुर्गलविद्रधिः ।
जिह्वावसाने कण्ठादावपाकं श्वयथुं मलाः ॥ ५२ ॥
जनयन्ति स्थिरं रक्तं नीरुजं, तद्गलार्बुदम् ।
पवनश्लेष्ममेदोभिर्गलगण्डो भवेद्बहिः ॥ ५३ ॥
वर्धमानः स कालेन मुष्कवल्लम्बतेऽतिरुक् ।
कृष्णोऽरुणो वा तोदाढ्यः स वातात्कृष्णराजिमान् ॥५४॥
वृद्धस्तालुगले शोषं कुर्याच्च विरसास्यताम् ।
स्थिरः सवर्णः कण्डूमान् शीतस्पर्शो गुरुः कफात् ॥५५॥
वृद्धस्तालुगले लेपं कुर्याच्च मधुरास्यताम् ।
मेदसः श्लेष्मवद्धानिवृद्ध्योः सोऽनुविधीयते ॥ ५६ ॥
देहं वृद्धश्च कुरुते गले शब्दं स्वरेऽल्पताम् ।
श्लेष्मरुद्धानिलगतिः शुष्ककण्ठो हतस्वरः ॥ ५७ ॥
ताम्यन् [3]प्रसक्तः श्वसिति, येन स स्वरहानिलात् ।
करोति वदनस्यान्तर्व्रणान्सर्वसरोऽनिलः ॥ ५८ ॥
*सञ्चारिणोऽरुणान् रूक्षानोष्ठौ ताम्रौ चलत्वचौ ।*
जिह्वा शीतासहा गुर्वी स्फुटिता कण्टकाचिता ॥ ५९ ॥

---

१ 'गलायुकः' इत्यरुणः. २ 'लम्बते निरुक्' इति पाठः.
३ 'प्रसक्तं श्व' इत्यरुणः.

विवृणोति च कृच्छ्रेण मुखं पाको मुखस्य सः ।
अधः प्रतिहतो वायुरर्शोगुल्मकफादिभिः ।
यात्यूर्ध्वं वक्त्रदौर्गन्ध्यं कुर्वन्नूर्ध्वगदस्तु सः ॥ ६० ॥
मुखस्य पित्तजे पाके दाहोषे तिक्तवक्त्रता ।
क्षारोक्षितक्षतसमा व्रणाः

तद्वच्च रक्तजे ॥ ६१ ॥

कफजे मधुरास्यत्वं कण्डूमत्पिच्छिला व्रणाः ।
अन्तःकपोलमाश्रित्य श्यावपाण्डु कफोऽर्बुदम् ॥ ६२ ॥
कुर्यात्तत्पाटितं चिक्कणं मृदितं च विवर्धते ।
मुखपाको भवेत्सास्रैः सर्वैः सर्वाकृतिर्मलैः ॥ ६३ ॥
पूत्यास्यता च तैरेव दन्तकाष्ठादिविद्विषः ।
ओष्ठे गण्डे द्विजे मूले जिह्वायां तालुके गले ॥ ६४ ॥
वक्त्रे सर्वत्र चेत्युक्ताः पञ्चसप्ततिरामयाः ।
एकादशैको दश च त्रयोदश तथा च षट् ॥ ६५ ॥
अष्टावष्टादशाष्टौ च क्रमात्

तेष्वनुपक्रमाः ।

करालो मांसरक्तोष्ठावर्बुदानि जलाद्विना ॥ ६६ ॥
कच्छपस्तालुपिटिका गलौघः सुषिरो महान् ।
स्वरघ्नोर्ध्वगदश्यावशतघ्नीवलयालसाः ॥ ६७ ॥
नाड्योष्ठकोपौ निचयात् रक्तात्सर्वैश्च रोहिणी ।
दशने स्फुटिते दन्तभेदः पक्वोपजिह्विका ॥ ६८ ॥

---

१ 'मुखपाको' इत्यरुणः. २ 'स्वरघ्नोर्ध्व' इति क्वचित्.

गलगण्डः स्वरभ्रंशी कृच्छ्रोच्छ्वासोऽतिवत्सरः ।
याप्यस्तु हर्षां भेदश्च, शेषान् शस्त्राग्निभिर्जयेत् ॥ ६९ ॥"

---

## द्वाविंशोऽध्यायः ।

अथाऽतो मुखरोगप्रतिषेधं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"खण्डौष्ठस्य विलिख्यान्तौ स्यूत्वा व्रणवदाचरेत् ।
यष्टीज्योतिष्मतीरोध्रश्रावणीसारिवोत्पलैः ॥ १ ॥
पटोल्या काकमाच्या च तैलमभ्यञ्जनं पचेत् ।
नस्यं च तैलं वातघ्नमधुरस्कन्धसाधितम् ॥ २ ॥
महास्नेहेन वातोष्ठे सिद्धेनाक्तः पिचुर्हितः ।
देवधूपमधूच्छिष्टगुग्गुल्वमरदारुभिः ॥ ३ ॥
यष्ट्याह्वचूर्णयुक्तेन तेनैव प्रतिसारणम् ।
नाड्योष्ठं स्वेदयेद्दुग्धसिद्धैरेरण्डपल्लवैः ॥ ४ ॥
खण्डौष्ठविहितं नस्यं तस्य मूर्ध्नि च तर्पणम् ।
पित्ताभिघातजावोष्ठौ जलौकोभिरुपाचरेत् ॥ ५ ॥
रोध्रसर्जरसक्षौद्रमधुकैः प्रतिसारणम् ।
गुडूचीयष्टिपत्तङ्गसिद्धमभ्यञ्जने घृतम् ॥ ६ ॥
पित्तविद्रधिवच्चात्र क्रिया

शोणितजेऽपि च ॥

इदमेव भवेत्कार्यं कर्म
ओष्ठे तु कफोत्तरे ॥ ७ ॥
पाठाक्षारमधुव्योषैर्हृतास्रे प्रतिसारणम् ।
धूमनावनगण्डूषाः प्रयोज्याश्च कफच्छिदः ॥ ८ ॥
स्विन्नं भिन्नं विमेदस्कं दहेन्मेदोजमग्निना ॥
प्रियङ्गुरोध्रत्रिफलामाक्षिकैः प्रतिसारयेत् ॥ ९ ॥
सक्षौद्रा घर्षणं तीक्ष्णा भिन्नशुण्डे जलार्बुदे ।
अवगाढेऽतिवृद्धे वा क्षारोऽग्निर्वा प्रतिक्रिया ॥ १० ॥
आमाद्यवस्थास्वलजीं गण्डे शोफवदाचरेत् ।
स्विन्नस्य शीतदन्तस्य पाली विलिखितां दहेत् ॥ ११ ॥
तैलेन प्रतिसार्या च सक्षौद्रघनसैन्धवैः ।
दाडिमत्वग्वरातार्क्ष्यकान्ताजम्ब्वस्थिनागरैः ॥ १२ ॥
कवलः क्षीरिणां क्वाथैरणुतैलं च नावनम् ।
दन्तहर्षे तथा भेदे सर्वा वातहरा क्रिया ॥ १३ ॥
तिलयष्टीमधुश्रृतं क्षीरं गण्डूषधारणम् ।
सस्नेहं दशमूलाम्बु गण्डूषः प्रचलद्द्विजे ॥ १४ ॥
तुत्थरोध्रकणाश्रेष्ठापत्तङ्गपटुघर्षणम् ।
स्निग्धाः शील्या यथावस्थं नस्याञ्जकवलादयः ॥ १५ ॥
अधिदन्तकमालिप्तं यदा क्षारेण जर्जरम् ।
कृमिदन्तमिवोत्पाट्य तद्वच्चोपचरेत्तदा ॥ १६ ॥
अनवस्थितरक्ते च दग्धे व्रण इव क्रिया ।

अहिंसन् दन्तमूलानि दन्तेभ्यः शर्करां हरेत् ॥ १७ ॥
क्षारचूर्णैर्मधुयुतैस्ततश्च प्रतिसारयेत्।
कपालिकायामप्येवं हर्षोक्तं च समाचरेत् ॥ १८ ॥
जयेद्विस्रावणैः स्विन्नमचलं कृमिदन्तकम्।
स्निग्धैश्चालेपगण्डूषनस्याहारैश्चलापहैः ॥ १९ ॥
गुडेन पूर्णं सुषिरं मधूच्छिष्टेन वा दहेत्।
सप्तच्छदार्कक्षीराभ्यां पूरणं कृमिशूलजित् ॥ २० ॥
हिङ्गुकट्फलकासीसस्वर्जिकाकुष्ठवेल्लजम्।
रजो रुजं जयत्याशु तत्रस्थं दशने धृतम् ॥ २१ ॥
गण्डूषं धारयेत्तैलमेभिरेव च साधितम्।
क्वाथैर्वा युक्तमेरण्डछिन्न्याव्रीभूकदम्बजैः ॥ २२ ॥
क्रियायोगैर्बहुविधैरित्यशान्तरुजं भृशम्।
दृढमप्युद्धरेद्दन्तं पूर्वं मूलाद्विमोक्षितम् ॥ २३ ॥
सन्दंशकेन लघुना दन्तनिर्घातनेन वा।
तैलं सयष्ट्याह्वरजो गण्डूषो मधुना ततः ॥ २४ ॥
ततो विदारियष्ट्याह्वशृङ्गाटककसेरुभिः।
तैलं दशगुणक्षीरसिद्धं[1] युञ्जीत नावनम् ॥ २५ ॥
कृशदुर्बलवृद्धानां वातार्तानां च नोद्धरेत्।
नोद्धरेच्चोत्तरं दन्तं बहूपद्रवकृद्धि सः ॥ २६ ॥
एषामप्युद्धृते स्निग्धः स्वादुः शीतः क्रमो हितः।
विस्राविताञ्जे शीतादे सक्षौद्रैः प्रतिसारणम् ॥ २७ ॥

---

१ 'क्षीरं सि' इति पाठः।

मुस्तार्जुनत्वक्त्रिफलाफलिनीताक्ष्यंनागरैः ।
तत्क्वाथः कवलो नस्यं तैलं मधुरसाधितम् ॥ २८ ॥
दन्तमांसान्युपकुशे स्विन्नान्युष्णाम्बुधारणैः ।
मण्डलाग्रेण शाकादिपत्रैर्वा बहुशो लिखेत् ॥ २९ ॥
ततश्च प्रतिसार्याणि घृतमण्डमधुद्रुतैः ।
लाक्षाप्रियङ्गुपत्तङ्गलवणोत्तमगैरिकैः ॥ ३० ॥
सकुष्ठशुण्ठीमरिचयष्टीमधुरसाञ्जनैः ।
सुखोष्णो घृतमण्डोऽनु तैलं वा कवलग्रहः ॥ ३१ ॥
घृतं च मधुरैः सिद्धं हितं कवलनस्ययोः ।
दन्तपुप्पुटके स्विन्नच्छिन्नभिन्नविलेखिते ॥ ३२ ॥
यष्ट्याह्वस्वर्जिकाशुण्ठीसैन्धवैः प्रतिसारणम् ।
विद्रधौ कटुतीक्ष्णोष्णरूक्षैः कवललेपनम् ॥ ३३ ॥
घर्षणं कटुकाकुष्ठवृश्चिकालीयवोद्भवैः ।
रक्षेत्पाकं हिमैः, पक्वः पाट्यो ग्राह्योऽवगाढकः ॥ ३४ ॥
सौषिरे स्विन्नलिखिते[१] सक्षौद्रैः प्रतिसारणम् ।
रोध्रमुस्तमिशिश्रेष्ठाताक्ष्यंपत्तङ्गकिंशुकैः ॥ ३५ ॥
सकट्फलैः कषायैश्च तेषां गण्डूष इष्यते ।
यष्टीरोध्रोत्पलानन्तासारिवागुरुचन्दनैः ॥ ३६ ॥
सगैरिकसितापुण्ड्रैः सिद्धं तैलं च नावनम् ।
छित्त्वाधिमांसकं चूर्णैः सक्षौद्रैः प्रतिसारयेत् ॥ ३७ ॥
वचातेजोवतीपाठास्वर्जिकायवशूकजैः ।

---

१ 'छिन्नलिखिते' इत्यरुणः.

पटोलनिम्बत्रिफलाकषायः कवलो हितः ॥ ३८ ॥
विदर्भे दन्तमूलानि मण्डलाग्रेण शोधयेत् ।
क्षारं युञ्ज्यात्ततो नस्यं गण्डूषादि च शीतलम् ॥ ३९ ॥
संशोध्योभयतः कायं शिरश्चोपचरेत्ततः ।
नाडीं दन्तानुगां दन्तं समुद्धृत्याग्निना दहेत् ॥ ४० ॥
कुर्यां नैकगतिं पूर्णां मदनेन गुडेन वा ।
धावनं जातिमदनखदिरस्वादुकण्टकैः ॥ ४१ ॥
क्षीरिवृक्षाम्बुगण्डूषो नस्यं तैलं च तत्कृतम् ।
कुर्याद्वातोष्ठकोपोक्तं कण्टकेष्वनिलात्मसु ॥ ४२ ॥
जिह्वायाम्

पित्तजातेषु घृष्टेषु रुधिरे स्रुते ।
प्रतिसारणगण्डूषनावनं मधुरैर्हितम् ॥ ४३ ॥
तीक्ष्णैः कफोत्थेष्वप्येवं सर्षपत्र्यूषणादिभिः ।
नवे जिह्वालसेऽप्येवं, तं तु शस्त्रेण न स्पृशेत् ॥ ४४ ॥
उत्क्षिप्य जिह्वामाकृष्टां बडिशेनाधिजिह्विकाम् ।
छेदयेन्मण्डलाग्रेण तीक्ष्णोष्णैर्घर्षणादि च ॥ ४५ ॥
उपजिह्वां परिस्राव्य यवक्षारेण घर्षयेत् ।
कफघ्नैः शुण्डिका साध्या नस्यगण्डूषघर्षणैः ॥ ४६ ॥
एर्वारुबीजप्रतिमं वृद्धायामसिराततम् ।
अग्रे निविष्टं जिह्वाया बडिशाद्यवलम्बितम् ॥ ४७ ॥
छेदयेन्मण्डलाग्रेण नात्यग्रे न च मूलतः ।
छेदेऽत्यसृक्क्षयान्मृत्युर्हीने व्याधिर्विवर्धते ॥ ४८ ॥

मरिचातिविषापाठावचाकुष्ठकुटन्नटैः ।
छिन्नायां सपटुक्षौद्रैर्घर्षणं कवलः पुनः ॥ ४९ ॥
कटुकातिविषापाठानिम्बरास्नावचाम्बुभिः ।
सञ्जाते पुप्पुटे कूर्मे विलिख्यैवं समाचरेत् ॥ ५० ॥
अपक्वे तालुपाके तु कासीसक्षौद्रताक्ष्र्यजैः ।
घर्षणं कवलः शीतकषायमधुरौषधैः ॥ ५१ ॥
पक्वेऽष्टापदवद्भिन्ने तीक्ष्णोष्णैः प्रतिसारणम् ।
वृषनिम्बपटोलाद्यैस्तिक्तैः कवलधारणम् ॥ ५२ ॥
तालुशोषे त्वतृष्णस्य सर्पिरुत्तरभक्तिकम् ।
कणाशुण्ठीशृतं पानमम्लैर्गण्डूषधारणम् ॥ ५३ ॥
धन्वमांसरसाः स्निग्धाः क्षीरसर्पिश्च नावनम् ।
कण्ठरोगेष्वसृङ्मोक्षस्तीक्ष्णैर्नस्यादि कर्म च ॥ ५४ ॥
क्वाथः पानं च दार्वीत्वङ्निम्बताक्ष्र्यकलिङ्गजः ।
हरीतकीकषायो वा पेयो माक्षिकसंयुतः ॥ ५५ ॥
श्रेष्ठाव्योषयवक्षारदार्वीद्वीपिरसाञ्जनैः ।
सपाठातेजिनीनिम्बैः सूक्तगोमूत्रसाधितैः ॥ ५६ ॥
कवलो गुटिका चाऽत्र कल्पिता प्रतिसारणम् ।
निचुलं कटभी मुस्तं देवदारु महौषधम् ॥ ५७ ॥
वचा दन्ती च मूर्वा च लेपः कोष्णोऽर्तिशोफहा ।
अथाऽन्तर्बाह्यतः स्विन्नां बालरोहिणिकां लिखेत् ॥ ५८ ॥

अङ्गुलीशस्त्रकेणाऽऽशु पटुयुक्तनखेन वा ।
पञ्चमूलाम्बुकवलस्तैलं गण्डूषनावनम् ॥ ५९ ॥
विस्राव्य पित्तसम्भूतां सिताक्षौद्रप्रियङ्गुभिः ।
घर्षेत्सरोध्रपत्तङ्गैः कवलः कथितैश्च तैः ॥ ६० ॥
द्राक्षापरूषककाथो हितश्च कवलग्रहे ।
उपाचरेदेवमेव प्रत्याख्यायास्रसम्भवाम् ॥ ६१ ॥
सागारधूमैः कटुकैः कफजां प्रतिसारयेत् ।
नस्यगण्डूषयोस्तैलं साधितं च प्रशस्यते ॥ ६२ ॥
अपामार्गफलश्वेतादन्तीजन्तुघ्नसैन्धवैः ।
तद्वच्च वृन्दशालूकतुण्डिकेरीगिलायुषु ॥ ६३ ॥
विदग्धौ स्राविते श्रेष्ठारोचनातार्क्ष्यगैरिकैः ।
सरोध्रपटुपत्तङ्गकणगण्डूषघर्षणे ॥ ६४ ॥
गलगण्डः पवनजः स्विन्नो निस्रुतशोणितः ।
तिलैर्बीजैश्च रुद्रोमाप्रियालशणसम्भवैः ॥ ६५ ॥
उपनाह्यो व्रणे रूढे प्रलेप्यश्च पुनःपुनः ।
शिग्रुतिल्वकतर्कारीगजकृष्णापुनर्नवैः ॥ ६६ ॥
कालामृतार्कमूलैश्च पुष्पैश्च करहाटजैः ।
एकैषिकान्वितैः पिष्टैः सुरया काञ्जिकेन वा ॥ ६७ ॥
गुडूचीनिम्बकुटजहंसपादीबलाह्वयैः ।
साधितं पाययेत्तैलं सकृष्णादेवदारुभिः ६८ ॥
कर्तव्यं कफजेऽप्येतत्स्वेदविम्लापने त्वति ।

---

१ 'तुण्डकेरी' इति क्वचित्. २ 'निःसृत' इति पाठः.

लेपोऽजगन्धातिविषाविशल्याः सविषाणिकाः ॥ ६९ ॥
गुञ्जालाबुशुकाह्वाश्च पलाशक्षारकल्किताः ।
मूत्रस्रुतं हठक्षारं पक्त्वा कोद्रवभुक् पिबेत् ॥ ७० ॥
साधितं वत्सकाद्यैर्वा तैलं सपटुपञ्चकैः ।
कफघ्नान् धूमवमननावनादींश्च शीलयेत् ॥ ७१ ॥
मेदोभवे सिरां विध्येत्कफघ्नं च विधिं भजेत् ।
असनादिरजश्चैनं प्रातर्मूत्रेण पाययेत् ॥ ७२ ॥
अशान्तौ पाटयित्वा च सर्वान् व्रणवदाचरेत् ।
मुखपाकेषु सक्षौद्राः प्रयोज्या मुखधावनाः ॥ ७३ ॥
क्वथितास्त्रिफलापाठामृद्वीकाजातिपल्लवाः ।
निष्ठेव्या भक्षयित्वा वा कुटेरादिगणोऽथवा ॥ ७४ ॥
मुखपाकेऽनिलात् कृष्णापटोलाः प्रतिसारणम् ।
तैलं वातहरैः सिद्धं हितं कवलनस्ययोः ॥ ७५ ॥
पित्तास्ने रक्तपित्तघ्नः कफघ्नश्च कफे विधिः ।
लिखेच्छाकादिपत्रैश्च पिटिकाः कठिनाः स्थिराः ॥ ७६ ॥
यथादोषोदयं कुर्यात्सन्निपाते चिकित्सितम् ।
नष्टेऽर्बुदे त्वसंवृद्धं च्छेदिने प्रतिसारणम् ॥ ७७ ॥
स्वर्जिकानागरक्षाद्यैः क्वाथो गण्डूष इष्यते ।
गुडूचीनिम्बवल्कोत्थो[1] मधुतैलसमन्वितः ॥ ७८ ॥
यवान्नभुक् तीक्ष्णतैलनस्याभ्यङ्गांस्तथाचरेत् ।
वमिते पुनिर्वदने धूमस्तीक्ष्णः सनावनः ॥ ७९ ॥

---

१ 'निम्बकल्कोत्थो' इत्यरुणदत्तः.

समङ्गाधातकीरोध्रफलिनीपद्मकैर्जलम् ।
धावनं वदनस्यान्तश्चूर्णितैरवचूर्णनम् ।
शीतादोपकुशोक्तं च नावनादि च शीलयेत् ॥ ८० ॥

फलत्रयद्वीपिकिराततिक्त-
यष्ट्याह्वसिद्धार्थकटुत्रिकाणि ।
मुस्ताहरिद्राद्वययावशूक-
वृक्षाम्लकाम्लाग्निमचेतसाश्च ॥ ८१ ॥

अश्वत्थजम्ब्वाम्रधनञ्जयत्वक्
त्वक् चाहिमारारखदिरस्य सारः ।
क्वाथेन तेषां घनतां गतेन
तच्चूर्णयुक्ता गुटिका विधेयाः ॥ ८२ ॥

ता धारिता घ्नन्ति मुखेन नित्यं
कण्ठौष्ठताल्वादिगदान् सुकृच्छ्रान् ।
विशेषतो रोहिणिकास्यशोष-
गन्धान् विदेहाधिपतिप्रणीताः ॥ ८३ ॥

खदिरतुलामम्बुघटे पक्त्वा तोयेन तेन पिष्टैश्च ।
चन्दनजोङ्गककुङ्कुमपरिपेलववालकोशीरैः ॥ ८४ ॥

सुरतरुरोध्रद्राक्षामञ्जिष्ठाचोचपद्मकविडङ्गैः ।
स्पृक्कानतनखकट्फलसूक्ष्मैलाध्यामकैः सपत्राङ्गैः ॥ ८५ ॥

तैलप्रस्थं विपचेत्
कर्षांशैः पाननस्यगण्डूषैस्तत् ।

हृत्वास्ये सर्वगदान्
जनयति गार्ध्रीं दृशं श्रुतिं च वाराहीम् ॥८६॥
उद्वर्तितं च प्रपुन्नाटरोध्र-
दार्वीभिरभ्यक्तमनेन वक्त्रम् ।
निर्व्यङ्गनीलीमुखदूषिकादि
सञ्जायते चन्द्रसमानकान्ति ॥ ८७ ॥
पलशतं बाणात्तोयघटे
पक्त्वा रसेऽस्मिंश्च पलार्धिकैः ।
खदिरजम्बूयष्ट्यानन्ताम्र-
रहिमारनीलोत्पलान्वितैः ॥ ८८ ॥
तैलप्रस्थं पाचयेच्छ्लक्ष्णपिष्टै-
रेभिर्द्रव्यैर्धारितं तन्मुखेन ।
रोगान्सर्वान् हन्ति वक्त्रे विशेषा-
त्स्थैर्यं धत्ते दन्तपङ्क्तेश्चलायाः ॥ ८९ ॥

खदिरसाराद् द्वे तुले पचेद्वल्कात्तुलां चारिमेदसः ।
घटचतुष्के पादशेषेऽस्मिन् पूते पुनः क्वाथनाद् घने ॥९०॥
आक्षिकं क्षिपेत्सुसूक्ष्मं रजः सेव्याम्बुपत्तङ्गगैरिकम् ।
चन्दनद्वयरोध्रपुण्ड्राह्वयष्ट्याह्वलाक्षाञ्जनद्वयम् ॥ ९१ ॥
धातकीकट्फलद्विनिशात्रिफलाचतुर्जातजोङ्गकम् ।
मुस्तमञ्जिष्ठान्यग्रोधप्ररोहमांसीयवासकम् ॥ ९२ ॥
पद्मकैलेयसमङ्गाश्च शीते तस्मिंस्तथा पालिकां पृथक् ।

---

१ 'द्वे लाक्षा' इति पाठः.

जातिपत्रिकां सजातीफलां सहलवङ्गकङ्कोलिकाम्[1] ॥९३॥
स्फटिकशुभ्रसुरभिकर्पूरकुडवं च तत्रावपेत्ततः ।
कारयेद्गुटिकाः सदा चैता धार्या मुखे तद्गदापहाः ॥ ९४॥

काथौपधव्यत्यययोजनेन
तैलं पचेत्कल्पनयाऽनयैव ।
सर्वास्यरोगोद्धृतये तदाहु-
र्दन्तस्थिरत्वे त्विदमेव मुख्यम् ॥ ९५ ॥

खदिरेणैता गुटिका-
स्तैलमिदं चारिमेदसा प्रथितम् ।
अनुशीलयन् प्रतिदिनं
स्वस्थोऽपि दृढद्विजो भवति ॥ ९६ ॥

क्षुद्रागुडूचीसुमनःप्रवाल-
दार्वीयवासत्रिफलाकषायः ।
क्षौद्रेण युक्तः कवलग्रहोऽयं
सर्वामयान् वक्त्रगतान्निहन्ति ॥ ९७ ॥

पाठादार्वीत्वक्कुष्ठमुस्तासमङ्गा-
तिक्तापीताग्रन्थितेजोवतीनाम् ।
चूर्णः सक्षौद्रो दन्तमांसार्तिकण्डू-
पाकस्रावाणां नाशनो घर्षणेन ॥ ९८ ॥

गृहधूमताक्ष्र्यपाठाव्योषक्षाराग्नयोवरातेजोह्वैः ।
मुखदन्तगलविकारे सक्षौद्रः कालको विधार्यश्चूर्णः ॥९९॥

---

१ 'कङ्कोलकाम्' इति पाठः.

दार्वीत्वक्सिन्धूत्थमनःशिलायावशूकहरितालैः ।
धार्यः पीतकचूर्णो दन्तास्यगलामये समध्वाज्यः ॥१००॥
द्विक्षारधूमवरापञ्चपटुव्योषवेल्लगिरिताह्वैः ।
गोमूत्रेण विपक्वा गलामयघ्नी रसक्रियैषा ॥ १०१ ॥

गोमूत्रक्वथनविलीनविग्रहाणां
पथ्यानां जलमिसिकुष्ठभावितानाम् ।
अत्तारं नरमणवोऽपि वक्त्ररोगाः
श्रोतारं नृपमिव न स्पृशन्त्यनर्थाः ॥ १०२ ॥

सप्तच्छदोशीरपटोलमुस्त-
हरीतकीतिक्तकरोहिणीभिः ।
यष्ट्याह्वराजद्रुमचन्दनैश्च
क्वाथं पिबेत्पाकहरं मुखस्य ॥ १०३ ॥

पटोलशुण्ठीत्रिफलाविशाला-
त्रायन्तितिक्ताद्विनिशामृतानाम् ।
पीतः कषायो मधुना निहन्ति
मुखस्थितश्चास्यगदानशेषान् ॥ १०४ ॥

स्वरसः क्वथितो दार्व्या घनीभूतः सगैरिकः ।
आस्यस्थः समधुर्वक्त्रपाकनाडीव्रणापहः ॥ १०५ ॥
पटोलनिम्बयष्ट्याह्वासाजात्यरिमेदसाम् ।
खदिरस्य वरायाश्च पृथगेवं प्रकल्पना ॥ १०६ ॥
खदिरायोवरापार्थमदयन्त्यहिमारकैः ।

गण्डूषोऽम्बुश्चैतैर्धार्यो दुर्बलद्विजशान्तये ॥ १०७ ॥
मुखदन्तमूलगलजाः प्रायो रोगाः कफास्रभूयिष्ठाः ।
तस्मात्तेषामसकृद् रुधिरं विस्रावयेद्दुष्टम् ॥ १०८ ॥
कायशिरसोर्विरेको वमनं कवलग्रहाश्च कटुतिक्ताः[1] ।
प्रायः शस्तं तेषां कफरक्तहरं तथा कर्म ॥ १०९ ॥
यवतृणधान्यं भक्तं विदलैः क्षारोषितैरपस्नेहाः ।
यूषा भक्ष्याश्च हिता यच्चान्यत्कफ्लमनाशाय ॥ ११० ॥
प्राणानिलपथसंस्थाः श्वसितमपि निरुन्धते प्रमादवतः ।
कण्ठामयाश्चिकित्सितमतो द्रुतं तेषु कुर्वीत ॥ १११ ॥"

---

## त्रयोविंशोऽध्यायः ।

अथाऽतः शिरोरोगविज्ञानं व्याख्यास्यामः ॥
इति ह स्माहुरात्रेयादयो महर्षयः ।
"धूमातपतुषाराम्बुक्रीडातिस्वप्नजागरैः ।
उत्स्वेदाधिपुरोवातबाष्पनिग्रहरोदनैः ॥ १ ॥
अत्यम्बुमद्यपानेन कृमिभिर्वेगधारणैः ।
उपधानमृजाभ्यङ्गद्वेषाधःप्रततेक्षणैः ॥ २ ॥
असात्म्यगन्धदुष्टामभाष्याद्यैश्च शिरोगताः ।
जनयन्त्यामयान् दोषाः

तत्र मारुतकोपतः ॥ ३ ॥
निस्तुद्येते भृशं शङ्खौ घाटा सम्भिद्यते तथा ।

---

१ 'कटुकतिक्ताः' इति पाठः।

भ्रुवोर्मध्यं ललाटं च पतनीवातिवेदनम् ॥ ४ ॥
बाध्येते स्वनतः श्रोत्रे निष्कृष्येत इवाक्षिणी ।
घूर्णतीव शिरः सर्वं सन्धिभ्य इव मुच्यते ॥ ५ ॥
स्फुरत्यतिसिराजालं कन्धराहनुसङ्ग्रहः ।
प्रकाशाक्षमता घ्राणस्रावोऽकस्माद्व्यथाशमौ ॥ ६ ॥
मार्दवं मर्दनस्नेहस्वेदबन्धैश्च जायते ।
शिरस्तापोऽयम्

अर्धे तु मूर्ध्नः सोऽर्धावभेदकः ॥ ७ ॥
पक्षात्कुप्यति मासाद्वा स्वयमेव च शाम्यति ।
अतिवृद्धस्तु नयनं श्रवणं वा विनाशयेत् ॥ ८ ॥
शिरोऽभितापे पित्तोत्थे शिरोधूमायनं ज्वरः ।
स्वेदोऽक्षिदहनं मूर्च्छा निशि शीतैश्च मार्दवम् ॥ ९ ॥
अरुचिः कफजे मूर्ध्नो गुरुस्तिमितशीतता ।

---

१ 'सहता घ्राण' इति पाठः. २ 'वृद्धोऽर्धावभेदकः कर्णाक्षिविनाशक इति वाग्भटोक्तिस्त्वत्र चिन्त्या, यतश्चरकमन्तरा सुश्रुतादीनामसम्मतत्वात्. सुश्रुतेन तु शिरोरोगास्त्वेकादशेत्युक्तं, ते च दशेति पठता वाग्भटेन चानन्तवातो न गृहीतस्तस्मादनन्तवातश्चैवातिवृद्धार्धावभेदकविशेषस्तदन्तर्गतो वेति सङ्क्षेपप्रियतया तत्तथोक्तिः । वस्तुतस्तु—अनन्तवातोऽर्धावभेदकभिन्नः स्वतन्त्रो रोगः (यस्य चोपर्युक्तानि लक्षणानि युज्यन्ते) यश्चाङ्ग्लवैद्यके The Douloureux, Facial neuralgia इति वा प्रसिद्धः.

सिरानिष्पन्दताऽलस्यं रुङ्मन्दाऽह्न्यधिका निशि ॥ १० ॥
तन्द्रा शूनाक्षिकूटत्वं कर्णकण्डूयनं वमिः ।
रक्तात् पित्ताधिकरुजः
सर्वैः स्यात्सर्वलक्षणः ॥ ११ ॥
सङ्कीर्णैर्भोजनैर्मूर्ध्नि क्लेदिते रुधिरामिषे ।
कोपिते सन्निपाते च जायन्ते मूर्ध्नि जन्तवः ॥ १२ ॥
शिरसस्ते पिबन्तोऽस्रं घोराः कुर्वन्ति वेदनाः ।
चित्तविभ्रंशजननीर्ज्वरः कासो बलक्षयः ॥ १३ ॥
रौक्ष्यशोफव्यधच्छेददाहस्फुरणपूतिताः ।
कपाले तालुशिरसोः कण्डूः शोषः प्रमीलकः ॥ १४ ॥
ताम्राच्छसिङ्घाणकता कर्णनादश्च जन्तुजे ।
वातोल्बणाः शिरःकम्पं तत्संज्ञं कुर्वते मलाः ॥ १५ ॥
पित्तप्रधानैर्वाताद्यैः शङ्खे शोफः सशोणितैः ।
तीव्रदाहरुजारागप्रलापज्वरतृड्भ्रमाः ॥ १६ ॥
तिक्तास्यः पीतवदनः क्षिप्रकारी स शङ्खकः ।
त्रिरात्राज्जीवितं हन्ति सिध्यत्यप्याशु साधितः ॥ १७ ॥
पित्तानुबद्धः शङ्खाक्षिभ्रूललाटेषु मारुतः ।
रुजं सस्पन्दनां कुर्यादनुसूर्योदयोदयाम् ॥ १८ ॥
आमध्याह्नं विवर्धिष्णुः क्षुद्वतः सा विशेषतः ।

---

१ 'निस्पन्द' इति क्वचित्. २ 'शून्याक्षि' इति पाठः. ३ 'स्फुटनपू' पाठः. ४ 'शुसाधितः' पाठः. ५ 'सस्यन्दनां' इत्यरुणः.

अव्यवस्थितशीतोष्णसुखा शाम्यत्यतः परम् ॥ १९ ॥
सूर्यावर्तः स
इत्युक्ता दश रोगाः शिरोगताः ।
शिरस्येव च वक्ष्यन्ते कपाले व्याधयो नव ॥ २० ॥
कपाले पवने दुष्टे गर्भस्थस्याऽपि जायते ।
सवर्णो नीरुजः शोफस्तं विद्यादुपशीर्षकम् ॥ २१ ॥
यथादोषोदयं ब्रूयात् पिटिकार्बुदविद्रधीन् ।
कपाले क्लेदबहुलाः पित्तासृक्श्लेष्मजन्तुभिः ॥ २२ ॥
कक्षुसिद्धार्थकनिभाः पिटिकाः स्युररूंषिकाः[1] ।
कण्डूकेशच्युतिस्वापरौक्ष्यकृत् स्फुटनं त्वचः ॥ २३ ॥
सुसूक्ष्मं कफवाताभ्यां विद्याद्दारुणकं तु तत् ।
रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम् ॥ २४ ॥
प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः ।
रोमकूपान् रुणद्ध्यस्य तेनान्येषामसम्भवः ॥ २५ ॥
तदिन्द्रलुप्तं रूढ्यां च प्राहुश्चाचेति चापरे ।
खलतेरपि जन्मैवं सदनं तत्र तु क्रमात् ॥ २६ ॥
सा वातादग्निदग्धाभा पित्तात्स्विन्नसिरावृता ।
कफाद्घनत्वग्वर्णाश्च यथास्वं निर्दिशेत् त्वचि ॥ २७ ॥
दोषैः सर्वाकृतिः सर्वैरसाध्या सा नखप्रभा ।
दग्धाग्निनेव निर्लोमा सदाहा या च जायते ॥ २८ ॥

---

१ 'रुंषिकाः' इति पाठः.

शोकश्रमक्रोधकृतः शरीरोष्मा शिरोगतः ।
केशान् सदोषः पचति पलितं सम्भवत्यतः ॥ २९ ॥
तद्वातात्स्फुटितं श्यावं खरं रूक्षं जलप्रभम् ।
पित्तात्सदाहं पीताभं कफात्स्निग्धं विवृद्धिमत् ॥ ३० ॥
स्थूलं सुशुक्लं सर्वैस्तु विद्याद्व्यामिश्रलक्षणम् ।
शिरोरुजोद्भवं चान्यद्विवर्णं स्पर्शनासहम् ॥ ३१ ॥
असाध्या सन्निपातेन खलतिः पलितानि च ।
शरीरपरिणामोत्थान्यपेक्षन्ते रसायनम् ॥ ३२ ॥"

## चतुर्विंशोऽध्यायः ।

अथाऽतः शिरोरोगप्रतिषेधं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥
"शिरोऽभितापेऽनिलजे वातव्याधिविधिं चरेत् ।
घृताभ्यक्तशिरा रात्रौ पिबेदुष्णपयोऽनुपः ॥ १ ॥
माषान् मुद्गान् कुलत्थान्वा तद्वत्खादेद्घृतान्वितान् ।
तद्वत् तिलानां कल्कं वा क्षीरेण सह पाययेत् ॥ २ ॥
पिण्डोपनाहस्वेदाश्च मांसधान्यकृता हिताः ।
वातघ्नदशमूलादिसिद्धक्षीरेण सेचनम् ॥ ३ ॥
स्निग्धं नस्यं तथा धूमः शिरःश्रवणतर्पणम् ।
वरणादौ गणे क्षुण्णे क्षीरमर्धोदकं पचेत् ॥ ४ ॥
क्षीरावशिष्टं तच्छीतं मथित्वा सारमाहरेत् ।

ततो मधुरकैः सिद्धं नस्यं तत्पूजितं हविः ॥ ५ ॥
वर्गेऽत्र पक्वं क्षीरे च पेयं सर्पिः सशर्करम् ।
कार्पासमज्जात्वक्मुस्तासुमनःकोरकाणि च ॥ ६ ॥
नस्यमुष्णाम्बुपिष्टानि सर्वमूर्धरुजापहम् ।
शर्कराकुङ्कुमशृतं घृतं पित्तासृगन्वये ॥ ७ ॥
प्रलेपः सघृतैः कुष्ठकुटिलोत्पलचन्दनैः ।
वातोद्रेकभयाद्रक्तं न चास्मिन्नवसेचयेत् ॥ ८ ॥
इत्यशान्तौ चले दाहः कफे चोष्णं यथोदितम् ।
अर्धावभेदकेऽप्येषा यथादोषान्वया क्रिया ॥ ९ ॥
शिरीषबीजापामार्गमूलं नस्यं बिडान्वितम् ।
स्थिरारसो वा लेपे तु प्रपुन्नाटोऽम्लकल्कितः ॥ १० ॥
सूर्यावर्ते तु तस्मिंस्तु सिरयापहरेदसृक् ।
शिरोऽभितापे पित्तोत्थे स्निग्धस्य व्यधयेत्सिराम् ॥ ११ ॥
शीताः शिरोमुखालेपसेकशोधनबस्तयः ।
जीवनीयशृते क्षीरसर्पिषी पाननस्ययोः ॥ १२ ॥
कर्तव्यं रक्तजेऽप्येतत् प्रत्याख्याय च शङ्खके ।
श्लेष्माभितापे जीर्णाज्यस्नेहितः कटुकैर्वमेत् ॥ १३ ॥
स्वेदप्रलेपनस्याद्या रूक्षतीक्ष्णोष्णभेषजैः ।
शस्यन्ते चोपवासोऽत्र निचये मिश्रमाचरेत् ॥ १४ ॥
क्रिमिजे शोणितं नस्यं तेन मूर्च्छन्ति जन्तवः ।
मत्ताः शोणितगन्धेन निर्यान्ति घ्राणवक्त्रयोः ॥ १५ ॥

---

१ 'क्षौद्रकु' इति पाठः. २ 'न्वयात्क्रिया' इत्यरुणः.

सुतीक्ष्णनस्यधूमाभ्यां कुर्याच्चिर्हरणं ततः ।
विडङ्गस्वर्जिकादन्तीहिङ्गुगोमूत्रसाधितम् ॥ १६ ॥
कटुनिम्बेङ्गुदीपीलुतैलं नस्यं पृथक् पृथक् ।
अजामूत्रद्रुतं नस्ये कृमिजित् कृमिजित्परम् ॥ १७ ॥
पूतिमत्स्ययुतैः कुर्याद्धूमं नावनभेषजैः ।
कृमिभिः पीतरक्तत्वाद्रक्तमत्र न निर्हरेत् ॥ १८ ॥
वाताभितापविहितः कल्पे दाहाद्विना क्रमः ।
नवे जन्मोत्तरं जाते योजयेदुपशीर्षके ॥ १९ ॥
वातव्याधिक्रियां, पक्के कर्म विद्रधिचोदितम् ।
आमपक्वे यथायोग्यं विद्रधीपिटिकार्बुदे ॥ २० ॥
अरूंषिका जलौकोभिर्हृतास्रा निम्बवारिणा ।
सिक्ता प्रभूतलवणैर्लिम्पेदश्वशकृद्रसैः ॥ २१ ॥
पटोलनिम्बपत्रैर्वा सहरिद्रैः सुकल्कितैः ।
गोमूत्रजीर्णपिण्याककृकवाकुमलैरपि ॥ २२ ॥
कपालभृष्टं कुष्ठं वा चूर्णितं तैलसंयुतम् ।
रूंषिकालेपनं क्लेदकण्डूदाहार्तिनाशनम् ॥ २३ ॥[1]
मालतीचित्रकाश्मघ्ननक्तमालप्रसाधितम् ।
वचारूंषिकयोस्तैलमभ्यङ्गः क्षुरघृष्टयोः ॥ २४ ॥
अशान्तौ शिरसः शुद्धौ यतेत वमनादिभिः ।
विध्येत्सिरां दारुणके ललाटयां शीलयेन्मृजाम् ॥ २५ ॥

---

१ 'कण्डूक्लेददाहा' इति पदव्यत्यासेन क्वचित्पठ्यते.

नावनं मूर्ध्नि बस्तिं च लेपयेच्च समाक्षिकैः ।
प्रियालबीजमधुककुष्ठमाषैः ससर्षपैः ॥ २६ ॥
लाक्षाशम्याकपत्रैलगजधात्रीफलैस्तथा ।
कोरदूषतृणक्षारवारिप्रक्षालनं हितम् ॥ २७ ॥
इन्द्रलुप्ते यथासन्नं सिरां विद्ध्वा प्रलेपयेत् ।
प्रच्छाय गाढं कासीसमनोह्वातुत्थकोषणैः ॥ २८ ॥
वन्यामरतरुभ्यां वा गुञ्जामूलफलैस्तथा ।
तथा लाङ्गलिकामूलैः करवीररसेन वा ॥ २९ ॥
सक्षौद्रक्षुद्रवार्ताकस्वरसेन रसेन वा ।
धत्तूरकस्य पत्राणां भल्लातकरसेन वा ॥ ३० ॥
अथवा माक्षिकहविस्तिलपुष्पत्रिकण्टकैः ।
तैलाक्ता हस्तिदन्तस्य मषी वा चौषधं परम् ॥ ३१ ॥
शुक्रोमोद्गमे तद्वन्मषी मेषविषाणजा ।
वर्जयेद्वारिणा सेकं यावद्रोमसमुद्भवः ॥ ३२ ॥
खलतौ पलिते वल्यां हरिल्लोम्नि च शोधितम् ।
नस्यवक्त्रशिरोऽभ्यङ्गप्रदेहैः समुपाचरेत् ॥ ३३ ॥
सिद्धं तैलं बृहत्याद्यैर्जीवनीयैश्च नावनम् ।
मासं वा निम्बजं तैलं क्षीरभुङ्नावयेद्यतिः ॥ ३४ ॥
नीलीशिरीषकोरण्टभृङ्गस्वरसभावितम् ।
शैल्वक्षतिलरामाणां बीजं काकाण्डकीसमम् ॥ ३५ ॥
पिष्ट्वाऽजपयसा लोहाल्लिप्तादर्कांशुतापितात् ।

तैलं शृतं क्षीरभुजो नावनात् पलितान्तकृत् ॥ ३६ ॥
क्षीरात्सहचराद् भृङ्गरजसः सौरसाद्रसात् ।
प्रस्थैस्तैलस्य कुडवः सिद्धो यष्टीपलान्वितः ॥ ३७ ॥
नस्यं शैलोद्भवे भाण्डे शृङ्गे मेषस्य वा स्थितः ।
क्षीरेण श्लक्ष्णपिष्टौ वा दुग्धिकाकरवीरकौ ॥ ३८ ॥
उत्पाट्य पलितं देयावाशये पलितापहौ ।
क्षीरं प्रियालं यष्ट्याह्वं जीवनीयो गणस्तिलाः ॥ ३९ ॥
कृष्णाः प्रलेपो वक्त्रस्य हरिल्लोमवलीहितः ।
तिलाः सामलकाः पद्मकिञ्जल्को मधुकं मधु ॥ ४० ॥
बृंहयेच्च रजेच्चैतत् केशान्मूर्धप्रलेपनात् ।
मांसी कुष्ठं तिलाः कृष्णाः सारिवा नीलमुत्पलम् ॥ ४१ ॥
क्षौद्रं च क्षीरपिष्टानि केशसंवर्धनं परम् ।
अयोरजो भृङ्गरजस्त्रिफला कृष्णमृत्तिका ॥ ४२ ॥
स्थितमिक्षुरसे मासं समूलं पलितं रजेत् ।
माषकोद्रवधान्याम्लैर्यवागूस्त्रिदिनोषिता ॥ ४३ ॥
लोहशुक्लोत्कटा पिष्टा बलाकामपि रञ्जयेत् ।
प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्पलैः ॥ ४४ ॥
सिद्धं धात्रीरसे तैलं नस्येनाभ्यञ्जनेन च ।
सर्वान् मूर्धगदान् हन्ति पलितानि च शीलितम् ॥ ४५ ॥
वरीजीवन्तिनिर्यासपयोभिर्यमकं पचेत् ।
जीवनीयैश्च तन्नस्यं सर्वजत्रूर्ध्वरोगजित् ॥ ४६ ॥

मयूरं पक्षपित्तान्त्रपादविट्तुण्डवर्जितम् ।
दशमूलबलारास्नामधुकैस्त्रिपलैर्युतम् ॥ ४७ ॥
जले पक्त्वा घृतप्रस्थं तस्मिन् क्षीरसमं पचेत् ।
कल्कितैर्मधुरद्रव्यैः सर्वजत्रूर्ध्वरोगजित् ॥ ४८ ॥
तदभ्यासीकृतं पानबस्त्यभ्यञ्जननावनैः ।
एतेनैव कषायेण घृतप्रस्थं विपाचयेत् ॥ ४९ ॥
चतुर्गुणेन पयसा कल्कैरेभिश्च कार्षिकैः ।
जीवन्तीत्रिफलामेदामृद्वीकार्द्धिपरूषकैः ॥ ५० ॥
समङ्गाचविकाभार्ङ्गीकाश्मरीकर्कटाह्वयैः ।
आत्मगुप्तामहामेदातालखर्जूरमस्तकैः ॥ ५१ ॥
मृणालबिसखर्जूरयष्टीमधुकजीवकैः ।
शतावरीविदारीक्षुबृहतीसारिवायुगैः ॥ ५२ ॥
दूर्वाश्वदंष्ट्रर्षभकशृङ्गाटककसेरुकैः ।
रास्नास्थिरातामलकीसूक्ष्मैलाशठिपौष्करैः ॥ ५३ ॥
पुनर्नवातवक्षीरीकाकोलीधन्वयासकैः ।
मधूकाक्षोटवाताममुञ्जाताभिषुकैरपि ॥ ५४ ॥
महामायूरमित्येतन्मायूरादधिकं गुणैः ।
धात्विन्द्रियस्वरभ्रंशश्वासकासार्दितापहम् ॥ ५५ ॥
योन्यसृक्शुक्रदोषेषु शस्तं वन्ध्यासुतप्रदम् ।
आखुभिः कर्कटैर्हंसैः शशैश्चेति प्रकल्पयेत् ॥ ५६ ॥
जत्रूर्ध्वजानां व्याधीनामेकत्रिंशशतद्वयम् ।

परस्परमसङ्कीर्णं विस्तरेण प्रकाशितम् ॥ ५७ ॥
ऊर्ध्वमूलमधःशाखमृषयः पुरुषं विदुः ।
मूलप्रहारिणस्तस्माद् रोगान् शीघ्रतरं जयेत् ॥ ५८ ॥
सर्वेन्द्रियाणि येनास्मिन् प्राणा येन च संश्रिताः ।
तेन तस्योत्तमाङ्गस्य रक्षायामादृतो भवेत् ॥ ५९ ॥"

---

## पञ्चविंशोऽध्यायः ।

अथाऽतो व्रणविज्ञानप्रतिषेधं[1] व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"व्रणो द्विधा, निजागन्तुदुष्टशुद्धविभेदतः ।
निजो दोषैः शरीरोत्थैरागन्तुर्बाह्यहेतुजः ॥ १ ॥
दोषैरधिष्ठितो दुष्टः, शुद्धस्तैरनधिष्ठितः ।
संवृतत्वं विवृतता काठिन्यं मृदुतापि वा ॥ २ ॥
अत्युत्सन्नावसन्नत्वमत्यौष्ण्यमतिशीतता[2] ।
रक्तत्वं पाण्डुता कार्ष्ण्यं पूतिपूयपरिस्रुतिः ॥ ३ ॥
पूतिमांससिरास्नायुच्छन्नतोत्सङ्गितातिरुक् ।
संरम्भदाहश्वयथुकण्ड्वादिभिरुपद्रुतिः ॥ ४ ॥
दीर्घकालानुबन्धश्च विद्याद्दुष्टव्रणाकृतिम् ।
स पञ्चदशधा दोषैः सरक्तैः

तत्र मारुतात् ॥ ५ ॥

---

१ 'विज्ञानीय' इति पाठः. २ 'ष्ण्यमति' इति पाठः.

श्यावः कृष्णोऽरुणो भस्मकपोतास्थिनिभोऽपि च।
मस्तुमांसपुलाकाम्बुतुल्यतन्वल्पसंस्रुतिः ॥ ६ ॥
निर्मांसस्तोदभेदाढ्यो रूक्षश्चटचटायते।
पित्तेन क्षिप्रजः पीतो नीलः कपिलपिङ्गलः ॥ ७ ॥
मूत्रकिंशुकभस्माम्बुतैलाभोष्णबहुस्रुतिः।
क्षारोक्षितक्षतसमव्यथो रागोष्मपाकवान् ॥ ८ ॥
कफेन पाण्डुः कण्डूमान् बहुश्वेतघनस्रुतिः।
स्थूलौष्ठः कठिनः स्नायुसिराजालततोऽल्परुक् ॥ ९ ॥
प्रवालरक्तो रक्तेन सरक्तं पूयमुद्गिरेत्।
वाजिस्थानसमो गन्धे युक्तो लिङ्गैश्च पैत्तिकैः ॥ १० ॥
द्वाभ्यां त्रिभिश्च सर्वैश्च विद्याल्लक्षणसङ्करान्।
जिह्वाप्रभो मृदुः श्लक्ष्णः श्यावौष्ठपिटिकः समः ॥ ११ ॥
किंचिदुन्नतमध्यो वा व्रणः शुद्धोऽनुपद्रवः।
त्वगामिषसिरास्नायुसन्ध्यस्थीनि व्रणाशयाः ॥ १२ ॥
कोष्ठो मर्म च तान्यष्टौ दुःसाध्यान्युत्तरोत्तरम्।
सुसाध्यः सत्वमांसाग्निवयोबलवति व्रणः ॥ १३ ॥
वृत्तो दीर्घस्त्रिपुटकश्चतुरस्राकृतिश्च यः।
तथा स्फिक्पायुमेढ्रोष्ठपृष्ठान्तर्वक्त्रगण्डजः[2] ॥ १४ ॥
कृच्छ्रसाध्योऽक्षिदशननासिकापाङ्गनाभिषु।
सेवनीजठरश्रोत्रपार्श्वकक्षास्तनेषु च ॥ १५ ॥

---

१ 'जालततोऽल्प' इत्यरुणः, २ 'गण्डयोः' इति पाठः.

फेनपूयानिलवहः शल्यवानूर्ध्वनिर्वमी ।
भगन्दरोऽन्तर्वदनस्तथा कक्ष्यस्थिसंश्रितः ॥ १६ ॥
कुष्ठिनां विषजुष्टानां शोषिणां मधुमेहिनाम् ।
व्रणाः कृच्छ्रेण सिद्ध्यन्ति येषां च स्युर्व्रणे व्रणाः ॥ १७ ॥
नैव सिध्यन्ति वीसर्पज्वरातीसारकासिनाम् ।
पिपासूनामनिद्राणां श्वासिनामविपाकिनाम् ॥ १८ ॥
भिन्ने शिरःकपाले वा मस्तुलुङ्गस्य दर्शने ।
स्नायुक्लेदात्सिराच्छेदाद्गाम्भीर्यात्कृमिभक्षणात् ॥ १९ ॥
अस्थिभेदात्सशल्यत्वात्सविषत्वादतर्कितात् ।
मिथ्याबन्धादतिस्नेहाद्रौक्ष्याद्रोमातिघट्टनात् ॥ २० ॥
क्षोभादशुद्धकोष्ठत्वात्सौहित्यादतिकर्शनात् ।
मद्यपानाद्दिवास्वापाद् व्यवायाद्रात्रिजागरात् ॥ २१ ॥
व्रणो मिथ्योपचाराच्च नैव साध्योऽपि रोहति ।
कपोतवर्णप्रतिमा यस्यान्ताः क्लेदवर्जिताः ॥ २२ ॥
स्थिराश्चिपिटिकावन्तो रोहतीति समादिशेत् ।
अथाऽत्र शोफावस्थायां यथासन्नं विशोधनम् ॥ २३ ॥
योज्यं, शोफो हि शुद्धानां व्रणश्चाशु प्रशाम्यति ।
कुर्याच्छीतोपचारं च शोफावस्थस्य सन्ततम् ॥ २४ ॥
दोषाग्निरग्निवत्तेन प्रयाति सहसा शमम् ।
शोफे व्रणे च कठिने विवर्णे वेदनान्विते ॥ २५ ॥
विषयुक्ते विशेषेण जलौकाद्यैर्हरेदसृक् ।
दुष्टास्रेऽपगते सद्यः शोफरागरुजां शमः ॥ २६ ॥

हृते हृते च रुधिरे सुशीतैः स्पर्शवीर्ययोः ।
सुश्लक्ष्णैस्तदहःपिष्टैः क्षीरेक्षुस्वरसद्रवैः ॥ २७ ॥
शतधौतघृतोपेतैर्मुहुरन्यैरशोषिभिः ।
प्रतिलोमं हितो लेपः सेकाभ्यङ्गाश्च तत्कृताः ॥ २८ ॥
न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः ।
प्रदेहो भूरिसर्पिर्भिः शोफनिर्वापणः परम् ॥ २९ ॥
वातोल्बणानां स्तब्धानां कठिनानां महारुजाम् ।
स्रुतासृजां च शोफानां व्रणानामपि चेदृशाम् ॥ ३० ॥
आनूपवेसवाराद्यैः स्वेदः सोमास्तिलाः पुनः ।
भृष्टा निर्वापिताः क्षीरे तत्पिष्टा दाहरुग्घराः ॥ ३१ ॥
स्थिरान् मन्दरुजः शोफान् स्नेहैर्वातकफापहैः ।
अभ्यज्य स्वेदयित्वा च वेणुनाड्या शनैः शनैः ॥ ३२ ॥
विम्लापनार्थं मृद्नीयात् तलेनाङ्गुष्ठकेन वा ।
यवगोधूममुद्गैश्च सिद्धपिष्टैः प्रलेपयेत् ॥ ३३ ॥
विलीयते स नैवैवं ततस्तमुपनाहयेत् ।
अविदग्धस्तथा शान्तिं विदग्धः पाकमश्नुते ॥ ३४ ॥
सकोलतिलवल्लोमा दध्यम्ला सक्तुपिण्डिका ।
सकिण्वकुष्ठलवणा कोष्णा शस्तोपनाहने ॥ ३५ ॥
सुपक्वे पिण्डिते शोफे पीडनैरुपपीडिते ।
दारणं दारणार्हस्य सुकुमारस्य चेष्यते ॥ ३६ ॥
गुग्गुल्वतसिगोदन्तस्वर्णक्षीरी कपोतविट् ।
क्षारौषधानि क्षाराश्च पक्वशोफविदारणम् ॥ ३७ ॥

पृथगर्भानणुद्वारान् सोत्सङ्गान्मर्मगानपि ।
निःस्नेहैः पीडनद्रव्यैः समन्तात्प्रतिपीडयेत् ॥ ३८ ॥
शुष्यन्तं समुपेक्षेत प्रलेपं पीडनं प्रति ।
न मुखे चैनमालिम्पेत् तथा दोषः प्रसिच्यते ॥ ३९ ॥
कलाययवगोधूममाषमुद्गहरेणवः ।
द्रव्याणां पिच्छिलानां च त्वङ्मूलानि प्रपीडनम् ॥ ४० ॥
सप्तसु क्षालनाद्येषु सुरसारग्वधादिकौ ।
भृशं दुष्टे व्रणे योज्यौ मेहकुष्ठव्रणेषु च ॥ ४१ ॥
अथवा क्षालनं क्वाथः पटोलीनिम्बपत्रजः ।
अविशुद्धे विशुद्धे तु न्यग्रोधादित्वगुद्भवः ॥ ४२ ॥
पटोलीतिलयष्ट्याह्वत्रिवृद्दन्तीनिशाद्वयम् ।
निम्बपत्राणि चालेपः सपटुर्व्रणशोधनः ॥ ४३ ॥
व्रणान् विशोधयेद्वर्त्या सूक्ष्मास्यान् सन्धिमर्मगान् ।
कृतया त्रिवृतादन्तीलाङ्गलीमधुसैन्धवैः ॥ ४४ ॥
वाताभिभूतान् सास्रावान् धूपयेदुग्रवेदनान् ।
यवाज्यभूर्जमदनश्रीवेष्टकसुराह्वयैः ॥ ४५ ॥
निर्वापयेद् भृशं शीतैः पित्तरक्तविषोल्बणान् ।
शुष्काल्पमांसे गम्भीरे व्रणे उत्सादनं हितम् ॥ ४६ ॥
न्यग्रोधपद्मकादिभ्यामश्वगन्धाबलातिलैः ।
अथान्मांसादमांसानि विधिनोपहितानि च ॥ ४७ ॥
मांसं मांसादमांसेन वर्धते शुद्धचेतसः ।
उत्सन्नमृदुमांसानां व्रणानामवसादनम् ॥ ४८ ॥

जातीमुकुलकासीसमनोह्वालपुराग्निकैः ।
उत्सन्नमांसान् कठिनान् कण्डूयुक्तांश्चिरोत्थितान् ॥ ४९ ॥
व्रणान्सुदुःखशोध्यांश्च योजयेत्क्षारकर्मणा[1] ।
स्रवन्तोऽश्मरिजा मूत्रं ये चान्ये रक्तवाहिनः ॥ ५० ॥
छिन्नाश्च सन्धयो येषां यथोक्तैर्ये च शोधनैः ।
शोध्यमाना न शुद्ध्यन्ति शोध्याः स्युस्तेऽग्निकर्मणा ॥५१॥
शुद्धानां रोपणं योज्यमुत्सादाय यदीरितम् ।
अश्वगन्धारुहारोध्रं कट्फलं मधुयष्टिका ॥ ५२ ॥
समङ्गाधातकीपुष्पं परमं व्रणरोपणम् ।
अपेतपूतिमांसानां मांसस्थानामरोहताम् ॥ ५३ ॥
कल्कं संरोहणं कुर्यात् तिलानां मधुकान्वितम् ।
स्निग्धोष्णतिक्तमधुरकषायत्वैः स सर्वजित् ॥ ५४ ॥
स क्षौद्रनिम्बपत्राभ्यां युक्तः संशोधनं परम् ।
पूर्वाभ्यां सर्पिषा चासौ युक्तः स्यादाशुरोपणः ॥ ५५ ॥
तिलवद्यवकल्कं तु केचिदिच्छन्ति तद्विदः ।
सास्रपित्तविषागन्तुगम्भीरान्सोष्मणो व्रणान् ॥ ५६ ॥
क्षीररोपणभैषज्यशृतेनाज्येन रोपयेत् ।
रोपणौषधसिद्धेन तैलेन कफवातजान् ॥ ५७ ॥
काञ्चीरोध्राभयासर्जसिन्दूराञ्जनतुत्थकम् ।
चूर्णितं तलमदनैर्युक्तं रोपणमुत्तमम् ॥ ५८ ॥

---

१ 'शोधयेत्क्षार' इति पाठः.

समानां स्थिरमांसानां त्वक्स्थानां चूर्णं इष्यते ।
ककुभोदुम्बराश्वत्थजम्बूकट्फलरोध्रजैः ॥ ५९ ॥
त्वचमाशु निगृह्णन्ति त्वक्चूर्णैश्चूर्णिता व्रणाः ।
लाक्षामनोह्वामञ्जिष्ठाहरितालनिशाद्वयैः ॥ ६० ॥
प्रलेपः सघृतक्षौद्रस्त्वग्विशुद्धिकरः परम् ।
कालीयकलताम्रास्थिहेमकालारसोत्तमैः ॥ ६१ ॥
लेपः सगोमयरसः सवर्णकरणः परम् ।
दग्धो वारणदन्तोऽन्तर्धूमं तैलं रसाञ्जनम् ॥ ६२ ॥
रोमसञ्जननो लेपस्तद्वत्तैलपरिप्लुता ।
चतुष्पान्नखरोमास्थित्वक्शृङ्गखुरजा मषी ॥ ६३ ॥
व्रणिनः शल्यकर्मोक्तं पथ्यापथ्यासमादिशेत् ।
द्वे पञ्चमूले वर्गश्च वातघ्नो वातिके हितः ॥ ६४ ॥
न्यग्रोधपद्मकाद्यौ तु तद्वत्पित्तप्रदूषिते, ।
आरग्वधादिः श्लेष्मघ्नः कफे, मिश्रस्तु मिश्रके ॥ ६५ ॥
एभिः प्रक्षालनालेपघृततैलरसक्रियाः ।
चूर्णो वर्तिश्च संयोज्या व्रणे सप्त यथायथम् ॥ ६६ ॥
जातीनिम्बपटोलपत्रकटुकादार्वीनिशासारिवा-
मञ्जिष्ठाभयसिक्थतुत्थमधुकैर्नक्ताह्वबीजान्वितैः ।
सर्पिः साध्यमनेन सूक्ष्मवदना मर्माश्रिताः क्लेदिनो
गम्भीराः सरुजो व्रणाः सगतयः शुद्ध्यन्ति रोहन्ति च ६७

## षड्विंशोऽध्यायः ।

अथाऽतः सद्योव्रणप्रतिषेधं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"सद्योव्रणा ये सहसा सम्भवन्त्यभिघाततः ।
अनन्तैरपि तैरङ्गमुच्यते जुष्टमष्टधा ॥ १ ॥
घृष्टावकृत्तविच्छिन्नप्रविलम्बितपातितम् ।
विद्धं भिन्नं विदलितम्

तत्र घृष्टं लसीकया ॥ २ ॥
रक्तलेशेन वा युक्तं सप्लोषं च्छेदनात् स्रवेत् ।
अवगाढं ततः कृत्तं विच्छिन्नं स्यात्ततोऽपि च ॥ ३ ॥
प्रविलम्बि सशेषेऽस्थि पातितं पतितं तनोः ।
सूक्ष्मास्यशल्यविद्धं तु विद्धं कोष्ठविवर्जितम् ॥ ४ ॥
भिन्नमन्यद्विदलितं मज्जरक्तपरिप्लुतम् ।
प्रहारपीडनोत्पेषात्सहास्थ्ना पृथुतां गतम् ॥ ५ ॥
सद्यः सद्योव्रणं सिञ्चेदथ यष्ट्याह्वसर्पिषा ।
तीव्रव्यथं कवोष्णेन बलातैलेन वा पुनः ॥ ६ ॥
क्षतोष्मणो निग्रहार्थं तत्कालं विस्तृतस्य च ।
कषायशीतमधुरस्निग्धा लेपादयो हिताः ॥ ७ ॥
सद्योव्रणेष्वायतेषु सन्धानार्थं विशेषतः ।
मधुसर्पिश्च युञ्जीत पित्तघ्नीश्च हिमाः क्रियाः ॥ ८ ॥
ससंरम्भेषु कर्तव्यमूर्ध्वं चाधश्च शोधनम् ।
उपवासो हितं भुक्तं प्रततं रक्तमोक्षणम् ॥ ९ ॥

घृष्टे विदलिते चैव सुतरामिष्यते विधिः ।
तयोर्ह्यल्पं स्रवत्यस्रं पाकस्तेनाशु जायते ॥ १० ॥
अत्यर्थमस्रं स्रवति प्रायशोऽन्यत्र विक्षते ।
ततो रक्तक्षयाद्वायौ कुपितेऽतिरुजाकरे ॥ ११ ॥
स्नेहपानपरीषेकस्वेदलेपोपनाहनम् ।
स्नेहबस्तिं च कुर्वीत वातघ्नौषधसाधितम् ॥ १२ ॥
इति साप्ताहिकः प्रोक्तः सद्योव्रणहितो विधिः ।
सप्ताहाद्गतवेगे तु पूर्वोक्तं विधिमाचरेत् ॥ १३ ॥
प्रायः सामान्यकर्मेदं वक्ष्यते तु पृथक्पृथक् ।
घृष्टे रुजं निगृह्याशु व्रणे चूर्णानि योजयेत् ॥ १४ ॥
कल्कादीन्यवकृत्ते तु

विच्छिन्नप्रविलम्बिनोः ।
सीवनं विधिनोक्तेन बन्धनं चानु पीडनम् ॥ १५ ॥
असाध्यं स्फुटितं नेत्रमदीर्णं लम्बते तु यत् ।
सन्निवेश्य यथास्थानमव्याविद्धसिरं भिषक् ॥ १६ ॥
पीडयेत् पाणिना पद्मपलाशान्तरितेन तत् ।
ततोऽस्य सेचने नस्ये तर्पणे च हितं हविः ॥ १७ ॥
विपक्वमाजं यष्ट्याह्वजीवकर्षभकोत्पलैः ।
सपयस्कैः परं तद्धि सर्वनेत्राभिघातजित् ॥ १८ ॥
गलपीडावसन्नेऽक्ष्णि वमनोत्क्लेशनक्षवाः ।
प्राणायामोऽथवा कार्यः क्रिया च क्षतनेत्रवत् ॥ १९ ॥
कर्णे स्थानाच्च्युते स्यूते स्रोतस्तैलेन पूरयेत् ।

कृकाटिकायां छिन्नायां निर्गच्छत्यपि मारुते ॥ २० ॥
समं निवेश्य बध्नीयात् स्यूत्वा शीघ्रं निरन्तरम् ।
आजेन सर्पिषा चाऽत्र परिषेकः प्रशस्यते ॥ २१ ॥
उत्तानोऽन्नानि भुञ्जीत शयीत च सुयन्त्रितः ।
घातं शाखासु तिर्यक्स्थं गात्रे सम्यङ्निवेशिते ॥ २२ ॥
स्यूत्वा वेल्लितबन्धेन बध्नीयाद् घनवाससा ।
चर्मणा गोष्फणाबन्धः कार्यश्चासङ्कते व्रणे ॥ २३ ॥
पादौ विलम्बिमुष्कस्य प्रोक्ष्य नेत्रे च वारिणा ।
प्रवेश्य वृषणौ सीव्येत् सेवन्या तुन्नसंज्ञया ॥ २४ ॥
कार्यश्च गोष्फणाबन्धः कट्यामावेश्य पट्टकम् ।
स्नेहसेकं न कुर्वीत तत्र क्लिद्यति हि व्रणः ॥ २५ ॥
कालानुसार्यगुर्वेलाजातीचन्दनपर्पटैः ।
शिलादार्व्यमृतातुत्थैः सिद्धं तैलं च रोपणम् ॥ २६ ॥
छिन्नां निःशेषतः शाखां दग्ध्वा तैलेन युक्तितः ।
बध्नीयात् कोशबन्धेन ततो व्रणवदाचरेत् ॥ २७ ॥
कार्या शल्याहृते विद्धे भग्नाद्विदलिते क्रिया ।
शिरसोऽपहृते शल्ये वालवर्तिं प्रवेशयेत् ॥ २८ ॥
मस्तुलुङ्गस्रुते क्रुद्धो हन्यादेनं चलोऽन्यथा ।
व्रणे रोहति चैकैकं शनैरपनयेत्कचम् ॥ २९ ॥
मस्तुलुङ्गस्रुतौ खादेन्मस्तिष्कानन्यजीवजान् ।
शल्ये हृतेऽङ्गादन्यस्मात्स्नेहवर्तिं निधापयेत् ॥ ३० ॥

दूरावगाढाः सूक्ष्मास्या ये व्रणाः स्रुतशोणिताः ।
सेचयेच्चक्रतैलेन सूक्ष्मनेत्रार्पितेन तान् ॥ ३१ ॥
भिन्ने कोष्ठेऽसृजा पूर्णे मूर्च्छा हृत्पार्श्ववेदनाः ।
ज्वरो दाहस्तृडाध्मानं भक्तस्यानभिनन्दनम् ॥ ३२ ॥
सङ्गो विण्मूत्रमरुतां श्वासः स्वेदोऽक्षिरक्तता ।
लोहगन्धित्वमास्यस्य स्याद् गात्रे च विगन्धता ॥ ३३ ॥
आमाशयस्थे रुधिरे रुधिरं छर्दयत्यपि ।
आध्मानेनाऽतिमात्रेण शूलेन च विशस्यते ॥ ३४ ॥
पक्वाशयस्थे रुधिरे सशूलं गौरवं भवेत् ।
नाभेरधस्ताच्छीतत्वं खेभ्यो रक्तस्य चागमः ॥ ३५ ॥
अभिन्नोऽप्याशयः सूक्ष्मैः स्रोतोभिरभिपूर्यते ।
असृजा स्यन्दमानेन पार्श्वे मूत्रेण बस्तिवत् ॥ ३६ ॥
तत्रान्तर्लोहितं शीतपादोच्छ्वासकराननम् ।
रक्ताक्षं पाण्डुवदनमानद्धं च विवर्जयेत् ॥ ३७ ॥
आमाशयस्थे वमनं हितं पक्वाशयाश्रये ।
विरेचनं निरूहं च निःस्नेहोष्णैर्विशोधनैः ३८ ॥

---

१ 'स्रुत' इति पाठः क्वचित्. २ अरुणदत्तेन 'कोल्हुका-धुद्भवेन' चक्रतैलेनेत्युक्तम्. कौल्हुक तु तैल-निष्कासनयन्त्रम्, तत्खण्डशश्छित्वा जले क्वाथयेत् तस्मादवलब्ध तैलं तद्गुणतैलमिति वृद्धवाग्भटेनोक्तं, तस्मात् अरुणोक्तिश्चिन्त्या. वस्तुतस्तु - चक्रतैलं तत्कालनिष्कासितं ग्राह्यम्.

यवकोलकुलत्थानां रसैः स्नेहविवर्जितैः ।
भुञ्जीतान्नं यवागूं वा पिबेत्सैन्धवसंयुताम् ॥ ३९ ॥
अतिनिःस्रुतरक्तस्तु भिन्नकोष्ठः पिबेदसृक् ।
क्लिन्नभिन्नान्त्रभेदेन कोष्ठभेदो द्विधा स्मृतः ॥ ४० ॥
मूर्च्छादयोऽल्पाः प्रथमे, द्वितीये त्वतिबाधकाः ।
क्लिन्नान्त्रः संशयी देही भिन्नान्त्रो नैव जीवति ॥ ४१ ॥
यथास्वं मार्गमापन्ना यस्य विण्मूत्रमारुताः ।
व्युपद्रवः स भिन्नेऽपि कोष्ठे जीवत्यसंशयम् ॥ ४२ ॥
अभिन्नमन्त्रं निष्क्रान्तं प्रवेश्यं न त्वतोऽन्यथा ।
उत्पिपीलिशिरोग्रस्तं तदप्येके वदन्ति तु ॥ ४३ ॥
प्रक्षाल्य पयसा दिग्धं तृणशोणितपांसुभिः ।
प्रवेशयेत्कृत्तनखो घृतेनाक्तं शनैः शनैः ॥ ४४ ॥
क्षीरेणार्द्रीकृतं शुष्कं भूरिसर्पिःपरिप्लुतम् ।
अङ्गुल्या प्रमृशेत्कण्ठं जलेनोद्वेजयेदपि ॥ ४५ ॥
तथान्त्राणि विशन्त्यन्तस्तत्कालं पीडयन्ति च ।
व्रणसौक्ष्म्याद्बहुत्वाद्वा कोष्ठमन्त्रमनाविशत् ॥ ४६ ॥
तत्प्रमाणेन जठरं पाटयित्वा प्रवेशयेत् ।
यथास्थानं स्थिते सम्यगन्त्रे सीव्येदनु व्रणम् ॥ ४७ ॥
स्थानादपेतमादत्ते जीवितं कुपितं च तत् ।
वेष्टयित्वाऽनु पट्टेन घृतेन परिषेचयेत् ॥ ४८ ॥

---

१ 'स्रुत' इति क्वचित्. २ 'स्वां कलां पी' इति पाठः.

पाययेत्तं ततः कोष्णं चित्रातैलयुतं पयः ।
मृदुक्रियार्थं शकृतो वायोश्चाधः प्रवृत्तये ॥ ४९ ॥
अनुवर्तेत वर्षं च यथोक्तां व्रणयन्त्रणाम् ।
उदरान्मेदसो वर्तिं निर्गतां भस्मना मृदा ॥ ५० ॥
अवकीर्य कषायैर्वा श्लक्ष्णैर्मूलैस्ततः समम् ।
दृढं बद्धा च सूत्रेण वर्धयेत्कुशलो भिषक् ॥ ५१ ॥
तीक्ष्णेनाग्निप्रतप्तेन शस्त्रेण सकृदेव तु ।
स्यादन्यथा रुगाटोपो मृत्युर्वा छिद्यमानया ॥ ५२ ॥
सक्षौद्रे च व्रणे बद्धे सुजीर्णेऽन्ने घृतं पिबेत् ।
क्षीरं वा शर्कराचित्रालाक्षागोक्षुरकैः शृतम् ॥ ५३ ॥
रुग्दाहजित्सयष्ट्याह्वैः परं पूर्वोदितो विधिः ।
मेदोग्रन्थ्युदितं तत्र तैलमभ्यञ्जने हितम् ॥ ५४ ॥
तालीसं पद्मकं मांसीहरेण्वगुरुचन्दनम् ।
हरिद्रे पद्मबीजानि सोशीरं मधुकं च तैः ॥ ५५ ॥
पक्वं सद्योव्रणेपूक्तं तैलं रोपणमुत्तमम् ।
गूढप्रहाराभिहते पतिते विषमोच्चकैः ॥ ५६ ॥
कार्यं वातास्रजित्स्निग्धमर्दनाभ्यञ्जनादिकम् ।
विश्लिष्टदेहं मथितं क्षीणं मर्माहताहतम्[१] ।
वासयेत्तैलपूर्णायां द्रोण्यां मांसरसाशनम् ॥ ५७ ॥

---

१ 'मर्महताहतम्' इति पाठः.

## सप्तविंशोऽध्यायः ।

अथाऽतो भङ्गप्रतिषेधं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।

"पातघातादिभिर्द्वेधा भङ्गोऽस्थ्नां सन्ध्यसन्धितः ।
प्रसारणाकुञ्चनयोरशक्तिः सन्धिमुक्तता ॥ १ ॥
इतरस्मिन् भृशं शोफः सर्वावस्थास्वतिव्यथा ।
अशक्तिश्चेष्टितेऽल्पेऽपि पीड्यमाने सशब्दता ॥ २ ॥
समासादिति भङ्गस्य लक्षणं, बहुधा तु तत् ।
भिद्यते भङ्गभेदेन, तस्य सर्वस्य साधनम् ॥ ३ ॥
यथा स्यादुपयोगाय तथा तदुपदेक्ष्यते ।
प्राग्दाणुदारि यत्त्वस्थि स्पर्शे शब्दं करोति यत् ॥ ४ ॥
यत्रास्थिलेशः प्रविशेन्मध्यमस्थ्नो विदारितः ।
भग्नं यच्चाभिघातेन किंचिदेवावशेषितम् ॥ ५ ॥
उत्क्षिप्यमाणं क्षतवद्यच्च मज्जनि मज्जति ।
तद्दुःसाध्यं कृशाशक्तवातलाल्पाशिनामपि ॥ ६ ॥
भिन्नं कपालं यत् कट्यां सन्धिमुक्तं च्युतं च यत् ।
जघनं प्रतिपिष्टं च भग्नं यत्तद्विवर्जयेत् ॥ ७ ॥
असंश्लिष्टकपालं च ललाटं चूर्णितं तथा ।
यच्च भग्नं भवेच्छङ्खशिरःपृष्ठस्तनान्तरे ॥ ८ ॥
सम्यग्यमितमप्यस्थि दुर्न्यासाद्दुर्निबन्धनात् ।
संक्षोभादपि यद्गच्छेद्विक्रियां तद्विवर्जयेत् ॥ ९ ॥

आविद्धो यश्च दुर्जातमस्थि सन्धिरथापि वा ।
तरुणास्थीनि भुज्यन्ते भज्यन्ते नलकानि तु ॥ १० ॥
कपालानि विभिद्यन्ते स्फुटन्त्यन्यानि भूयसा ।
अथावनतमुन्नम्यमुन्नतं चावपीडयेत् ॥ ११ ॥
आञ्छेदतिक्षिप्तमधोगतं चोपरि वर्तयेत् ।
आञ्छनोत्पीडनोन्नामचर्मसङ्क्षेपबन्धनैः ॥ १२ ॥
सन्धीन् शरीरगान्सर्वान् चलानप्यचलानपि ।
इत्येतैः स्थापनोपायैः सम्यक् संस्थाप्य निश्चलम् ॥ १३ ॥
पट्टैः प्रभूतसर्पिर्भिर्वेष्टयित्वा सुखैस्ततः ।
कदम्बोदुम्बराश्वत्थसर्जार्जुनपलाशजैः ॥ १४ ॥
वंशोत्थैर्वा पृथुभिस्तनुभिः सुनिवेशितैः ।
सुश्लक्ष्णैः सुप्रतिस्तम्भैर्वल्कलैः शकलैरपि ॥ १५ ॥
कुशाह्वयैः समं बन्धं पट्टस्योपरि योजयेत् ।
शिथिलेन हि बन्धेन सन्धेः स्थैर्यं न जायते ॥ १६ ॥
गाढेनातिरुजादाहपाकश्वयथुसम्भवः ।
त्र्यहात्त्र्यहाद्द्वौ घर्मे सप्ताहान्मोक्षयेद्धिमे ॥ १७ ॥
साधारणे तु पञ्चाहाद् भङ्गदोषवशेन वा ।
न्यग्रोधादिकषायेण ततः शीतेन सेचयेत् ॥ १८ ॥
तं पञ्चमूलपक्वेन पयसा तु सवेदनम् ।
सुखोष्णं वावचार्यं स्याच्चक्रतैलं विजानता ॥ १९ ॥
विभज्य देशं कालं च वातघ्नौषधसंयुतम् ।

प्रततं सेकलेपांश्च विदध्याद् भृशशीतलान् ॥ २० ॥
गृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितम् ।
प्रातः प्रातः पिबेद्भग्नः शीतलं लाक्षया युतम् ॥ २१ ॥
सव्रणस्य तु भग्नस्य व्रणो मधुघृतोत्तरैः ।
कषायैः प्रतिसार्योऽथ शेषो भङ्गोदितः क्रमः ॥ २२ ॥
लम्बानि व्रणमांसानि प्रलिप्य मधुसर्पिषा ।
सन्दधीत व्रणान् वैद्यो बन्धनैश्चोपपादयेत् ॥ २३ ॥
तान्समान्सुस्थिताञ्ज्ञात्वा फलिनीरोध्रकट्फलैः ।
समङ्गाधातकीयुक्तैश्चूर्णितैरवचूर्णयेत् ॥ २४ ॥
धातकीरोध्रचूर्णैर्वा रोहन्त्याशु तथा व्रणाः ।
इति भङ्ग उपक्रान्तः

स्थिरधातो ऋतौ हिमे ॥ २५ ॥

मांसलस्याल्पदोषस्य सुसाध्यो दारुणोऽन्यथा ।
पूर्वमध्यान्तवयसामेकद्वित्रिगुणैः क्रमात् ॥ २६ ॥
मासैः स्थैर्यं भवेत्सन्धेर्यथोक्तं भजतो विधिम् ।
कटीजङ्घोरुभग्नानां कपाटशयनं हितम् ॥ २७ ॥
यन्त्रणार्थं तथा कीलाः पञ्च कार्या निबन्धनाः ।
जङ्घोर्वोः पार्श्वयोर्द्वौ द्वौ तल एकश्च कीलकः ॥ २८ ॥
श्रोण्यां वा पृष्ठवंशे वा वक्षस्यक्षकयोस्तथा ।
विमोक्षे भग्नसन्धीनां विधिमेवं समाचरेत् ॥ २९ ॥

१ 'वक्रस्था' इति पाठः.

सन्धींश्चिरविमुक्तांस्तु स्निग्धान्स्विन्नान् मृदूकृतान्।
उक्तैर्विधानैर्बुद्ध्वा च यथास्वं स्थानमानयेत्॥ ३० ॥
असन्धिभग्ने रूढे तु विषमोल्बणसाधिते।
आपोथ्य भङ्गं यमयेत्ततो भग्नवदाचरेत्॥ ३१ ॥
भग्नं नैति यथा पाकं प्रयतेत तथा भिषक्।
पक्वमांससिरास्नायुः सन्धिः श्लेषं न गच्छति॥ ३२ ॥
वातव्याधिविनिर्दिष्टान् स्नेहान् भग्नस्य योजयेत्।
चतुःप्रयोगान् बल्यांश्च बस्तिकर्म च शीलयेत्॥ ३३ ॥
शाल्याज्यरसदुग्धाद्यैः पौष्टिकैरविदाहिभिः।
मात्रयोपचरेद्भग्नं सन्धिसंश्लेषकारिभिः॥ ३४ ॥
ग्लानिर्न शस्यते तस्य, सन्धिविश्लेषकृद्धि सा।
लवणं कटुकं क्षारमम्लं मैथुनमातपम्।
व्यायामं च न सेवेत भग्नो रूक्षं च भोजनम्॥ ३५ ॥

कृष्णांस्तिलान् विरजसो दृढवस्त्रबद्धान्
सप्त क्षपा वहति वारिणि वासयेत।
संशोषयेदनुदिनं प्रविसार्य चैतान्
क्षीरे तथैव मधुककथिते च तोये॥ ३६ ॥

पुनरपि पीतपयस्कां-
स्तान् पूर्ववदेव शोषितान् बाढम्।
विगततुषानरजस्कान्
संचूर्ण्य सुचूर्णितैर्युञ्ज्यात्॥ ३७ ॥

---

१ 'स्नायुसन्धिः' इति पाठः.

नलदवालकलोहितयष्टिका-
नखमिशिप्लवकुष्ठबलान्वयैः ।
अगुरुचन्दनकुङ्कुमसारिवा-
सरलसर्जरसामरदारुभिः ॥ ३८ ॥
पद्मकादिगणोपेतैस्तिलपिष्ट ततश्च तत् ।
समस्तगन्धभैषज्यसिद्धदुग्धेन पीडयेत् ॥ ३९ ॥
शैलेयरास्नांशुमतीकसेरु-
कालानुसारीनतपत्ररोध्रैः ।
सक्षीरशुक्लैः सपयस्कदूर्वै-
स्तैलं पचेत्तन्नलदादिभिश्च ॥ ४० ॥
गन्धतैलमिदमुत्तममस्थि-
स्थैर्यकृज्जयति चाशु विकारान् ।
वातपित्तजनितानतिवीर्यान्
व्यापिनोऽपि विविधैरुपयोगैः ॥ ४१ ॥"

---

## अष्टाविंशोऽध्यायः ।

अथाऽतो भगन्दरप्रतिषेधं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"हस्त्यश्वपृष्ठगमनकठिनोत्कटकासनैः ।
अर्शोनिदानाभिहितैरपरैश्च निषेवितैः ॥ १ ॥

---

१ 'अगरु' इति पाठः, २ 'सक्षीरशुष्कैः' इति पाठः.

अनिष्टादृष्टपाकेन सद्यो वा साधुगर्हणैः ।
प्रायेण पिटिकापूर्वो योऽङ्गुले द्व्यङ्गुलेऽपि वा ॥ २ ॥
पायोर्व्रणोऽन्तर्बाह्यो वा दुष्टासृङ्मांसगो भवेत् ।
बस्तिमूत्राशयाभ्याशगतत्वात्स्यन्दनात्मकः ॥ ३ ॥
भगन्दरः स

सर्वश्च दारयत्यक्रियावतः ।
भगबस्तिगुदांस्तेषु दीर्यमाणेषु भूरिभिः ॥ ४ ॥
वातमूत्रशकृच्छुक्रं खैः सूक्ष्मैर्वमति क्रमात् ।
दोषैः पृथग्युतैः सर्वैरागन्तुः सोऽष्टमः स्मृतः ॥ ५ ॥
अपक्वं पिटिकामाहुः पाकप्राप्तं भगन्दरम् ।
गूढमूलां ससंरम्भां रुगाढ्यां रूढकोपिनीम् ॥ ६ ॥
भगन्दरकरीं विद्यात् पिटिकां न त्वतोऽन्यथा ।
तत्र श्यावारुणा तोदभेदस्फुरणरुक्करी ॥ ७ ॥
पिटिका मारुतात्

पित्तादुष्ट्रग्रीवावदुच्छ्रिता ।
रागिणी तनुरूष्माढ्या ज्वरधूमायनान्विता ॥ ८ ॥
स्थिरा स्निग्धा महामूला पाण्डुः कण्डूमती कफात् ।
श्यावा ताम्रा सदाहोषा घोररुग् वातपित्तजा ॥ ९ ॥
पाण्डुरा किंचिदाश्यावा कृच्छ्रपाका कफानिलात् ।
पादाङ्गुष्ठसमा सर्वैर्दोषैर्नानाविधव्यथा ॥ १० ॥
शूलारोचकतृड्दाहज्वरच्छर्दिरुपद्रुता ।

व्रणतां यान्ति ताः पक्वाः प्रमादात्

तत्र वातजा ॥ ११ ॥

दीर्यतेऽणुमुखैश्छिद्रैः शतपोनकवत् क्रमात् ।
अच्छं स्रवद्भिरास्रावमजस्रं फेनसंयुतम् ॥ १२ ॥
शतपोनकसंज्ञोऽयम्

उष्ट्रग्रीवस्तु पित्तजः ।

बहुपिच्छापरिस्रावी परिस्रावी कफोद्भवः ॥ १३ ॥
वातपित्तात्परिक्षेपी परिक्षिप्य गुदं गतिः ।
जायते परितस्तत्र प्राकारपरिखेव च ॥ १४ ॥
ऋजुर्वातकफादृज्व्या गुदो गत्या तु दीर्यते ।
कफपित्ते तु पूर्वोत्थं दुर्नामाश्रित्य कुप्यतः ॥ १५ ॥
अर्शोमूले ततः शोफः कण्डूदाहादिमान् भवेत् ।
स शीघ्रं पक्वभिन्नोऽस्य क्लेदयन्मूलमर्शसः ॥ १६ ॥
स्रवत्यजस्रं गतिभिरयमर्शो भगन्दरः ।
सर्वजः शम्बुकावर्तः शम्बुकावर्तसन्निभः ॥ १७ ॥
गतयो दारयन्त्यस्मिन् रुग्वेगैर्दारुणैर्गुदम् ।
अस्थिलेशोऽभ्यवहृतो मांसगृध्ना यदा गुदम् ॥ १८ ॥
क्षणोति[1] तिर्यङ्निर्गच्छन्नुन्मार्गं क्षततो गतिः ।
स्यात्ततः पूयदीर्णायां मांसकोथेन तत्र च ॥ १९ ॥
जायन्ते क्रमयस्तस्य खादन्तः परितो गुदम् ।
विदारयन्ति न[2] चिरादुन्मार्गी क्षतजश्च सः ॥ २० ॥

---

१ 'क्षिणोति' इति पाठः. २ 'च चि' इति पाठः.

तेषु रुग्दाहकण्ड्वादीन् विद्याद् व्रणनिषेधतः ।
यद्कृच्छ्रसाधनास्तेषां, निचयक्षतजौ त्यजेत् ॥ २१ ॥
प्रवाहिणीं[1] वलीं प्राप्तं सेवनीं वा समाश्रितम् ।
अथाऽस्य पिटिकामेव तथा यत्नादुपाचरेत् ॥ २२ ॥
शुद्ध्यसृक्स्रुतिसेकाद्यैर्यथा[2] पाकं न गच्छति ।
पाके पुनरुपस्निग्धं स्वेदितं चावगाहतः ॥ २३ ॥
यन्त्रयित्वार्शसमिव पश्येत्सम्यग्भगन्दरम् ।
अवाचीनं पराचीनमन्तर्मुखबहिर्मुखम् ॥ २४ ॥
अथान्तर्मुखमेषित्वा सम्यक् शस्त्रेण पाटयेत् ।
बहिर्मुखं च निःशेषं ततः क्षारेण साधयेत् ॥ २५ ॥
अग्निना वा भिषक् साधु क्षारेणैवोष्ट्रकन्धरम् ।
नाडीरेकान्तराः कृत्वा पाटयेच्छतपोनकम् ॥ २६ ॥
तासु रूढासु शेषाश्च मृत्युर्दीर्णे गुदेऽन्यथा ।
परिक्षेपिणि चाप्येवं नाड्यन्तैः क्षारसूत्रकैः ॥ २७ ॥
अर्शोभगन्दरे पूर्वमर्शांसि प्रतिसाधयेत् ।
त्यक्त्वोपचर्यः क्षतजः शल्यं शल्यवतस्ततः ॥ २८ ॥
आहरेच्च तथा दद्यात् कृमिघ्नं लेपभोजनम् ।
पिण्डनाड्यादयः स्वेदाः सुस्निग्धा रुजि पूजिताः ॥ २९ ॥
सर्वत्र च बहुच्छिद्रे छेदानालोच्य योजयेत् ।
गोतीर्थसर्वतोभद्रदललाङ्गललाङ्गलान् ॥ ३० ॥

---

१ 'हिर्नीं व' इति पाठः. २ 'शुध्मासृक्' इति पाठः.

पार्श्वे गतेन शस्त्रेण छेदो गोतीर्थको मतः ।
सर्वतः सर्वतोभद्रः पार्श्वच्छेदोऽर्धलाङ्गलः ॥ ३१ ॥
पार्श्वद्वये लाङ्गलकः

समस्तांश्चाग्निना दहेत् ।
आस्रावमार्गान्निःशेषान्नैवं विकुरुते पुनः ॥ ३२ ॥
यतेत कोष्ठशुद्धौ च भिषक् तस्यान्तरान्तरा ।
लेपो व्रणे बिडालास्थित्रिफलारसकल्कितम् ॥ ३३ ॥

ज्योतिष्मतीमलयुलाङ्गलिशेलुपाठा-
कुम्भाग्निसर्जकरवीरवचासुधार्कैः ।
अभ्यञ्जनाय विपचेत भगन्दराणां
तैलं वदन्ति परमं हितमेतदेषाम् ॥ ३४ ॥
मधुकरोध्रकणात्रुटिरेणुका-
द्विरजनीफलिनीपटुसारिवाः ।
कमलकेसरपद्मकधातकी-
मदनसर्जरसामयरोध्रकाः ॥ ३५ ॥

सबीजपूरच्छदनैरेभिस्तैलं विपाचितम् ।
भगन्दरापचीकुष्ठमधुमेहव्रणापहम् ॥ ३६ ॥
मधुतैलयुता विडङ्गसारत्रिफलामागधिकाकणाश्च लीढाः ।
कृमिकुष्ठभगन्दरप्रमेहक्षतनाडीव्रणरोपणा[1] भवन्ति ॥ ३७ ॥

अमृतात्रुटिवेल्लवत्सकं
कलिपथ्यामलकानि गुग्गुलुः ।

१ 'ण रोहणा' इति पाठः ।

क्रमवृद्धमिदं मधुद्रुतं
　　पिटिकास्थौल्यभगन्दरान् जयेत् ॥ ३८ ॥
मागधिकाग्निकलिङ्गविडङ्ग-
　　[1]बिल्वघृतैः सवरापलषट्कैः ।
गुग्गुलुना सदृशेन समेतैः
　　क्षौद्रयुतैः सकलामयनाशः ॥ ३९ ॥
गुग्गुलु पञ्चपलं पलिकांशा
　　मागधिका त्रिफला च पृथक् स्यात् ।
त्वक्त्रुटिकर्षयुतं मधुलीढं
　　कुष्ठभगन्दरगुल्मगतिघ्नम् ॥ ४० ॥
शृङ्गवेररजोयुक्तं तदेव च सुभावितम् ।
क्वाथेन दशमूलस्य विशेषाद्वातरोगजित् ॥ ४१ ॥
उत्तमाखदिरसारजं रजः
　　शीलयन्नसनवारिभावितम् ।
हन्ति तुल्यमहिषाख्यमाक्षिकं
　　कुष्ठमेहपिटिकाभगन्दरान् ॥ ४२ ॥
भगन्दरेष्वेष विशेष उक्तः
　　शेषाणि तु व्यञ्जनसाधनानि ।
व्रणाधिकारात्परिशीलनाच्च
　　सम्यग्विदित्वौषधिकं विदध्यात् ॥ ४३ ॥

---

१ 'बिल्वघृतैः' इति पाठः; बिल्वं-पलं (४ तोलका इत्यर्थः.)

अश्वपृष्ठगमनं चलरोधं
मद्यमैथुनमजीर्णमसात्म्यम् ।
साहसानि विविधानि च रूढे
वत्सरं परिहरेदधिकं वा ॥ ४४ ॥"

---

## एकोनत्रिंशोऽध्यायः ।

अथातो ग्रन्थ्यर्बुदश्लीपदापचीनाडीविज्ञानं
व्याख्यास्यामः ।

इति ह स्माहुरात्रेयादयो महर्षयः ।

[अथ ग्रन्थिरोगविज्ञानम् ।]

"कफप्रधानाः कुर्वन्ति मेदोमांसास्रगा मलाः ।
वृत्तोन्नतं यं श्वयथुं स ग्रन्थिर्ग्रथनात्स्मृतः ॥ १ ॥
ते—

तत्र वातादायामतोदभेदान्वितोऽसितः ॥ २ ॥
स्थानात्स्थानान्तरगतिरकस्माद्धानिवृद्धिमान् ।
मृदुर्बस्तिरिवानद्धो विभिन्नोऽच्छं स्रवत्यसृक् ॥ ३ ॥
पित्तात्सदाहः पीताभो रक्तो वा पच्यते द्रुतम् ।
भिन्नोऽस्रमुष्णं स्रवति
श्लेष्मणा नीरुजो घनः ॥ ४ ॥
शीतः सवर्णः कण्डूमान् पक्वः पूयं स्रवेद्घनम् ।
दोषैर्दुष्टेऽसृजि ग्रन्थिर्भवेन्मूर्च्छत्सु जन्तुषु ॥ ५ ॥

सिरा मांसं च संश्रित्य सस्रापः पित्तलक्षणः ।
मांसलैर्दूषितं मांसमाहारैर्ग्रन्थिमाहरेत्[1] ॥ ६ ॥
स्निग्धं महान्तं कठिनं सिरानद्धं कफाकृतिम् ।
प्रवृद्धं मेदुरैर्मेदोनीतं मांसेऽथवा त्वचि ॥ ७ ॥
वायुना कुरुते ग्रन्थिं भृशं स्निग्धं मृदुं चलम् ।
श्लेष्मतुल्याकृतिं देहक्षयवृद्धिक्षयोदयम् ॥ ८ ॥
स विभिन्नो घनं मेदस्ताम्राऽसितसितं स्रवेत् ।
अस्थि भङ्गाभिघाताभ्यामुन्नतावनतं तु यत् ॥ ९ ॥
सोऽस्थिग्रन्थिः

पदातेस्तु सहसाम्भोऽवगाहनात् ।
व्यायामाद्वा प्रतान्तस्य सिराजालं सशोणितम् ॥ १० ॥
वायुः सम्पीड्य सङ्कोच्य वक्रीकृत्य विशोष्य च ।
निःस्फुरं नीरुजं ग्रन्थिं कुरुते, स सिराह्वयः ॥ ११ ॥
अरूढे रूढमात्रे वा व्रणे सर्वरसाशिनः ।
सार्द्रे वा बन्धरहिते गात्रेऽश्माभिहतेऽथवा ॥ १२ ॥
वातास्रमस्रुतं दुष्टं संशोष्य ग्रथितं व्रणम् ।
कुर्यात्सदाहः कण्डूमान्, व्रणग्रन्थिरयं स्मृतः ॥ १३ ॥
साध्या दोषास्रमेदोजा न तु स्थूलखराश्चलाः ।
मर्मकण्ठोदरस्थाश्च

[ अथार्बुदरोगविज्ञानम् । ]

महत्तु ग्रन्थितोऽर्बुदम् ॥ १४ ॥

---

१ 'मावहेत्' इति पाठः.

तल्लक्षणं च मेदोन्तैः षोढा दोषादिभिस्तु तत् ।
प्रायो मेदःकफाढ्यत्वात्स्थिरत्वाच्च न पच्यते ॥ १५ ॥
सिरास्थं शोणितं दोषः सङ्कोच्यान्तः प्रपीड्य च ।
पाचयेत तदानद्धं सास्रावं मांसपिण्डितम् ॥ १६ ॥
मांसांकुरैश्चितं याति वृद्धिं चाशु स्रवेत्ततः ।
अजस्रं दुष्टरुधिरं भूरि तच्छोणितार्बुदम् ॥ १७ ॥
तेष्वसृङ्मांसजे वर्ज्ये चत्वार्यन्यानि साधयेत् ।

[ अथ श्लीपदरोगविज्ञानम् । ]

प्रस्थिता वङ्क्षणोर्वादिमधःकायं कफोल्बणाः ॥ १८ ॥
दोषा मांसासृगाः पादौ कालेनाश्रित्य कुर्वते ।
शनैः शनैर्घनं शोफं श्लीपदं तत्प्रचक्षते ॥ १९ ॥
परिपोटयुतं कृष्णमनिमित्तरुजं खरम् ।
रूक्षं च वातात्

पित्तात्तु पीतं दाहज्वरान्वितम् ॥ २० ॥

कफाद्गुरु स्निग्धमरुक्चितं मांसाङ्कुरैर्बृहत् ।
तत्त्यजेद्वत्सरातीतं सुमहत्सुपरिस्रुति ॥ २१ ॥
पाणिनासौष्ठकर्णेषु वदन्त्येके तु पादवत् ।
श्लीपदं जायते तच्च देशेऽनूपे भृशं नृणाम् ॥ २२ ॥

[ अथापचीरोगविज्ञानम् । ]

मेदःस्थाः कण्ठमन्याक्षकक्षावङ्क्षणगा मलाः ।

१ 'दः भृशम्' इति पाठः.

सवर्णान् कठिनान् स्निग्धान् वार्ताकामलकाकृतीन् ॥ २३ ॥
अवगाढान् बहून् गण्डांश्चिरपाकांश्च कुर्वते ।
पच्यन्तेऽल्परुजस्त्वन्ये स्रवन्त्यन्येऽतिकण्डुराः ॥ २४ ॥
नश्यन्त्यन्ये भवन्त्यन्ये दीर्घकालानुबन्धिनः ।
गण्डमालापची चेयं दूर्वेव क्षयवृद्धिभाक् ॥ २५ ॥
तां त्यजेत्सज्वरच्छर्दि[1]कासरुक्श्वासपीनसाम् ।

[ अथ नाडीरोगविज्ञानम् । ]

अभेदात्पक्वशोफस्य व्रणे चापथ्यसेविनः ॥ २६ ॥
अनुप्रविश्य मांसादीन् दूरं पूयोऽभिधावति ।
गतिः सा दूरगमनान्नाडी नाडीव संस्रुतेः ॥ २७ ॥
नाड्येकानृजुरन्येषां सैवानेकगतिर्गतिः ।
सा दोषैः पृथगेकस्थैः शल्यहेतुश्च पञ्चमी ॥ २८ ॥
वातात्सरुक्सूक्ष्ममुखी विवर्णा फेनिलोद्वमा ।
स्रवत्यभ्यधिकं रात्रौ

पित्तात्तृड्ज्वरदाहकृत् ॥ २९ ॥
पीतोष्णपूतिपूयास्रुद्दिवा चाऽतिनिषिञ्चति ।
घनपिच्छिलसंस्रावा कण्डूला कठिना कफात् ।
निशि चाऽभ्यधिकक्लेदा

सर्वैः सर्वाकृतिं त्यजेत् ॥ ३० ॥

---

१ 'पार्श्वरुक्कासपीनसाम्' इति पाठः.

अन्तःस्थितं शल्यमनाहृतं तु
करोति नाडीं, वहते च साऽस्य ।
फेनानुविद्धं तनुमल्पमुष्णं
सास्रं च पूयं सरुजं च नित्यम् ॥ ३१ ॥”

---

## त्रिंशोऽध्यायः ।

अथाऽतो ग्रन्थ्यर्बुदश्लीपदापचीनाडीप्रतिषेधं व्याख्यास्यामः ।

इति ह स्माहुरात्रेयादयो महर्षयः ।

[ अथ ग्रन्थिरोगप्रतिषेधः । ]

“ग्रन्थिष्वामेषु कर्तव्या यथास्वं शोफवत् क्रिया ।
बृहतीचित्रकव्याघ्रीकणासिद्धेन सर्पिषा ॥ १ ॥
स्नेहयेच्छुद्धिकामं च तीक्ष्णैः शुद्धस्य लेपनम् ।
संस्वेद्य बहुशो ग्रन्थिं विमृद्नीयात् पुनः पुनः ॥ २ ॥
एष वाते विशेषेण क्रमः, पित्तास्रजे पुनः ।
जलौकसो हिमं सर्वम्
कफजे वातिको विधिः ॥ ३ ॥
तथाप्यपक्वं छित्वैनं स्थिते रक्तेऽग्निना दहेत् ।
साध्वशेषं सशेषो हि पुनराप्यायते ध्रुवम् ॥ ४ ॥
मांसव्रणोद्भवौ ग्रन्थी पाटयेदेवमेव च ।
कार्यं मेदोभवेऽप्येतत्तप्तैः फालादिभिश्च तम् ॥ ५ ॥

प्रमृद्यात्तिलदिग्धेन छन्नं द्विगुणवाससा ।
शस्त्रेण पाटयित्वा वा दहेन्मेदसि सूद्धृते ॥ ६ ॥
सिराग्रन्थौ नवे पेयं तैलं साहचरं तथा ।
उपनाहोऽनिलहरैर्बस्तिकर्म सिराव्यधः ॥ ७ ॥
अर्बुदे ग्रन्थिवत् कुर्याद् यथास्वं सुतरां हितम् ।

[ अथ श्लीपदरोगप्रतिषेधः । ]

श्लीपदेऽनिलजे विध्येत् स्निग्धस्विन्नोपनाहिते ॥ ८ ॥
सिरामुपरि गुल्फस्य द्व्यङ्गुले, पाययेच्च तम् ।
मासमेरण्डजं तैलं गोमूत्रेण समन्वितम् ॥ ९ ॥
जीर्णे जीर्णान्नमश्नीयाच्छुण्ठीशृतपयोन्वितम् ।
त्रैवृतं वा पिबेदेवमशान्तावग्निना दहेत् ॥ १० ॥
गुल्फस्याधः सिरामोक्षः
पैत्ते सर्वं च पित्तजित् ।
सिरामङ्गुष्ठके विद्ध्वा कफजे शीलयेद्यवान् ॥ ११ ॥
सक्षौद्राणि कषायाणि वर्धमानास्तथाभयाः ।
लिम्पेत्सर्षपवार्ताकीमूलाभ्यां धान्ययाथवा ॥ १२ ॥

[ अथापचीरोगप्रतिषेधः । ]

ऊर्ध्वाधः शोधनं पेयमपच्यां साधितं घृतम् ।
दन्तीद्रवन्तीत्रिवृताजालिनीदेवदालिभिः ॥ १३ ॥
शीलयेत्कफमेदोघ्नं धूमगण्डूषनावनम् ।
सिरयाऽपहरेद्रक्तं पिबेन्मूत्रेण तार्क्ष्यजम् ॥ १४ ॥

ग्रन्थीनपक्वानाकिम्पेल्लाकुलीपटुनागरैः ।
स्विन्नान् लवणपोटल्या कठिनाननु मर्दयेत् ॥ १५ ॥
शमीमूलकशिग्रूणां बीजैः सयवसर्षपैः ।
लेपः पिष्टोऽम्लतक्रेण ग्रन्थिगण्डविलापनः ॥ १६ ॥
पाकोन्मुखान् स्रुतास्रस्य पित्तश्लेष्महरैर्जयेत् ।
अपक्वानेव चोद्धृत्य क्षाराग्निभ्यामुपाचरेत् ॥ १७ ॥
"[1]क्षुण्णानि निम्बपत्राणि क्लिन्नैर्भल्लातकैः सह ।
शरावसम्पुटे दग्ध्वा सार्धं सिद्धार्थकैः समैः ॥ १ ॥
एतच्छागाम्बुना पिष्टं गण्डमालाप्रलेपनम् ।"
काकादनीलाङ्गलिकानलिकोत्तुण्डिकीफलैः ।
जीमूतबीजकर्कोटीविशालाकृतवेधनैः ॥ १८ ॥
पाठान्वितैः पलांशैर्विषकर्षयुतैः पचेत् ।
प्रस्थं करञ्जतैलस्य निर्गुण्डीस्वरसाढके ॥ १९ ॥
अनेन माला गण्डानां चिरजा पूयवाहिनी ।
सिध्यत्यसाध्यकल्पाऽपि पानाभ्यञ्जननावनैः ॥ २० ॥
तैलं लाङ्गलिकाकन्दकल्कपादे चतुर्गुणे ।
निर्गुण्डीस्वरसे पक्वं नस्याद्यैरपचीप्रणुत् ॥ २१ ॥
भद्रश्रीदारुमरिचद्विहरिद्रात्रिवृद्घनैः ।
मनःशिलालनलदविशालाकरवीरकैः ॥ २२ ॥
गोमूत्रपिष्टैः पलिकैर्विषस्यार्धपलेन च ।

---

१ सार्धश्लोकोऽयं क्वचित्पठ्यते.

ब्राह्मीरसार्कजक्षीरगोशकृद्रससंयुतम् ॥ २३ ॥
प्रस्थं सर्षपतैलस्य सिद्धमाशु व्यपोहति ।
पानाद्यैः शीलितं कुष्ठं दुष्टनाडीव्रणापचीः ॥ २४ ॥
वचाहरीतकीलाक्षाकटुरोहिणिचन्दनैः ।
तैलं प्रसाधितं पीतं समूलामपचीं जयेत् ॥ २५ ॥
शरपुङ्खोद्भवं मूलं पिष्टं तन्दुलवारिणा ।
नस्याल्लेपाच्च दुष्टारुरपचीविषजन्तुजित् ॥ २६ ॥
मूलैरुत्तमवारुण्याः[1] पीलुपर्ण्याः सहाचरात् ।
सरोध्राभययष्ट्याह्व[2]शताह्वाद्वीपिदारुभिः ॥ २७ ॥
तैलं क्षीरसमं सिद्धं नस्येऽभ्यङ्गे च पूजितम् ।
गवेऽप्यजाश्वखुरा दग्धा कटुतैलेन लेपनम् ॥ २८ ॥
ऐङ्गुदेन तु कृष्णाहिर्वायसो वा स्वयं मृतः ।
इत्यशान्तौ गदस्थान्यपार्श्वजङ्घासमाश्रितम् ॥ २९ ॥
बस्तेरूर्ध्वमधस्ताद्वा मेदो हृत्वाग्निना दहेत् ।
स्थितस्योर्ध्वं पदं मित्वा तन्मानेन च पार्ष्णितः ।
तत ऊर्ध्वं हरेद् ग्रन्थीनित्याह भगवान्निमिः ॥ ३० ॥

पार्ष्णिं प्रति द्वादश चाङ्गुलानि
　मुक्त्वेन्द्रबस्तिं च गदान्यपार्श्वे ।
विदार्य मत्स्याण्डनिभानि मध्या-
　ज्जालानि कर्षेदिति सुश्रुतोक्तिः ॥ ३१ ॥

---

१ 'मकारुण्याः' इत्यरुणः. २ 'धाह्वयष्ट्या' इति पाठः.

आगुल्फकर्णात्सुमितस्य जन्तो-
स्तस्याष्टभागं खुडकाद्विभज्य ।
प्राणार्जवेऽधः सुरराजबस्ते-
र्भित्त्वाक्षमात्रं त्वपरे वदन्ति ॥ ३२ ॥

[ अथ नाडीरोगप्रतिषेधः । ]

उपनाह्यानिलान्नाडीं पाटितां साधु लेपयेत् ।
प्रत्यक्पुष्पीफलयुतैस्तैलैः पिष्टैः ससैन्धवैः ॥ ३३
पैत्तीं तु तिलमञ्जिष्ठानागदन्तीशिलाह्वयैः ।
श्लैष्मिकीं तिलसौराष्ट्रीनिकुम्भारिष्टसैन्धवैः ॥ ३४ ॥
शल्यजां तिलमध्वाज्यैर्लेपयेच्छिन्नशोधिताम् ।
अशस्त्रकृत्यामेषिण्या भित्त्वान्ते सम्यगेषिताम् ॥ ३५ ॥
क्षारपीतेन सूत्रेण बहुशो दारयेद् गतिम् ।
व्रणेषु दुष्टसूक्ष्मास्यगम्भीरादिषु साधनम् ॥ ३६ ॥
या वर्त्यो यानि तैलानि तन्नाडीष्वपि शस्यते ।
पिष्टं चञ्चुफलं लेपान्नाडीव्रणहरं परम् ॥ ३७ ॥

घोण्टाफलत्वग्लवणं सलाक्षं
बुकस्य पत्रं वनितापयश्च ।
स्नुगर्कदुग्धान्वित एष कल्को
वर्तीकृतो हन्त्यचिरेण नाडीम् ॥ ३८ ॥

सामुद्रसौवर्चलसिन्धुजन्म-
सुपक्वघोण्टाफलवेश्मधूमाः ।

आम्रातगायत्रिजपल्लवाश्च
　कटङ्कटेर्यावथ चेतकी च ॥ ३९ ॥
कल्केऽभ्यङ्गे चूर्णे
　वर्त्यां चैतेषु सेव्यमानेषु ।
अगतिरिव नश्यति गति-
　श्चपला चपलेषु भूतिरिव ॥ ४० ॥"

---

## एकत्रिंशोऽध्यायः ।

अथाऽतः क्षुद्ररोगविज्ञानं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥
"स्निग्धा सवर्णा ग्रथिता नीरुजा मुद्गसंनिभा ।
पिटिका कफवाताभ्यां बालानामजगल्लिका ॥ १ ॥
यवप्रख्या यवप्रख्या ताभ्यां मांसाश्रिता घना ।
अवक्त्राश्चालजीवृत्तास्तोकपूया घनोन्नताः ॥ २ ॥
ग्रन्थयः पञ्च वा षड्वा कच्छपी कच्छपोन्नता ।
कर्णस्योर्ध्वं समन्ताद्वा पिटिका कठिनोग्ररुक् ॥ ३ ॥
शालूकाभा पनसिका
　　　　शोफस्त्वल्परुजः स्थिरः ।
हनुसन्धिसमुद्भूतस्ताभ्यां पाषाणगर्दभः ॥ ४ ॥
शाल्मलीकण्टकाकाराः पिटिकाः सरुजो घनाः ।
मेदोगर्भा मुखे यूनां ताभ्यां च मुखदूषिकाः ॥ ५ ॥

---

१ 'सम्मिता' इति पाठः.

ते पद्मकण्टका ज्ञेया यैः पद्ममिव कण्टकैः ।
चीयते नीरुजैः श्वेतैः शरीरं कफवातजैः ॥ ६ ॥
पित्तेन पिटिका वृत्ता पक्वोदुम्बरसन्निभा ।
महादाहज्वरकरी विवृता विवृतानना ॥ ७ ॥
गात्रेष्वन्तश्च वक्त्रस्य दाहज्वररुजान्विताः ।
मसूरमात्रास्तद्वर्णास्तत्संज्ञाः पिटिका घनाः ॥ ८ ॥
ततः कष्टतराः स्फोटा विस्फोटाख्या महारुजाः ।
या पद्मकर्णिकाकारा पिटिका पिटिकान्विता[1] ॥ ९ ॥
सा विद्धा वातपित्ताभ्याम्

ताभ्यामेव च गर्दभी ।
मण्डला विपुलोत्सन्ना सरागपिटिकाचिता ॥ १० ॥
कक्षेति कक्षासन्नेषु प्रायो देशेषु साऽनिलात् ।
पित्ताद्भवन्ति पिटिकाः सूक्ष्मा लाजोपमा घनाः ॥ ११ ॥
तादृशी महती त्वेका गन्धनामेति कीर्तिता ।
घर्मस्वेदपरीतेऽङ्गे पिटिकाः सरुजो घनाः ॥ १२ ॥
राजिकावर्णसंस्थानप्रमाणा राजिकाह्वयाः ।
दोषैः पित्तोल्बणैर्मन्दैर्विसर्पति विसर्पवत् ॥ १३ ॥
शोफोऽपाकस्तनुस्ताम्रो ज्वरकृज्जालगर्दभः ।
मलैः पित्तोल्बणैः स्फोटा ज्वरिणो मांसदारणाः ॥ १४ ॥
कक्षाभागेषु जायन्ते येऽग्न्याभाः साऽग्निरोहिणी ।
पञ्चाहात्सप्तरात्राद्वा पक्षाद्वा हन्ति जीवितम् ॥ १५ ॥

---

१ 'काचिता' इत्यरुणः.

त्रिलिङ्गा पिटिका वृत्ता जत्रूर्ध्वमिरिवेल्लिका ।
विदारीकन्दकठिना विदारी कक्षवङ्क्षणे ॥ १६ ॥
मेदोऽनिलकफैर्ग्रन्थिः स्नायुमांससिराश्रयैः ।
भिन्नो वसाज्यमध्वाभं स्रवेत्तत्रोल्बणोऽनिलः ॥ १७ ॥
मांसं विशोष्य ग्रथितां शर्करामुपपादयेत् ।
दुर्गन्धं रुधिरं क्लिन्नं नानावर्णं ततो मलाः ॥ १८ ॥
तां स्रावयन्ति निचितां विद्यात्तच्छर्करार्बुदम् ।
पाणिपादतले सन्धौ जत्रूर्ध्वं वोपचीयते ॥ १९ ॥
वल्मीकवच्छनैर्ग्रन्थिस्तद्वद्बह्वणुभिर्मुखैः ।
सदाहकण्डूक्लेदाढ्यो वल्मीकोऽसौ समस्तजः ॥ २० ॥
शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः ।
ग्रन्थिः कीलवदुत्सन्नो जायते कदरं तु तत् ॥ २१ ॥
वेगसन्धारणाद्वायुरपानोऽपानसंश्रयम् ।
अणूकरोति बाह्यान्तर्मार्गमस्य, ततः शकृत् ॥ २२ ॥
कृच्छ्रान्निर्गच्छति व्याधिरयं रुद्धगुदो मतः ।
कुर्यात्पित्तानिलं पाकं नखमांसे सरुग्ज्वरम् ॥ २३ ॥
चिप्पमक्षतरोगं च विद्यादुपनखं च तम् ॥
कृष्णोऽभिघाताद्रूक्षश्च खरश्च कुनखो नखः ॥ २४ ॥
दुष्टकर्दमसंस्पर्शात्कण्डूक्लेदान्वितान्तराः ।
अङ्गुल्योऽलसमित्याहुः
तिलाभांस्तिलकालकान् ॥ २५ ॥

---

१ 'रुग्दाह' इति पाठः. २ 'बद्धगुदो' इति पाठः.

कृष्णानवेदनांस्त्वक्स्थान्
मषांस्तानेव चोन्नतान् ।
मषेभ्यस्तून्नततरांश्चर्मकीलान् सितासितान् ॥ २६ ॥
तथाविधो जतुमणिः सहजो लोहितस्तु सः ।
कृष्णं सितं वा सहजं मण्डलं लाञ्छनं समम् ॥ २७ ॥
शोकक्रोधादिकुपिताद्वातपित्तान्मुखे तनु ।
श्यामलं मण्डलं व्यङ्गं वक्त्रादन्यत्र नीलिका ॥ २८ ॥
परुषं परुषस्पर्शं व्यङ्गं श्यावं च मारुतात् ।
पित्तात्ताम्रान्तमानीलं श्वेतान्तं कण्डुमत्कफात् ॥ २९ ॥
रक्ताद्रक्तान्तमाताम्रं सोषं चिमचिमायते ।
वायुनोदीरितः श्लेष्मा त्वचं प्राप्य विशुष्यति ॥ ३० ॥
ततस्त्वग्जायते पाण्डुः क्रमेण च विचेतना ।
अल्पकण्डूरविक्लेदा सा प्रसुप्तिः प्रसुप्तितः ॥ ३१ ॥
असम्यग्वमनोदीर्णपित्तश्लेष्माम्ननिग्रहैः ।
मण्डलान्यतिकण्डूनि रागवन्ति बहूनि च ॥ ३२ ॥
उत्कोठः सोऽनुबद्धस्तु कोठ इत्यभिधीयते ।
प्रोक्ताः षट्त्रिंशदित्येते क्षुद्ररोगा विभागशः ॥ ३३ ॥"

---

## द्वात्रिंशोऽध्यायः ।

अथातः क्षुद्ररोगप्रतिषेधं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।

---

१ 'माषा' इति पाठः. २ 'शोषं' इति पाठः.

"विस्रावयेज्जलौकोभिरपक्वामजगल्लिकाम् ।
स्वेदयित्वा यवप्रख्यां विलयाय प्रलेपयेत् ॥ १ ॥
दारुकुष्ठमनोह्वालैः
इत्यापाषाणगर्दभात् ।
विधिस्तांश्चाचरेत्पक्वान् व्रणवत्साजगल्लिकान् ॥ २ ॥
रोध्रकुस्तुम्बरुवचाप्रलेपो मुखदूषिके ।
वटपल्लवयुक्ता वा नारीकेलोत्थशुक्तयः ॥ ३ ॥
अशान्तौ वमनं नस्यं ललाटे च सिराव्यधः ।
निम्बाम्बुवान्तो निम्बाम्बुसाधितं पद्मकण्टके ॥ ४ ॥
पिबेत्क्षौद्रान्वितं सर्पिर्निम्बारग्वधलेपनम् ।
विवृतादींस्तु जालान्तांश्चिकित्सेदिरिवेल्लिकाम् ।
पित्तवीसर्पवत्तद्वत् प्रत्याख्यायाग्निरोहिणीम् ॥ ५ ॥
विलङ्घनं रक्तविमोक्षणं च
विरूक्षणं कायविशोधनं च ।
धात्रीप्रयोगान् शिशिरप्रदेहान्
कुर्यात्सदा जालकगर्दभस्य ॥ ६ ॥
विदारिकां हृते रक्ते श्लेष्मग्रन्थिवदाचरेत् ।
मेदोर्बुदक्रियां कुर्यात्सुतरां शर्करार्बुदे ॥ ७ ॥
प्रवृद्धं सुबहुच्छिद्रं सशोफं मर्मणि स्थितम् ।
वल्मीकं हस्तपादे च वर्जयेत्
इतरत्पुनः ॥ ८ ॥

---

१ 'नारिकेलोत्थ' इति पाठः. २ 'वेल्लिकान्' इति पाठः.

शुद्धस्यास्रे हृते लिम्पेत् सपद्मारग्वधामृतैः[1] ।
श्यामाकुलत्थिकामूलदन्तीपल्लसक्तुभिः ॥ ९ ॥
पक्वं तु दुष्टमांसानि गतीः सर्वाश्च शोधयेत् ।
शस्त्रेण सम्यगनु च क्षारेण ज्वलनेन वा ॥ १० ॥
शस्त्रेणोत्कृत्य निःशेषं स्नेहेन कदरं दहेत् ।
निरुद्धमणिवत्कार्यं रुद्धपायोश्चिकित्सितम् ॥ ११ ॥
चिप्यं शुद्ध्या जितोष्माणं साधयेच्छस्त्रकर्मणा ।
दुष्टं कुनखमप्येवम्

चरणावलसे पुनः ॥ १२ ॥

धान्याम्लसिक्तौ कासीसपटोलीरोचनातिलैः ।
सनिम्बपत्रैरालिम्पेद्

दहेत्तु तिलकालकान् ॥ १३ ॥

मषांश्च सूर्यकान्तेन क्षारेण यदि वाऽग्निना ।
तद्वदुत्कृत्य शस्त्रेण चर्मकीलजतूमणी ॥ १४ ॥
लाञ्छनादित्रये कुर्याद्यथासन्नं सिराव्यधम् ।
लेपयेत्क्षीरपिष्टैश्च क्षीरिवृक्षत्वगङ्कुरैः ॥ १५ ॥
व्यङ्गेषु चार्जुनत्वग्वा मञ्जिष्ठा वा समाक्षिका ।
लेपः सनवनीता वा श्वेताश्वखुरजा मषी ॥ १६ ॥
रक्तचन्दनमञ्जिष्ठाकुष्ठरोध्रप्रियङ्गवः ।
वटाङ्कुरा मसूराश्च व्यङ्गघ्ना मुखकान्तिदाः ॥ १७ ॥
द्वे जीरके कृष्णतिलाः सर्षपाः पयसा सह ।

---

[1] 'रैवतामृतैः' इति पाठः.

पिष्टाः कुर्वन्ति वक्त्रेन्दुमपास्तव्यङ्गलाञ्छनम् ॥ १८ ॥
क्षीरपिष्टा घृतक्षौद्रयुक्ता वा भृष्टनिस्तुषाः ।
मसूराः क्षीरपिष्टा वा तीक्ष्णाः शाल्मलिकण्टकाः ॥ १९ ॥
सगुडः कोलमज्जा वा शशासृक्क्षौद्रकल्कितः ।
सप्ताहं मातुलुङ्गस्थं कुष्ठं वा मधुनान्वितम् ॥ २० ॥
पिष्टा वा छागपयसा सक्षौद्रा मौशली जटा ।
गोरस्थि मुशलीमूलयुक्तं वा साज्यमाक्षिकम् ॥ २१ ॥
जम्ब्वाम्रपल्लवा मस्तु हरिद्रे द्वे नवो गुडः ।
लेपः सवर्णकृत् पिष्टं स्वरसेन च तिन्दुकम् ॥ २२ ॥
उत्पलपत्रं तगरं प्रियङ्गुकालीयकं बदरमज्जा ।
इदमुद्वर्तनमास्यं करोति शतपत्रसङ्काशम् ॥ २३ ॥
एभिरेवौषधैः पिष्टैर्मुखाभ्यङ्गाय साधयेत् ।
यथादोषर्तुकान् स्नेहान् मधुककाथसंयुतैः ॥ २४ ॥
यवान् सर्जरसं रोध्रमुशीरं चन्दनं मधु ।
घृतं गुडं च गोमूत्रे पचेदादर्विलेपनात् ॥ २५ ॥
तदभ्यङ्गान्निहन्त्याशु नीलिकाव्यङ्गदूषिकान् ।
मुखं करोति पद्माभं पादौ पद्मदलोपमौ ॥ २६ ॥
कुङ्कुमोशीरकालीयलाक्षायष्ट्याह्वचन्दनम् ।
न्यग्रोधपादांस्तरुणान् पद्मकं पद्मकेसरम् ॥ २७ ॥
सनीलोत्पलमञ्जिष्ठं पालिकं सलिलाढके ।
पक्त्वा पादावशेषेण तेन पिष्टैश्च कार्षिकैः ॥ २८ ॥

लाक्षापत्तङ्गमञ्जिष्ठायष्टीमधुककुङ्कुमैः ।
अजाक्षीरद्विगुणितं तैलस्य कुडवं पचेत् ॥ २९ ॥
नीलिकापलितव्यङ्गवलीतिलकदूषिकान् ।
हन्ति तन्नस्यमभ्यस्तं मुखोपचयवर्णकृत् ॥ ३० ॥
मञ्जिष्ठाशबरोद्भवस्तुवरिकालाक्षाहरिद्राद्वयं
नेपालीहरितालकुङ्कुमगदागोरोचनागैरिकम् ।
पत्रं पाण्डु वटस्य चन्दनयुगं कालीयकं पारदं
पत्तङ्गं कनकत्वचं कमलजं बीजं तथा केसरम् ॥ ३१ ॥
सिक्थं तुत्थं पद्मकाद्यो वसाज्यं
मज्जा क्षीरं क्षीरिवृक्षाम्बु चाग्नौ ।
सिद्धं सिद्धं व्यङ्गनील्यादिनाशे
वक्त्रे छायामैन्दवीं चाशु धत्ते ॥ ३२ ॥
मार्कवस्वरसक्षीरैस्तोयानीष्टानि नावने ।
प्रसुप्तौ वातकुष्ठोक्तं कुर्याद्दाहं च वह्निना ॥
उत्कोठे कफपित्तोक्तं कोठे सर्वं च कौष्ठिकम् ॥ ३३ ॥"

---

## अथ त्रिंशोऽध्यायः ।

अथाऽतो गुह्यरोगविज्ञानं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"स्त्रीव्यवायनिवृत्तस्य सहसा भजतोऽथवा ।
दोषाध्युषितसङ्कीर्णमलिनाणुरजःपथाम् ॥ १ ॥

---

१ 'तोयपिष्टानि ना' इति पाठः.

अन्ययोनिमनिच्छन्तीमगम्यां नवसूतिकाम् ।
दूषितं स्पृशतस्तोयं रतान्तेष्वपि नैव वा ॥ २ ॥
विवर्धयिषया तीक्ष्णान् प्रलेपादीन् प्रयच्छतः ।
मुष्टिदन्तनखोत्पीडाविषवच्छूकपातनैः ॥ ३ ॥
वेगनिग्रहदीर्घातिखरस्पर्शविघट्टनैः ।
दोषा दुष्टा गता गुह्यं त्रयोविंशतिमामयान् ॥ ४ ॥
जनयन्त्युपदंशादीन्

उपदंशोऽत्र पञ्चधा ।

पृथग्दोषैः सरुधिरैः समस्तैश्च

अत्र मारुतात् ॥ ५ ॥

मेढ्रशोफे रुजश्चित्राः स्तम्भस्त्वक्परिपोटनम् ।
पक्वोदुम्बरसङ्काशः पित्तेन श्वयथुर्घनः ॥ ६ ॥
श्लेष्मणा कठिनः स्निग्धः कण्डूमान् शीतलो गुरुः ।
शोणितेनासितस्फोटसम्भवोऽस्रस्रुतिर्ज्वरः ॥ ७ ॥
सर्वजे सर्वलिङ्गत्वं श्वयथुर्मुष्कयोरपि ।
तीव्रा रुगाशुपचनं दारणं कृमिसम्भवः ॥ ८ ॥
याप्यो रक्तोद्भवस्तेषां मृत्यवे सन्निपातजः ।
जायन्ते कुपितैर्दोषैर्गुह्यासृक्पिशिताश्रयैः ॥ ९ ॥
अन्तर्बहिर्वा मेढ्रस्य कण्डूरा मांसकीलकाः ।
पिच्छिलास्रस्रवा योनौ तद्वच्च छत्रसन्निभाः ॥ १० ॥
तेऽर्शांस्युपेक्षया घ्नन्ति मेढ्रपुंस्त्वभगार्तवम् ।

---

१ 'विषवच्छुकपातनैः' इति क्वचित्. २ 'श्रुर्ज्वरः' इति पाठः.

गुह्यस्य बहिरन्तर्वा पिटिकाः कफरक्तजाः ॥ ११ ॥
सर्षपामानसंस्थाना घनाः सर्षपिकाः स्मृताः ।
पिटिका बहवो दीर्घा दीर्यन्ते मध्यतश्च याः ॥ १२ ॥
सोऽवमन्थः कफासृग्भ्यां वेदनारोमहर्षवान् ।
कुम्भीका रक्तपित्तोत्था जाम्बवास्थिनिभाऽऽशुजा ॥ १३ ॥
अलजीं मेहवद्विद्याद्

उत्तमां रक्तपित्तजाम् ।

पिटिकां माषमुद्गाभाम्

पिटिका पिटिकाचिता ॥ १४ ॥

कर्णिका पुष्करस्येव ज्ञेया पुष्करिकेति सा ।
पाणिभ्यां भृशसंव्यूढे संव्यूढपिटिका भवेत् ॥ १५ ॥
मृदितं मृदितं वस्त्रसंरब्धं वातकोपतः ।
विषमा कठिना भुग्ना वायुनाऽष्ठीलिका स्मृता ॥ १६ ॥
विमर्दनादिदुष्टेन वायुना चर्म मेढ्रजम् ।
निवर्तते सरुग्दाहं क्वचित्पाकं च गच्छति ॥ १७ ॥
पिण्डितं ग्रथितं[१] चर्म तत्प्रलम्बमधोमणेः ।
निवृत्तसंज्ञं सकफं कण्डूकाठिन्यवत्तु तत् ॥ १८ ॥
दुरूढं स्फुटितं चर्म निर्दिष्टमवपाटिका ।
वातेन दूषितं चर्म मणौ सक्तं रुणद्धि चेत् ॥ १९ ॥
स्रोतोमूत्रं[२] ततोऽभ्येति मन्दधारमवेदनम् ।
मणेर्विकाशरोधश्च स निरुद्धमणिर्गदः ॥ २० ॥

---

१ 'ग्रन्थित' इति पाठः. २ 'स्रोतो मूत्रं' इति पाठः.

लिङ्गं शूकैरिवापूर्णं ग्रथिताख्यं कफोद्भवम् ।
शूकदूषितरक्तोत्था स्पर्शहानिस्तदाह्वया ॥ २१ ॥
छिद्रैरणुमुखैर्यत्तु मेहनं सर्वतश्चितम् ।
वातशोणितकोपेन तं विद्याच्छतपोनकम् ॥ २२ ॥
पित्तासृग्भ्यां त्वचः पाकस्त्वक्पाको ज्वरदाहवान् ।
मांसपाकः सर्वजः सर्ववेदनो मांसशातनः ॥ २३ ॥
सरागैरसितैः स्फोटैः पिटिकाभिश्च पीडितम् ।
मेहनं वेदनाश्चोग्रास्तं विद्यादसृगर्बुदम् ॥ २४ ॥
मांसार्बुदं प्रागुदितं विद्रधिश्च त्रिदोषजः ।
कृष्णानि भूत्वा मांसानि विशीर्यन्ते समन्ततः ॥ २५ ॥
पक्कानि सन्निपातेन तान् विद्यात्तिलकालकान् ।
मांसोत्थमर्बुदं पाकं विद्रधिं तिलकालकान् ॥ २६ ॥
चतुरो वर्जयेदेषां शेषान् शीघ्रमुपाचरेत् ।
विंशतिर्व्यापदो योनेर्जायन्ते दुष्टभोजनात् ॥ २७ ॥
विषमस्थाङ्गशयनभृशमैथुनसेवनैः ।
दुष्टार्तवादपद्रव्यैर्बीजदोषेण दैवतः ॥ २८ ॥
योनौ क्रुद्धोऽनिलः कुर्याद्रुक्तोदायामसुप्तताः ।
पिपीलिकासृप्तिमिव स्तम्भं कर्कशतां स्वनम् ॥ २९ ॥
फेनिलारुणकृष्णाल्पतनुरूक्षार्तवस्रुतिम् ।
स्रंसं वङ्क्षणपार्श्वादौ व्यथां गुल्मं क्रमेण च ॥ ३० ॥
तांस्तांश्च स्वान् गदान् व्यापद्वातिकी नाम सा स्मृता ।

---

१ 'ग्रन्थिताख्यं' इति पाठः।

सैवातिचरणा शोकसंयुक्तातिव्यवायतः ॥ ३१ ॥
मैथुनादतिबालायाः पृष्ठजङ्घोरुवङ्क्षणम् ।
रुजन्सन्दूषयेद्योनिं वायुः प्राक्चरणेति सा ॥ ३२ ॥
वेगोदावर्तनाद्योनिं प्रपीडयति मारुतः ।
सा फेनिलं रजः कृच्छ्रादुदावृत्तं विमुञ्चति ॥ ३३ ॥
इयं व्यापदुदावृत्ता

जातघ्नी तु यदानिलः ।

जातं जातं सुतं हन्ति रौक्ष्याद्दुष्टार्तवोद्भवम् ॥ ३४ ॥
अत्याशिताया विषमं स्थितायाः सुरते मरुत् ।
अन्नेनोत्पीडितो योनेः स्थितः स्रोतसि वक्रयेत् ॥ ३५ ॥
सास्थिमांसं मुखं तीव्ररुजमन्तर्मुखीति सा ।
वातलाहारसेविन्यां जनन्यां कुपितोऽनिलः ॥ ३६ ॥
स्त्रियो योनिमणुद्वारां कुर्यात्सूचीमुखीति सा ।
वेगरोधादृतौ वायुर्दुष्टो विण्मूत्रसङ्ग्रहम् ॥ ३७ ॥
करोति योनेः शोषं च शुष्काख्या सातिवेदना ।
षडहात्सप्तरात्राद्वा शुक्रं गर्भाशयान्मरुत् ॥ ३८ ॥
वमेत्सरुङ् नीरुजो वा यस्याः सा वामिनी मता ।
योनौ वातोपतप्तायां स्त्रीगर्भे बीजदोषतः ॥ ३९ ॥
शुद्वेषिण्यस्तनी च स्यात्षण्डसंज्ञाऽनुपक्रमा ।
दुष्टो विष्टभ्य योन्यास्यं गर्भकोष्ठं च मारुतः ॥ ४० ॥
कुरुते विवृतां स्रस्तां वातिकीमिव दुःखिताम् ।

उत्सन्नमांसां तामाहुर्महायोनिं महारुजाम् ॥ ४१ ॥
यथास्वैर्दूषणैर्दुष्टं पित्तं योनिमुपाश्रितम् ।
करोति दाहपाकोषापूतिगन्धज्वरान्विताम् ॥ ४२ ॥
भृशोष्णभूरिकुणपनीलपीतासितार्तवाम् ।
सा व्यापत्पैत्तिकी

रक्तयोन्याख्यासृगतिस्रुतेः ॥ ४३ ॥
कफोऽभिष्यन्दिभिः क्रुद्धः कुर्याद्योनिमवेदनाम् ।
शीतलां कण्डुलां पाण्डुपिच्छिलां तद्विधस्रुतिम् ॥ ४४ ॥
सा व्यापच्छ्लैष्मिकी

वातपित्ताभ्यां क्षीयते रजः ।
सदाहकार्श्यवैवर्ण्यं यस्यां सा लोहितक्षया ॥ ४५ ॥
पित्तलाया नृसंवासे क्षवथूद्गारधारणात् ।
पित्तयुक्तेन मरुता योनिर्भवति दूषिता ॥ ४६ ॥
शूना स्पर्शासहा सार्तिर्नीलपीतास्रवाहिनी ।
बस्तिकुक्षिगुरुत्वातीसारारोचककारिणी ॥ ४७ ॥
श्रोणिवङ्क्षणरुक्तोदज्वरकृत्सा परिप्लुता ।
वातश्लेष्मामयव्याप्ता श्वेतपिच्छिलवाहिनी ॥ ४८ ॥
उपप्लुता स्मृता योनिः

विप्लुताख्या त्वधावनात् ।
सञ्जातजन्तुः कण्डूला कण्ड्वा चातिरतिप्रिया ॥ ४९ ॥
अकालवाहनाद्वायुः श्लेष्मरक्तविमूर्च्छितः ।

कर्णिकां जनयेद्योनौ रजोमार्गनिरोधिनीम् ॥ ५० ॥
सा कर्णिनी

त्रिभिर्दोषैर्योनिगर्भाशयाश्रितैः ।
यथास्वोपद्रवकरैर्व्यापत्सा सान्निपातिकी ॥ ५१ ॥
इति योनिगदा, नारी यैः शुक्रं न प्रतीच्छति ।
ततो गर्भं न गृह्णाति, रोगांश्चाप्नोति दारुणान् ॥ ५२ ॥
असृग्दरार्शोगुल्मादीनाबाधांश्चानिलादिभिः ॥ ५२½ ॥"

---

## चतुस्त्रिंशोऽध्यायः ।

अथाऽतो गुह्यरोगप्रतिषेधं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"मेढ्रमध्ये सिरां विध्येदुपदंशे नवोत्थिते ।
शीतां कुर्यात् क्रियां शुद्धिं विरेकेण विशेषतः ॥ १ ॥
तिलकल्कघृतक्षौद्रलेपः पक्वे तु पाटिते ।
जम्ब्वाम्रसुमनोनीपश्वेतकाम्बोजिकाङ्कुरान् ॥ २ ॥
शल्लकीबदरीबिल्वपलाशातिनिशोद्भवाः ।
त्वचः क्षीरिद्रुमाणां त्रिफलां च जले पचेत् ॥ ३ ॥
स क्वाथः क्षालनं तेन पक्वं तैलं च रोपणम् ।
तुत्थगैरिकलोध्रैलामनोह्वालरसाञ्जनैः ॥ ४ ॥
हरेणुपुष्पकासीससौराष्ट्रीलवणोत्तमैः ।
लेपः क्षौद्रयुतैः सूक्ष्मैरुपदंशव्रणापहः ॥ ५ ॥
कपाले त्रिफला दग्धा सघृता रोपणं परम् ।

सामान्यं साधनमिदं, प्रतिदोषं तु शोफवत् ॥ ६ ॥
न च याति यथा पाकं प्रयतेत तथा भृशम् ।
पक्वैः स्नायुसिरामांसैः प्रायो नश्यति हि ध्वजः ॥ ७ ॥
अर्शसां छिन्नदग्धानां क्रिया कार्योपदंशवत् ।
सर्षपा लिखिता सूक्ष्मैः कषायैरवचूर्णयेत् ॥ ८ ॥
तैरेवाभ्यञ्जनं तैलं साधयेद् व्रणरोपणम् ।
क्रियेयमवमन्थेऽपि रक्तं स्राव्यं तथोभयोः ॥ ९ ॥
कुम्भीकायां हरेद्रक्तं पक्वायां शोधिते व्रणे ।
तिन्दुकत्रिफलारोध्रैर्लेपस्तैलं च रोपणम् ॥ १० ॥
अलज्यां स्रुतरक्तायामयमेव क्रियाक्रमः ।
उत्तमाख्यां तु पिटिकां सञ्छिद्य बडिशोद्धृताम् ॥ ११ ॥
कल्कैश्चूर्णैः कषायाणां क्षौद्रयुक्तैरुपाचरेत् ।
क्रमः पित्तविसर्पोक्तः पुष्करव्यूढयोर्हितः ॥ १२ ॥
त्वक्पाके स्पर्शहान्यां च

सेचयेन्मृदितं पुनः ।
बलातैलेन कोष्णेन मधुरैश्चोपनाहयेत् ॥ १३ ॥
अष्ठीलिकां हृते रक्ते श्लेष्मग्रन्थिवदाचरेत् ।
निवृत्तं सर्पिषाऽभ्यज्य स्वेदयित्वोपनाहयेत् ॥ १४ ॥
त्रिरात्रं पञ्चरात्रं वा सुस्निग्धैः साल्वणादिभिः[1] ।
स्वेदयित्वा ततो भूयः स्निग्धं चर्म समानयेत् ॥ १५ ॥
मणिं प्रपीड्य शनकैः प्रविष्टे चोपनाहनम् ।

---

१ 'शाल्वणादिभिः' इति पाठः.

मणौ पुनः पुनः स्निग्धं भोजनं चाऽत्र शस्यते ॥ १६ ॥
अयमेव प्रयोज्यः स्यादवपाट्यामपि क्रमः ।
नाडीमुभयतोद्वारां निरुद्धे जतुना कृताम् ॥ १७ ॥
स्नेहाक्तां स्रोतसि न्यस्य सिञ्चेत्स्नेहैश्चलापहैः ।
त्र्यहात्त्र्यहात्स्थूलतरां न्यस्य नाडीं विवर्धयेत् ॥ १८ ॥
स्रोतोद्वारमसिद्धौ तु विद्वान् शस्त्रेण पाटयेत् ।
सेवनीं वर्जयन्, कुर्यात्सद्यःक्षतविधिं ततः ॥ १९ ॥
ग्रथितं स्वेदितं नाड्या स्निग्धोष्णैरुपनाहयेत् ।
लिम्पेत्कषायैः सक्षौद्रैर्लिखित्वा शतपोनकम् ॥ २० ॥
रक्तविद्रधिवत्कार्या चिकित्सा शोणितार्बुदे ।
व्रणोपचारं सर्वेषु यथावस्थं प्रयोजयेत् ॥ २१ ॥
योनिव्यापत्सु भूयिष्ठं शस्यते कर्म वातजित् ।
स्नेहनस्वेदबस्त्यादि वातजासु विशेषतः ॥ २२ ॥
नहि वातादृते योनिर्वनितानां प्रदुष्यति ।
अतो जित्वा तमन्यस्य कुर्याद्दोषस्य भेषजम् ॥ २३ ॥
पाययेत बलातैलं मिश्रकं सुकुमारकम् ।
स्निग्धस्विन्नां तथा योनिं दुःस्थितां स्थापयेत्समाम् ॥२४॥
पाणिनोन्नमयेज्जिह्मां संवृतां व्यधयेत्पुनः ।
प्रवेशयेन्निःसृतां च विवृतां परिवर्तयेत् ॥ २५ ॥
स्थानापवृत्ता योनिर्हि शल्यभूता स्त्रियो भवेत् ।
कर्मभिर्वमनाद्यैश्च मृदुभिर्योजयेत्स्त्रियम् ॥ २६ ॥

---

१ 'गुञ्ज्यात्त' इति पाठः. २ 'ग्रन्थितं' इति पाठः.

सर्वतः सुविशुद्धायाः शेषं कर्म विधीयते ।
बस्त्यभ्यङ्गपरीषेकप्रलेपपिचुधारणम् ॥ २७ ॥
काश्मर्यत्रिफलाद्राक्षाकासमर्दनिशाद्वयैः ।
गुडूचीसैर्यकाभीरुशुकनासापुनर्नवैः ॥ २८ ॥
परूषकैश्च विपचेत्प्रस्थमक्षसमैर्घृतात् ।
योनिवातविकारघ्नं तत्पीतं गर्भदं परम् ॥ २९ ॥
वचोपकुञ्चिकाजाजीकृष्णावृषकसैन्धवम् ।
अजमोदायवक्षारशर्कराचित्रकान्वितम् ॥ ३० ॥
पिष्ट्वा प्रसन्नयाऽऽलोड्य खादेत घृतभर्जितम् ।
योनिपार्श्वार्तिहृद्रोगगुल्मार्शोविनिवृत्तये ॥ ३१ ॥
वृषकं मातुलुङ्गस्य मूलानि मदयन्तिकाम् ।
पिबेन्मद्यैः सलवणैस्तथा कृष्णोपकुञ्चिकैः ॥ ३२ ॥
रास्नाश्वदंष्ट्रावृषकैः शृतं शूलहरं पयः ।
गुडूचीत्रिफलादन्तीक्वाथैश्च परिषेचनम् ॥ ३३ ॥
नतवार्ताकिनीकुष्ठसैन्धवामरदारुभिः ।
तैलात्प्रसाधिताद्धार्यः पिचुर्योनौ रुजापहः ॥ ३४ ॥
पित्तलानां तु योनीनां सेकाभ्यङ्गपिचुक्रियाः ।
शीताः पित्तजितः कार्याः स्नेहनार्थं घृतानि च ॥ ३५ ॥
शतावरीमूलतुलाचतुष्कात् क्षुण्णपीडितात् ।
रसेन क्षीरतुल्येन पाचयेत घृताढकम् ॥ ३६ ॥
जीवनीयैः शतावर्या मृद्वीकाभिः परूषकैः ।

---

१ 'खादेत्तद्घृतभर्जितम्' इति पाठः.

पिष्टैः प्रियालैश्चाक्षांशैर्मधुकद्विबलान्वितैः ॥ ३७ ॥
सिद्धशीते तु मधुनः पिप्पल्याश्च पलाष्टकम् ।
शर्कराया दशपलं क्षिपेल्लिह्यात्पिचुं ततः ॥ ३८ ॥
योन्यसृक्शुक्रदोषघ्नं वृष्यं पुंसवनं परम् ।
क्षतं क्षयमसृक्पित्तं कासं श्वासं हलीमकम् ॥ ३९ ॥
कामलां वातरुधिरं विसर्पं हृच्छिरोग्रहम् ।
अपस्मारार्दितायाममदोन्मादांश्च नाशयेत् ॥ ४० ॥
एवमेव पयः सर्पिर्जीवनीयोपसाधितम् ।
गर्भदं पित्तजानां च रोगाणां परमं हितम् ॥ ४१ ॥
बलाद्रोणद्वयक्वाथे घृततैलाढकं पचेत् ।
क्षीरे चतुर्गुणे कृष्णाकाकनासासितान्वितैः ॥ ४२ ॥
जीवन्तीक्षीरकाकोलीस्थिरावीरर्द्धिजीवकैः ।
पयस्याश्रावणीमुद्गपीलुमाषाख्यपर्णिभिः ॥ ४३ ॥
वातपित्तामयान् हत्वा पानाद्गर्भं दधाति तत् ।
रक्तयोन्यामसृग्वर्णैरनुबन्धमवेक्ष्य च ॥ ४४ ॥
यथादोषोदयं युञ्ज्यात् रक्तस्थापनमौषधम् ।
पाठा जम्ब्वाम्रयोरस्थि शिलोद्भेदं रसाञ्जनम् ॥ ४५ ॥
अम्बष्ठां शाल्मलीपिच्छां समङ्गां वत्सकत्वचम् ।
बाह्लीकबिल्वातिविषारोध्रतोयदगैरिकम् ॥ ४६ ॥
शुण्ठीमधूकमृद्वीकारक्तचन्दनकट्फलम् ।
कट्वङ्गवत्सकानन्ताधातकीमधुकार्जुनम् ॥ ४७ ॥

---

१ 'माचीकरक्त' इति पाठः।

पुष्ये गृहीत्वा सञ्चूर्ण्य सक्षौद्रं तन्दुलाम्भसा ।
पिबेदर्शःस्वतीसारे रक्तं यश्चोपवेश्यते ॥ ४८ ॥
दोषा जन्तुकृता ये च बालानां तांश्च नाशयेत् ।
योनिदोषं रजोदोषं श्यावश्वेतारुणासितम् ॥ ४९ ॥
चूर्णं पुष्यानुगं नाम हितमात्रेयपूजितम् ।
योन्यां बलासदुष्टायां सर्वं रूक्षोष्णमौषधम् ॥ ५० ॥
धातक्यामलकीपत्रस्रोतोजमधुकोत्पलैः ।
जम्ब्वाम्रसारकासीसरोध्रकट्फलतिन्दुकैः ॥ ५१ ॥
सौराष्ट्रिकादाडिमत्वगुदुम्बरशलाटुभिः ।
अक्षमात्रैरजामूत्रे क्षीरे च द्विगुणे पचेत् ॥ ५२ ॥
तैलप्रस्थं तदभ्यङ्गपिचुबस्तिषु योजयेत् ।
शूनोत्तानोन्नता स्तब्धा पिच्छिला स्रावणी तथा ॥ ५३ ॥
विप्लुतोपप्लुता योनिः सिद्ध्येत्सस्फोटशूलिनी ।
यवान्नमभयारिष्टं सीधु तैलं च शीलयेत् ॥ ५४ ॥
पिप्पल्ययोरजःपथ्याप्रयोगांश्च समाक्षिकान् ।
कासीसं त्रिफलां काङ्क्षीं साम्रजम्ब्वस्थि धातुकीं ॥ ५५ ॥
पैच्छिल्ये क्षौद्रसंयुक्तश्चूर्णो वैशद्यकारकः ।
पलाशधातकीजम्बूसमङ्गामोचसर्जजः ॥ ५६ ॥
दुर्गन्धे पिच्छिले [१]क्लेदस्तम्भनश्चूर्ण इष्यते ।
आरग्वधादिवर्गस्य कषायः परिषेचनम् ॥ ५७ ॥
स्तब्धानां कर्कशानां च कार्यं मार्दवकारकम् ।

---

१ 'क्लेदे स्तम्भ' इति पाठः।

धारणं वेसवारस्य कृशरापायसस्य च ॥ ५८ ॥
दुर्गन्धानां कषायः स्यात्तैलं वा कल्क एव वा ।
चूर्णो वा सर्वगन्धानां पूतिगन्धापकर्षणः ॥ ५९ ॥
श्लेष्मलानां कटुप्रायाः समूत्रा बस्तयो हिताः ।
पित्ते समधुकक्षीरा वाते तैलाम्लसंयुताः ॥ ६० ॥
सन्निपातसमुत्थायाः कर्म साधारणं हितम् ।
एवं योनिषु शुद्धासु गर्भं विन्दन्ति योषितः ॥ ६१ ॥
अदुष्टे प्राकृते बीजे जीवोपक्रमणे सति ।
पञ्चकर्मविशुद्धस्य पुरुषस्यापि चेन्द्रियम् ॥ ६२ ॥
परीक्ष्य वर्णैर्दोषाणां दुष्टं तद्घ्नैरुपाचरेत् ।
मञ्जिष्ठाकुष्ठतगरत्रिफलाशर्कराषचाः ॥ ६३ ॥
द्वे निशे मधुकं मेदा दीप्यकः कटुरोहिणी ।
पयस्याहिङ्गुकाकोलीवाजिगन्धाशतावरीः ॥ ६४ ॥
पिष्ट्वाक्षांशैर्घृतप्रस्थं पचेत्क्षीरचतुर्गुणम् ।
योनिशुक्रप्रदोषेषु तत्सर्वेषु च शस्यते ॥ ६५ ॥
आयुष्यं पौष्टिकं मेध्यं धन्यं पुंसवनं परम् ।
फलसर्पिरिति ख्यातं पुष्पे पीतं फलाय यत् ॥ ६६ ॥
म्रियमाणप्रजानां च गर्भिणीनां च पूजितम् ।
एतत्परं च बालानां ग्रहघ्नं देहवर्धनम् ॥ ६७ ॥"

---

१ 'कृसरा' पा. २ 'क्षीराच्चतुर्गुणम्' पा. ३ 'पुष्पे' पाठः.

## पञ्चत्रिंशोऽध्यायः ।

अथाऽतो विषप्रतिषेधं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"मथ्यमाने जलनिधावमृतार्थं सुरासुरैः ।
जातः प्रागमृतोत्पत्तेः पुरुषो घोरदर्शनः ॥ १ ॥
दीप्ततेजाश्चतुर्दंष्ट्रो हरित्केशोऽनलेक्षणः ।
जगद्विषण्णं तं दृष्ट्वा तेनाऽसौ विषसंज्ञितः ॥ २ ॥
हुङ्कृतो ब्रह्मणा मूर्तौ ततः स्थावरजङ्गमे ।
सोऽध्यतिष्ठन्निजं रूपमुज्झित्वा वज्रनात्मकम् ॥ ३ ॥
स्थिरमत्युल्बणं वीर्यं यत्कन्देषु प्रतिष्ठितम् ।
कालकूटेन्द्रवत्साख्यशृङ्गीहालाहलादिकम् ॥ ४ ॥
सर्पलूतादिदंष्ट्रासु दारुणं जङ्गमं विषम् ।
स्थावरं जङ्गमं चेति विषं प्रोक्तमकृत्रिमम् ॥ ५ ॥
कृत्रिमं गरसंज्ञं तु क्रियते विविधौषधैः ।
हन्ति योगवशेनाशु चिराच्चिरतराच्च तत् ॥ ६ ॥
शोफपाण्डूदरोन्मादद्दुर्नामादीन् करोति च ।
तीक्ष्णोष्णरूक्षविशदं व्यवाय्याशुकरं लघु ॥ ७ ॥
[1]विकाषि सूक्ष्ममव्यक्तरसं विषमपाकि च ।
ओजसो विपरीतं तत् तीक्ष्णाद्यैरन्वितं गुणैः ॥ ८ ॥
वातपित्तोत्तरं नृणां सद्यो हरति जीवितम् ।
विषं हि देहं संप्राप्य प्राग् दूषयति शोणितम् ॥ ९ ॥

---

१ 'विकाशि' इति पाठः.

कफपित्तानिलांश्चानु समं दोषान् सहाशयान् ।
ततो हृदयमास्थाय देहोच्छेदाय कल्पते ॥ १० ॥
स्थावरस्योपयुक्तस्य वेगे पूर्वं प्रजायते ।
जिह्वायाः श्यावता स्तम्भो मूर्च्छा त्रासः क्लमो वमिः॥११॥
द्वितीये वेपथुः स्वेदो दाहः कण्ठे च वेदना ।
विषं चामाशयं प्राप्तं कुरुते हृदि वेदनाम् ॥ १२ ॥
तालुशोषस्तृतीये तु शूलं चामाशये भृशम् ।
दुर्बले हरिते शूने जायेते चास्य लोचने ॥ १३ ॥
पक्वाशयगते तोदहिध्माकासान्त्रकूजनम् ।
चतुर्थे जायते वेगे शिरसश्चातिगौरवम् ॥ १४ ॥
कफप्रसेको वैवर्ण्यं पर्वभेदश्च पञ्चमे ।
सर्वदोषप्रकोपश्च पक्वाधाने च वेदना ॥ १५ ॥
षष्ठे संज्ञाप्रणाशश्च सुभृशं चाऽतिसार्यते ।
स्कन्धपृष्ठकटीभङ्गो भवेन्मृत्युश्च सप्तमे ॥ १६ ॥
प्रथमे विषवेगे तु वान्तं शीताम्बुसेचितम् ।
सर्पिर्मधुभ्यां संयुक्तमगदं पाययेद्द्रुतम् ॥ १७ ॥
द्वितीये पूर्ववद्वान्तं विरिक्तं चाऽनु पाययेत् ।
तृतीयेऽगदपानं तु हितं नस्यं तथाञ्जनम् ॥ १८ ॥
चतुर्थे स्नेहसंयुक्तमगदं प्रतियोजयेत् ।
पञ्चमे मधुकक्वाथमाक्षिकाभ्यां युतं हितम् ॥ १९ ॥
षष्ठेऽतिसारवत्सिद्धिः

अवपीडस्तु सप्तमे

मूर्ध्नि काकपदं कृत्वा सासृग्वा पिशितं क्षिपेत् ॥ २० ॥
कोशातक्यग्निकः पाठा सूर्यवल्ल्यमृताभयाः ।
शेलुः शिरीषः किणिही हरिद्रे क्षौद्रसाह्वया ॥ २१ ॥
पुनर्नवे त्रिकटुकं बृहत्यौ सारिवे बला ।
एषां यवागूं निर्यूहे शीतां सघृतमाक्षिकाम् ॥ २२ ॥
युञ्ज्याद्वेगान्तरे सर्वविषघ्नीं कृतकर्मणः ।
तद्वन्मधूकमधुकपद्मकेसरचन्दनैः ॥ २३ ॥
अञ्जनं तगरं कुष्ठं हरितालं मनःशिला ।
फलिनी त्रिकटु स्पृक्का नागपुष्पं सकेसरम् ॥ २४ ॥
हरेणु मधुकं मांसी रोचना कालमल्लिका[1] ।
श्रीवेष्टकं सर्जरसः शताह्वा कुङ्कुमं बला ॥ २५ ॥
तमालपत्रं तालीसं भूर्जोशीरे निशाद्वयम् ।
कन्योपवासिनी स्नाता शुक्लवासा मधुद्रुतैः ॥ २६ ॥
द्विजानभ्यर्च्य तैः पुष्ये कल्पयेदगदोत्तमम् ।
वैद्यश्चात्र तदा मन्त्रं प्रयतात्मा पठेदिमम् ॥ २७ ॥
"नमः पुरुषसिंहाय नमो नारायणाय च ।
यथासौ नाभिजानाति रणे कृष्णपराजयम् ॥ २८ ॥
एतेन सत्यवाक्येन अगदो मे प्रसिध्यतु ।
नमो वैडूर्यमाते हुलुहुलु रक्ष मां सर्वविषेभ्यः ॥ २९ ॥
गौरि गान्धारि चाण्डालि मातङ्गि स्वाहा ।"

---

१ 'काकमाल्लिका' इति पाठः.

पिष्टे च द्वितीयो मन्त्रः

"ॐ हरिमायि स्वाहा" ॥ ३० ॥

अशेषविषवेतालग्रहकार्मणपाप्मसु ।
मरकव्याधिदुर्भिक्षयुद्धाशनिभयेषु च ॥ ३१ ॥
पाननस्याञ्जनालेपमणिबन्धादियोजितः ।
एष चन्द्रोदयो नाम शान्तिः स्वस्त्ययनं परम् ॥ ३२ ॥

जीर्णं विषघ्नौषधिभिर्हतं वा ।
दावाग्निवातातपशोषितं वा ।
स्वभावतो वा न गुणैः सुयुक्तं
दूषीविषाख्यां विषमभ्युपैति ॥ ३३ ॥
वीर्याल्पभावादविभाव्यमेत-
त्कफावृतं वर्षगणानुबन्धि ।
तेनार्दितो भिन्नपुरीषवर्णो
दुष्टास्ररोगी तृडरोचकार्तः ॥ ३४ ॥
मूर्च्छन् वमन् गद्गदवाग् विमुह्यन्
भवेच्च दूष्योदरलिङ्गजुष्टः ।
आमाशयस्थे कफवातरोगी
पक्वाशयस्थेऽनिलपित्तरोगी ॥ ३५ ॥
भवेन्नरो ध्वस्तशिरोरुहाङ्गो
विलूनपक्षः स यथा विहङ्गः ।

१ 'वा सुगुणैर्न युक्तं' इति पाठः.

स्थितं रसादिष्वथवा विचित्रान्
करोति धातुप्रभवान् विकारान् ॥ ३६ ॥
प्राग्वाताजीर्णशीताभ्रदिवास्वप्नाहिताशनैः ।
दुष्टं दूषयते धातूनतो दूषीविषं स्मृतम् ॥ ३७ ॥
दूषीविषार्तं सुस्विन्नमूर्ध्वं चाधश्च शोधितम् ।
दूषीविषारिमगदं लेहयेन्मधुना द्रुतम् ॥ ३८ ॥
पिप्पल्यो ध्यामकं मांसी रोध्रमेला सुवर्चिका ।
कुटन्नटं नतं कुष्ठं यष्टी चन्दनगैरिकम् ॥ ३९ ॥
दूषीविषारिर्नाम्नाऽयं न चान्यत्राऽपि वार्यते ।
विषदिग्धेन विद्धस्तु प्रताम्यति मुहुर्मुहुः ॥ ४० ॥
विवर्णभावं भजते विषादं चाशु गच्छति ।
कीटैरिवावृतं चास्य गात्रं चिमिचिमायते ॥ ४१ ॥
श्रोणिपृष्ठशिरःस्कन्धसन्धयः स्युः सवेदनाः ।
कृष्णदुष्टास्रविस्रावी तृण्मूर्च्छाज्वरदाहवान् ॥ ४२ ॥
दृष्टिकालुष्यवमथुश्वासकासकरः क्षणात् ।
आरक्तपीतपर्यन्तः श्यावमध्योऽतिरुग्व्रणः ॥ ४३ ॥
श्वयते[1] पच्यते सद्यो गत्वा मांसं च कृष्णताम् ।
प्रक्लिन्नं शीर्यतेऽभीक्ष्णं सपिच्छिलपरिस्रवम् ॥ ४४ ॥
कुर्यादमर्मविद्धस्य हृदयावरणं द्रुतम् ।
शल्यमाकृष्य तप्तेन लोहेनाशु दहेद्व्रणम् ॥ ४५ ॥
अथवा मुष्ककश्वेतासोमत्वक्ताम्रवल्लिजः ।

---

१ 'सूयते' इति क्वचित्.

शिरीषाद् गृध्रनख्याश्च क्षारेण प्रतिसारयेत् ॥ ४६ ॥
शुकनासाप्रतिविषाव्याघ्रीमूलैश्च लेपयेत् ।
कीटदृष्टचिकित्सां च कुर्यात्तस्य यथार्हतः ॥ ४७ ॥
व्रणे तु पूतिपिशिते क्रिया पित्तविसर्पवत् ।
सौभाग्यार्थं स्त्रियो भर्त्रे राज्ञे वाऽरातिचोदिताः ॥ ४८ ॥
गरमाहारसंपृक्तं यच्छन्त्यासन्नवर्तिनः ।
नानाप्राण्यङ्गशमलविरुद्धौषधिभस्मनाम् ॥ ४९ ॥
विषाणां चाल्पवीर्याणां योगो गर इति स्मृतः ।
तेन पाण्डुः कृशोऽल्पाग्निः कासश्वासज्वरार्दितः ॥ ५० ॥
वायुना प्रतिलोमेन स्वप्नचिन्तापरायणः ।
महोदरयकृत्प्लीही[1] दीनवाग्दुर्बलोऽलसः ॥ ५१ ॥
शोफवान् सततात्मातः शुष्कपादकरः क्षयी ।
स्वप्ने गोमायुमार्जारनकुलव्यालवानरान् ॥ ५२ ॥
प्रायः पश्यति शुष्कांश्च वनस्पतिजलाशयान् ।
मन्यते कृष्णमात्मानं गौरो गौरं च कालकः ॥ ५३ ॥
विकर्णनासानयनं पश्येत्तद्विहतेन्द्रियः ।
एतैरन्यैश्च बहुभिः क्लिष्टो घोरैरुपद्रवैः ॥ ५४ ॥
गरार्तो नाशमाप्नोति कश्चित्सद्योऽचिकित्सितः ।
गरार्तो वान्तवान् भुक्त्वा तत्पथ्यं पानभोजनम् ॥ ५५ ॥
शुद्धहृच्छीलयेद्धेम सूत्रस्थानविधेः स्मरन् ।
शर्कराक्षौद्रसंयुक्तं चूर्णं ताप्यसुवर्णयोः ॥ ५६ ॥

---

१ 'त्प्लीही दीन' इति पाठः.

लेहः प्रशमयत्युग्रं सर्वयोगकृतं विषम् ।
मूर्वामृतानतकणापटोलीचव्यचित्रकान् ॥ ५७ ॥
वचामुस्तविडङ्गानि तक्रकोष्णाम्बुमस्तुभिः ।
पिबेद्रसेन वाम्लेन गरोपहतपावकः ॥ ५८ ॥
पारावतामिषशठीपुष्कराह्वशृतं हिमम् ।
गरतृष्णारुजाकासश्वासहिध्माज्वरापहम् ॥ ५९ ॥
विषप्रकृतिकालान्नदोषदूष्यादिसङ्गमे ।
विषसङ्कटमुद्दिष्टं शतस्यैकोऽत्र जीवति ॥ ६० ॥
क्षुत्तृष्णाघर्मदौर्बल्यक्रोधशोकभयश्रमैः ।
अजीर्णवर्चोद्रवतः पित्तमारुतवृद्धिभिः ॥ ६१ ॥
तिलपुष्पफलाघ्राणभूबाष्पघनगर्जितैः ।
हस्तिमूषिकवादित्रनिःस्वनैर्विषसङ्कटैः ॥ ६२ ॥
पुरोवातोत्पलामोदमदनैर्वर्धते विषम् ।
वर्षासु चाम्बुयोनित्वात्संक्लेदं गुडवद्गतम् ॥ ६३ ॥
विसर्पति घनापाये तदगस्त्यो हिनस्ति च ।
प्रयाति मन्दवीर्यत्वं विषं तस्माद्घनात्यये ॥ ६४ ॥
इति प्रकृतिसात्म्यर्तुस्थानवेगबलाबलम् ।
आलोच्य निपुणं बुद्ध्या कर्मानन्तरमाचरेत् ॥ ६५ ॥
श्लैष्मिकं वमनैरुष्णरूक्षतीक्ष्णैः प्रलेपनैः ।
कषायकटुतिक्तैश्च भोजनैः शमयेद्विषम् ॥ ६६ ॥
पैत्तिकं स्रंसनैः सेकप्रदेहैर्भृशशीतलैः ।

कषायतिक्तमधुरैर्घृतयुक्तैश्च भोजनैः ॥ ६७ ॥
वातात्मकं जयेत्स्वादुस्निग्धाम्ललवणान्वितैः ।
सघृतैर्भोजनैर्लेपैस्तथैव पिशिताशनैः ॥ ६८ ॥
नाघृतं स्रंसनं शस्तं प्रलेपो भोज्यमौषधम् ।
सर्वेषु सर्वावस्थेषु विषेषु न घृतोपमम् ॥ ६९ ॥
विद्यते भेषजं किंचिद्विशेषात्प्रबलेऽनिले ।
अयत्नाच्छ्लैष्मिकं साध्यं यत्नात्पित्ताशयाश्रयम् ॥
सुदुःसाध्यमसाध्यं वा वाताशयगतं विषम् ॥ ७० ॥"

---

## षट्त्रिंशोऽध्यायः ।

अथाऽतः सर्पविषप्रतिषेधं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥
"दर्वीकरा मण्डलिनो राजीमन्तश्च पन्नगाः ।
त्रिधा समासतो भौमा, भिद्यन्ते ते त्वनेकधा ॥ १ ॥
व्यासतो योनिभेदेन नोच्यन्तेऽनुपयोगिनः ।
विशेषाद्रूक्षकटुकमम्लोष्णं स्वादुशीतलम् ॥ २ ॥
विषं दर्वीकरादीनां क्रमाद्वातादिकोपनम् ।
तारुण्यमध्यवृद्धत्वे वृष्टिशीतातपेषु च ॥ ३ ॥
विषोल्बणा भवन्त्येते व्यन्तरा ऋतुसन्धिषु ।
रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिणः ॥ ४ ॥
फणिनः शीघ्रगतयः सर्पा दर्वीकराः स्मृताः ।
ज्ञेया मण्डलिनोऽभोगा मण्डलैर्विविधैश्चिताः ॥ ५ ॥

प्रांशवोऽमन्दगमना[1]
राजीमन्तस्तु राजिभिः ।
स्निग्धा विचित्रवर्णाभिस्तिर्यगूर्ध्वं विचित्रिताः ॥ ६ ॥
गोधासुतस्तु गौधेरो विषे दर्वीकरैः समः ।
चतुष्पाद्
व्यन्तरान्विद्यादेतेषामेव सङ्करात् ॥ ७ ॥
व्यामिश्रलक्षणास्ते हि सन्निपातप्रकोपनाः ।
आहारार्थं भयात्पादस्पर्शादतिविषात् क्रुधः ॥ ८ ॥
पापवृत्तितया वैराद्देवर्षियमचोदनात् ।
दशन्ति सर्पास्तेषूक्तं विषाधिक्यं यथोत्तरम् ॥ ९ ॥
आदिष्टात्कारणं ज्ञात्वा प्रतिकुर्याद्यथायथम् ।
व्यन्तरः पापशीलत्वान्मार्गमाश्रित्य तिष्ठति ॥ १० ॥
यत्र लालापरिक्लेदमात्रं गात्रे प्रदृश्यते ।
न तु दंष्ट्राकृतं दंशं तत्तुण्डाहतमादिशेत् ॥ ११ ॥
एकं दंष्ट्रापदं द्वे वा व्यालीढाख्यमशोणितम् ।
दंष्ट्रापदे सरक्ते द्वे व्यालुप्तं त्रीणि तानि तु ॥ १२ ॥
मांसच्छेदादविच्छिन्नरक्तवाहीनि दंष्टकम् ।
दंष्ट्रापदानि चत्वारि तद्वद्दष्टनिपीडितम् ॥ १३ ॥
निर्विषं द्वयमत्राद्यमसाध्यं पश्चिमं वदेत् ।
विषं नाहेयमप्राप्य रक्तं दूषयते वपुः ॥ १४ ॥
रक्तमण्वपि तु प्राप्तं वर्धते तैलमम्बुवत् ।

---

१ 'प्रांशवो मन्द' इति पाठः.

भीरोस्तु सर्पसंस्पर्शाद्भयेन कुपितोऽनिलः ॥ १५ ॥
कदाचित्कुरुते शोफं सर्पाङ्गाभिहतं तु तत् ।
दुर्गान्धकारे विद्धस्य केनचिद्दष्टशङ्कया ॥ १६ ॥
त्रिषोद्वेगो ज्वरच्छर्दिर्मूर्च्छा दाहोऽपि वा भवेत् ।
ग्लानिर्मोहोऽतिसारो वा तच्छङ्काविषमुच्यते ॥ १७ ॥
तुद्यते सविषो दंशः कण्डूशोफरुजान्वितः ।
दह्यते ग्रथितः किंचिद्विपरीतस्तु निर्विषः ॥ १८ ॥
पूर्वे दर्वीकृतां वेगे दुष्टं श्यावीभवत्यसृक् ।
श्यावता तेन वक्त्रादौ सर्पन्तीव च कीटकाः ॥ १९ ॥
द्वितीये ग्रन्थयो वेगे, तृतीये मूर्ध्नि गौरवम् ।
दुर्गन्धो दंशविक्लेदश्चतुर्थे ष्ठीवनं वमिः, ॥ २० ॥
सन्धिविश्लेषणं तन्द्रा पञ्चमे पर्वभेदनम् ।
दाहो हिध्मा च, षष्ठे च हृत्पीडा गात्रगौरवम् ॥ २१ ॥
मूर्च्छाऽविपाकोऽतीसारः, प्राप्य शुक्रं तु सप्तमे ।
स्कन्धपृष्ठकटीभङ्गः सर्वचेष्टानिवर्तनम् ॥ २२ ॥
अथ मण्डलिदष्टस्य दुष्टं पीतीभवत्यसृक् ।
तेन पीताङ्गता दाहो, द्वितीये श्वयथूद्भवः, ॥ २३ ॥
तृतीये दंशविक्लेदः स्वेदस्तृष्णा च जायते, ।
चतुर्थे ज्वर्यते, दाहः पञ्चमे सर्वगात्रगः ॥ २४ ॥
दष्टस्य राजिलैर्दुष्टं पाण्डुतां याति शोणितम् ।
पाण्डुता तेन गात्राणां, द्वितीये गुरुताऽति च, ॥ २५ ॥

---

१ 'श्यावीभव' इति पाठः. २ 'मूर्च्छा विपाको' इति पाठः.

तृतीये दंशविक्लेदो नासिकाक्षिमुखस्रवाः ।
चतुर्थे गरिमा मूर्ध्नो, मन्यास्तम्भश्च पञ्चमे ॥ २६ ॥
गात्रभङ्गो ज्वरः शीतः
शेषयोः पूर्ववद्वदेत् ।
कुर्यात्पञ्चसु वेगेषु चिकित्सां न ततः परम् ॥ २७ ॥
जलाप्लुता रतिक्षीणा भीता नकुलनिर्जिताः ।
शीतवातातपव्याधिक्षुत्तृष्णाश्रमपीडिताः ॥ २८ ॥
तूर्णं देशान्तरायाता विमुक्तविषकञ्चुकाः ।
कुशौषधीकण्टकवद्ये चरन्ति च काननम् ॥ २९ ॥
देशं च दिव्याध्युषितं सर्पास्तेऽल्पविषा मताः ।
श्मशानचिति[1]चैत्यादौ पञ्चमीपक्षसन्धिषु ॥ ३० ॥
अष्टमीनवमीसन्ध्यामध्यरात्रिदिनेषु च ।
याम्याग्नेयमघाश्लेषाविशाखापूर्वनैर्ऋते ॥ ३१ ॥
नैर्ऋताख्ये मुहूर्ते च दष्टं मर्मसु च त्यजेत् ।
दष्टमात्रः सितास्याक्षः शीर्यमाणशिरोरुहः ॥ ३२ ॥
स्तब्धजिह्वो मुहुर्मूर्च्छन् शीतोच्छ्वासो न जीवति ।
हिध्मा श्वासो वमिः कासो दष्टमात्रस्य देहिनः ॥ ३३ ॥
जायन्ते युगपद्यस्य स हृच्छूली न जीवति ।
फेनं वमति निःसंज्ञः श्यावपादकराननः ॥ ३४ ॥
नासावसादो भङ्गोऽङ्गे[2] विड्भेदः श्लथसन्धिता ।

---

१ चितिः—यज्ञभूमिरिति केचित्. चितिशब्दः पिप्पल—वटादि-वृक्षमूलेषु मृत्पाषाणबद्धबन्धेऽप्युक्तः चरकेन. २ 'विक्लेदः' पा.

विषपीतस्य दृष्टस्य दिग्धेनाभिहतस्य च ॥ ३५ ॥
भवन्त्येतानि रूपाणि सम्प्राप्ते जीवितक्षये ।
न नस्यैश्चेतना तीक्ष्णैर्न क्षतात्क्षतजागमः ॥ ३६ ॥
दण्डाहतस्य नो राजिः प्रयातस्य यमान्तिकम् ।
अतोऽन्यथा तु त्वरया प्रदीप्तागारवह्निवत् ॥ ३७ ॥
रक्षन् कण्ठगतान् प्राणान् विषमाशु शमं नयेत् ।
मात्राशतं विषं स्थित्वा दंशे दष्टस्य देहिनः ॥ ३८ ॥
देहं प्रक्रमते धातून् रुधिरादीन् प्रदूषयत् ।
एतस्मिन्नन्तरे कर्म दंशस्योत्कर्तनादिकम् ॥ ३९ ॥
कुर्याच्छीघ्रं यथा देहे विषवल्ली न रोहति ।
दष्टमात्रो दशेदाशु तमेव पवनाशिनम् ॥ ४० ॥
लोष्टं महीं वा दशनैश्छित्वा चाऽनु ससम्भ्रमम् ।
निष्ठीवेन समालिम्पेद्दंशं कर्णमलेन वा ॥ ४१ ॥
दंशस्योपरि बध्नीयादरिष्टां चतुरङ्गुले ।
क्षौमादिभिर्वेणिकया सिद्धैर्मन्त्रैश्च मन्त्रवित् ॥ ४२ ॥
अम्बुवत्सेतुबन्धेन बन्धेन स्तभ्यते विषम् ।
न वहन्ति सिराश्चाऽस्य विषं बन्धाभिपीडिताः ॥ ४३ ॥
निष्पीड्यानूद्धरेद्दंशं मर्मसन्ध्यगतं तथा ।
न जायते विषावेगो बीजनाशादिवाऽङ्कुरः ॥ ४४ ॥
दंशं मण्डलिनां मुक्त्वा पित्तलत्वादथापरम् ।
प्रतप्तैर्हेमलोहाद्यैर्दहेदाशूल्मुकेन वा ॥ ४५ ॥

१ 'शूल्मुकेन' इति पाठः।

करोति भस्मसारसद्यो वह्निः किं नाम न क्षणात् ।
आचूषेत्पूर्णवक्त्रो वा मृद्भस्मागदगोमयैः ॥ ४६ ॥
प्रच्छायान्तररिष्टायाः मांसलं तु विशेषतः ।
अङ्गं सहैव दंशेन लेपयेदगदैर्मुहुः ॥ ४७ ॥
चन्दनोशीरयुक्तेन सलिलेन च सेचयेत् ।
विषे प्रविसृते विध्येत्सिरां सा परमा क्रिया ॥ ४८ ॥
रक्ते निर्ह्रियमाणे हि कृत्स्नं निर्ह्रियते विषम् ।
दुर्गन्धं सविषं रक्तमग्नौ चटचटायते ॥ ४९ ॥
यथादोषं विशुद्धं च पूर्ववल्लक्षयेदसृक् ।
सिरास्वदृश्यमानासु योज्याः शृङ्गजलौकसः ॥ ५० ॥
शोणितं स्रुतशेषं च प्रविलीनं विषोष्मणा ।
लेपसेकैस्तु बहुशः स्तम्भयेद्भृशशीतलैः ॥ ५१ ॥
अस्कन्ने विषवेगाद्धि मूर्च्छायमदहृद्द्रवाः ।
भवन्ति, तान् जयेच्छीतैर्वीजेच्चारोमहर्षतः ॥ ५२ ॥
स्कन्ने तु रुधिरे सद्यो विषवेगः प्रशाम्यति ।
विषं कर्षति तीक्ष्णत्वाद् हृदयं, तस्य गुप्तये ॥ ५३ ॥
पिबेद् घृतं घृतक्षौद्रमगदं वा घृताप्लुतम् ।
हृदयावरणे चास्य श्लेष्मा ह्युपचीयते ॥ ५४ ॥
प्रवृत्तगौरवोत्क्लेशहृल्लासं वामयेत्ततः ।
द्रवैः काञ्जिककौलत्थतैलमद्यादिवर्जितैः ॥ ५५ ॥
वमनैर्विंशहृद्भिश्च नैवं व्याप्नोति तद्वपुः ।
भुजङ्गदोषप्रकृतिस्थानवेगविशेषतः ॥ ५६ ॥

सुसूक्ष्मं सम्यगालोच्य विशिष्टां चाऽऽचरेत्क्रियाम् ।
सिन्दुवारितमूलानि श्वेता च गिरिकर्णिका ॥ ५७ ॥
पानं दर्वीकरैर्दष्टे नस्यं मधु सशाकलम् ।
कृष्णसर्पेण दष्टस्य लिम्पेद्दंशं हृतेऽसृजि ॥ ५८ ॥
चारटीनाकुलीभ्यां वा तीक्ष्णमूलविषेण वा ।
पानं च क्षौद्रमञ्जिष्ठागृहधूमयुतं घृतम् ॥ ५९ ॥
तण्डुलीयककाश्मर्यकिणिहीगिरिकर्णिकाः ।
मातुलुङ्गी सिता सेलुः पाननस्याञ्जनैर्हितः ॥ ६० ॥
अगदः फणिनां घोरे विषे राजीमतामपि ।
समाः सुगन्धा मृद्वीका श्वेताख्या गजदन्तिका ॥ ६१ ॥
अर्धांशं सौरसं पत्रं कपित्थं बिल्वदाडिमम् ।
सक्षौद्रो मण्डलिविषे विशेषादगदो हितः ॥ ६२ ॥
पञ्चवल्कवरायष्टीनागपुष्पैलवालुकम् ।
जीवकर्षभकौशीरं सितापद्मकसुत्पलम् ॥ ६३ ॥
सक्षौद्रो हिमवान्नाम हन्ति मण्डलिनां विषम् ।
लेपाच्छ्वयथुवीसर्पविस्फोटज्वरदाहहा ॥ ६४ ॥
काश्मर्यवटशुंगाणि जीवकर्षभकौ सिता ।
मञ्जिष्ठा मधुकं चेति दष्टो मण्डलिना पिबेत् ॥ ६५ ॥
वंशत्वग्बीजकटुकापाटलीबीजनागरम् ।
शिरीषबीजातिविषे मूलं गावेधुकं वचा ॥ ६६ ॥
पिष्टो गोवारिणाष्टाङ्गो हन्ति गोनसजं विषम् ।
कटुकातिविषाकुष्ठगृहधूमहरेणुकाः ॥ ६७ ॥

सक्षौद्रव्योषतगरा घ्नन्ति राजीमतां विषम् ।
निखनेत्काण्डचित्राया दंशं यामद्वयं भुवि ॥ ६८ ॥
उद्धृत्य प्रच्छितं सर्पिर्धान्यमृद्भ्यां प्रलेपयेत् ।
पिबेत्पुराणं च घृतं वराचूर्णावचूर्णितम् ॥ ६९ ॥
जीर्णे विरिक्ते भुञ्जीत यवान्नं सूपसंस्कृतम् ।
करवीरार्ककुसुममूललाङ्गलिकाकणाः ॥ ७० ॥
कल्कयेदारनालेन पाठामरिचसंयुताः ।
एष व्यन्तरदष्टानामगदः सार्वकार्मिकः ॥ ७१ ॥
शिरीषपुष्पस्वरसे सप्ताहं मरिचं सितम् ।
भावितं सर्पदष्टानां पाने नस्येऽञ्जने हितम् ॥ ७२ ॥
द्विपलं नतकुष्ठाभ्यां घृतक्षौद्रचतुष्पलम् ।
अपि तक्षकदष्टानां पानमेतत्सुखप्रदम् ॥ ७३ ॥
अथ दर्वीकृतां वेगे पूर्वे विस्राव्य शोणितम् ।
अगदं मधुसर्पिर्भ्यां संयुक्तं त्वरितं पिबेत् ॥ ७४ ॥
द्वितीये वमनं कृत्वा तद्वदेवागदं पिबेत् ।
विषापहैः प्रयुञ्जीत तृतीयेऽञ्जननावने ॥ ७५ ॥
पिबेच्चतुर्थे पूर्वोक्तां यवागूं वमने कृते ।
षष्ठपञ्चमयोः शीतैर्दिग्धं सिक्तमभीक्ष्णशः ॥ ७६ ॥
पाययेद्वमनं तीक्ष्णं यवागूं च विषापहैः ।
अगदं सप्तमे तीक्ष्णं युञ्ज्यादञ्जननस्ययोः ॥ ७७ ॥
कृत्वावगाढं शस्त्रेण मूर्ध्नि काकपदं ततः ।

---

१ 'नस्याञ्जने' इति पाठः.

मांसं सरुधिरं तस्य चर्म वा तत्र निक्षिपेत् ॥ ७८ ॥
तृतीये वमितः पेयां वेगे मण्डलिनां पिबेत् ।
अतीक्ष्णमगदं षष्ठे गणं वा पद्मकादिकम् ॥ ७९ ॥
आद्येऽवगाढं प्रच्छाय वेगे दष्टस्य राजिलैः ।
अलाबुना हरेद्रक्तं पूर्ववच्चागदं पिबेत् ॥ ८० ॥
षष्ठेऽञ्जनं तीक्ष्णतममवपीडं च योजयेत् ।
अनुक्तेषु च वेगेषु क्रियां दर्वीकरोदिताम् ॥ ८१ ॥
गर्भिणीबालवृद्धेषु मृदुं, विध्येत्सिरां न च ।
त्वङ्मनोह्वानिशे वक्रं रसः शार्दूलजो नखः ॥ ८२ ॥
तमालः केसरं शीतं पीतं तण्डुलवारिणा[१] ।
हन्ति सर्वविषाण्येतद्वज्रिवज्रमिवासुरान् ॥ ८३ ॥

बिल्वस्य मूलं सुरसस्य पुष्पं
फलं करञ्जस्य नतं सुराह्वम् ।
फलत्रिकं व्योषनिशाद्वयं च
बस्तस्य मूत्रेण सुसूक्ष्मपिष्टम् ॥ ८४ ॥
भुजङ्गलूतोन्दुरवृश्चिकाद्यै-
र्विषूचिकाजीर्णगरज्वरैश्च ।
आर्तान्नरान् भूतविधर्षितांश्च
स्वस्थीकरोत्यञ्जनपाननस्यैः ॥ ८५ ॥

प्रलेपाद्यैश्च निःशेषं दंशादप्युद्धरेद्विषम् ।
भूयो वेगाय जायेत शेषं दूषीविषाय वा ॥ ८६ ॥

१ 'तन्दुल' इति पाठः.

विषापायेऽनिलं क्रुद्धं स्नेहादिभिरुपाचरेत् ।
तैलमद्यकुलत्थाम्लवर्ज्यैः पवननाशनैः ॥ ८७ ॥
पित्तं पित्तज्वरहरैः कषायस्नेहबस्तिभिः ।
समाक्षिकेण वर्गेण कफमारग्वधादिना ॥ ८८ ॥
सिता वैगन्धिको द्राक्षा पयस्या मधुकं मधु ।
पानं समन्त्रपूताम्बुप्रोक्षणं सान्त्वहर्षणम् ॥ ८९ ॥
सर्पाङ्गाभिहते युञ्ज्यात्तथा शङ्काविषार्दिते ।
कर्केतनं मरकतं वज्रं वारणमौक्तिकम् ॥ ९० ॥
वैडूर्यं गर्दभमणिं पिचुकं विषमूषिकाम् ।
हिमवद्गिरिसम्भूतां सोमराजीं पुनर्नवाम् ॥ ९१ ॥
तथा द्रोणां महाद्रोणां मानसीं सर्पजं मणिम् ।
विषाणि विषशान्त्यर्थं वीर्यवन्ति च धारयेत् ॥ ९२ ॥
छत्री झर्झरपाणिश्च चरेद्रात्रौ विशेषतः ।
तच्छायाशब्दवित्रस्ताः प्रणश्यन्ति भुजङ्गमाः ॥ ९३ ॥"

## सप्तत्रिंशोऽध्यायः ।

अथाऽतः कीटलूतादिविषप्रतिषेधं व्याख्यास्यामः ॥
इति ह स्माहुरात्रेयादयो महर्षयः ।

[ अथ कीटादिविषप्रतिषेधः । ]

"सर्पाणामेव विण्मूत्रशुक्राण्डशवकोथजाः ।
दोषैर्व्यस्तैः समस्तैश्च युक्ताः कीटाश्चतुर्विधाः ॥ १ ॥

१ 'पूताम्बु प्रो' पा. २ 'वैडूर्यग' पा. ३ 'जर्जरपा' पा.

दृष्टस्य कीटैर्वायव्यैर्दंशस्तोदरुजोल्बणः ।
आग्नेयैरल्पसंस्रावो दाहरागविसर्पवान् ॥ २ ॥
पक्वपीलुफलप्रख्यः खर्जूरसदृशोऽथवा ।
कफाधिकैर्मन्दरुजः पक्वोदुम्बरसन्निभः ॥ ३ ॥
स्रावाढ्यः सर्वलिङ्गस्तु विवर्ज्यः सान्निपातिकैः ।
वेगाश्च सर्पवच्छोफो वर्धिष्णुर्विस्तरक्तता ॥ ४ ॥
शिरोक्षिगौरवं मूर्च्छा भ्रमः श्वासोऽतिवेदना ।
सर्वेषां कर्णिका शोफो ज्वरः कण्डूररोचकः ॥ ५ ॥
वृश्चिकस्य विषं तीक्ष्णमादौ दहति वह्निवत् ।
ऊर्ध्वमारोहति क्षिप्रं दंशे पश्चात्तु तिष्ठति ॥ ६ ॥
दंशः सद्योऽतिरुक्श्यावस्तुद्यते स्फुटतीव च ।
ते गवादिशकृत्कोथाद्विग्धदष्टादिकोथतः ॥ ७ ॥
सर्पकोथाच्च सम्भूता मन्दमध्यमहाविषाः ।
मन्दाः पीताः सिताः श्यावा रूक्षकर्बुरमेचकाः ॥ ८ ॥
रोमशा बहुपर्वाणो लोहिताः पाण्डुरोदराः ।
धूम्रोदरास्त्रिपर्वाणो मध्यास्तु कपिलारुणाः ॥ ९ ॥
पिशङ्गाः शबलाश्चित्राः शोणिताभा

महाविषाः ।
अग्न्याभा द्व्येकपर्वाणो रक्तासितसितोदराः ॥ १० ॥
तैर्दष्टः शूनरसनः स्तब्धगात्रो ज्वरार्दितः ।
स्रवन् शोणितं कृष्णमिन्द्रियार्थानसंविदन् ॥ ११ ॥

स्विद्यन् मूर्च्छन् विशुष्कास्यो विह्वलो वेदनातुरः ।
विशीर्यमाणमांसश्च प्रायशो विजहात्यसून् ॥ १२ ॥
उच्चिटिङ्गस्तु वक्त्रेण दशत्यभ्यधिकव्यथः ।
साध्यतो वृश्चिकात्स्तम्भं शेफसो हृष्टरोमताम् ॥ १३ ॥
करोति सेकमङ्गानां दंशः शीताम्बुनेव च ।
उष्ट्रधूमः स एवोक्तो रात्रिचाराच्च रात्रिकः ॥ १४ ॥
वातपित्तोत्तराः कीटाः श्लैष्मिकाः कणभोन्दुराः ।
प्रायो वातोल्बणविषा वृश्चिकाः सोष्ट्रधूमकाः ॥ १५ ॥
यस्य यस्यैव दोषस्य लिङ्गाधिक्यं प्रतर्कयेत् ।
तस्य तस्यौषधैः कुर्याद्विपरीतगुणैः क्रियाम् ॥ १६ ॥
हृत्पीडोर्ध्वानिलस्तम्भः सिरायामोऽस्थिपर्वरुक् ।
घूर्णनोद्वेष्टनं गात्रश्यावता वातिके विषे ॥ १७ ॥
संज्ञानाशोष्णनिश्वासौ हृद्दाहः कटुकास्यता ।
मांसावदरणं शोफो रक्तः पीतश्च पैत्तिके ॥ १८ ॥
छर्द्यरोचकहृल्लासप्रसेकोत्क्लेशपीनसैः ।
सशैत्यमुखमाधुर्यैर्विद्याच्छ्लैष्माधिकं विषम् ॥ १९ ॥
पिण्याकेन व्रणालेपस्तैलाभ्यङ्गश्च वातिके ।
नाडीस्वेदः पुलाकाद्यैर्बृंहणश्च विधिर्हितः ॥ २० ॥
पैत्तिकं स्तम्भयेत्सेकैः प्रदेहैश्चातिशीतलैः ।
लेखनच्छेदनस्वेदवमनैः श्लैष्मिकं जयेत् ॥ २१ ॥
कीटानां त्रिःप्रकाराणां त्रैविध्येन प्रतिक्रिया ।

१ 'बृंहणैश्च' इति पाठः, २ 'त्रिप्रकाराणां' इति पाठः.

स्वेदालेपनसेकांस्तु कोष्णान् प्रायोऽवचारयेत् ॥ २२ ॥
अन्यत्र मूर्च्छितादंशपाकतः कोथतोऽथवा ।
नृकेशाः सर्षपाः पीता गुडो जीर्णश्च धूपनम् ॥ २३ ॥
विषदंष्ट्रस्य सर्वस्य काश्यपः परमब्रवीत् ।
विषघ्नं च विधिं सर्वं कुर्यात्संशोधनानि च ॥ २४ ॥
साधयेत्सर्पवद्दष्टान् विषोग्रैः कीटवृश्चिकैः ।
तण्डुलीयकतुल्यांशां त्रिवृतां सर्पिषा पिबेत् ॥ २५ ॥
याति कीटविषैः कम्पं न कैलास इवानिलैः ।
क्षीरिवृक्षत्वगालेपः शुद्धे कीटविषापहः ॥ २६ ॥
मुक्तालेपो वरः शोफतोददाहज्वरप्रणुत् ।
वचा हिङ्गु विडङ्गानि सैन्धवं गजपिप्पली ॥ २७ ॥
पाठा प्रतिविषा व्योषं काश्यपेन विनिर्मितम् ।
दशाङ्गमगदं पीत्वा सर्वकीटविषं जयेत् ॥ २८ ॥
सद्यो वृश्चिकजं दंशं चक्रतैलेन सेचयेत् ।
विदारिगन्धासिद्धेन कवोष्णेनेतरेण वा ॥ २९ ॥
लवणोत्तमयुक्तेन सर्पिषा वा पुनः पुनः ।
सिञ्चेत्कोष्णारनालेन सक्षीरलवणेन वा ॥ ३० ॥
उपनाहो घृते भृष्टः कल्कोऽजाज्याः ससैन्धवः ।
आदंशं स्वेदितं चूर्णैः प्रच्छाय प्रतिसारयेत् ॥ ३१ ॥
रजनीसैन्धवव्योषशिरीषफलपुष्पजैः ।
मातुलुङ्गाम्लगोमूत्रपिष्टं च सुरसाग्रजम् ॥ ३२ ॥

लेपः सुखोष्णश्च हितः पिण्याको गोमयोऽपि वा ।
पाने सर्पिर्मधुयुतं क्षीरं वा भूरिशर्करम् ॥ ३३ ॥
पारावतशकृत्पथ्यातगरं विश्वभेषजम् ।
बीजपूररसोन्मिश्रः परमो वृश्चिकागदः ॥ ३४ ॥
सशैवलोष्ट्रदंष्ट्रा च हन्ति वृश्चिकजं विषम् ।
हिङ्गुना हरितालेन मातुलुङ्गरसेन च ॥ ३५ ॥
लेपाञ्जनाभ्यां गुटिका परमं वृश्चिकापहा ।
करञ्जार्जुनशेलूनां कट्भ्याः कुटजस्य च ॥ ३६ ॥
शिरीषस्य च पुष्पाणि मस्तुना दंशलेपनम् ।
यो मुह्यति प्रश्वसिति प्रलपत्युग्रवेदनः ॥ ३७ ॥
तस्य पथ्यानिशाकृष्णामञ्जिष्ठातिविषोषणम् ।
सालाबुवृन्तं वार्ताकरसपिष्टं प्रलेपनम् ॥ ३८ ॥
सर्वत्र चोग्रालिविषे पाययेद्दधिसर्पिषी ।
त्रिध्येत्सिरां विदध्याच्च वमनाञ्जननावनम् ॥
उष्णस्निग्धाम्लमधुरं भोजनं चानिलापहम् ॥ ३९ ॥

नागरं गृहकपोतपुरीषं
बीजपूरकरसं हरितालम् ।
सैन्धवं च विनिहन्त्यगदोऽयं
लेपतोऽलिकुलजं विषमाशु ॥ ४० ॥

अन्ते वृश्चिकदष्टानां समुदीर्णे भृशं विषे ।
विषेणालेपयेद्दंशमुच्चिटिङ्गेऽप्ययं विधिः ॥ ४१ ॥

१ 'रसो हरि' इति पाठः.

नागपुरीषच्छत्रं रोहिषमूलं च शेलुतोयेन ।
कुर्याद्गुटिकां लेपाद्वियमलिविषनाशनी श्रेष्ठा ॥ ४२ ॥

अर्कस्य दुग्धेन शिरीषबीजं
त्रिर्भावितं पिप्पलीचूर्णमिश्रम् ।
एषोऽगदो हन्ति विषाणि कीट-
भुजङ्गलूतोऽन्दुरवृश्चिकानाम् ॥ ४३ ॥

शिरीषपुष्पं सकरञ्जबीजं
काश्मीरजं कुष्ठमनःशिले च ।
एषोऽगदो राश्निकवृश्चिकानां
सङ्क्रान्तिकारी कथितो जिनेन ॥ ४४ ॥

[ अथ लूताविषविज्ञानम् ]

कीटेभ्यो दारुणतरा लूताः षोडश ता जगुः ।
अष्टाविंशतिरित्येके ततोऽप्यन्ये तु भूयसीः ॥ ४५ ॥
[1]सहस्ररश्म्यनुचरा वदन्त्यन्ये सहस्रशः ।
बहूपद्रवरूपा तु लूतैकैव विषात्मिका ॥ ४६ ॥
रूपाणि नामतस्तस्या दुर्ज्ञेयान्यतिसङ्करात् ।
नास्ति स्थानव्यवस्था च दोषतोऽतः प्रचक्ष्यते ॥ ४७ ॥

---

१ यदत्र 'सहस्ररश्म्यनुचराः रवेरनुचराः' इत्यरुणदत्तेनोक्तं तत्त्वसङ्गतम्; सूर्यानुचरत्वस्याप्रासङ्गिकत्वात्, किन्तु सहस्रशो रश्मिषु (-तन्तुषु) अनुचरत्वात् पर्यटनात्स शब्दो लूता(ऊर्णनाभिर)परपर्यायिको बोध्य इति सर्वं सुवचम्.

कृच्छ्रसाध्या पृथग्दोषैरसाध्या निचयेन सा ।
तद्दंशः पैत्तिको दाहतृट्स्फोटज्वरमोहवान् ॥ ४८ ॥
भृशोष्मा रक्तपीताभः क्लेदी द्राक्षाफलोपमः ।
श्लैष्मिकः कठिनः पाण्डुः परूषकफलाकृतिः ॥ ४९ ॥
निद्रां शीतज्वरं कासं कण्डूं च कुरुते भृशम् ।
वातिकः परुषः श्यावः पर्वभेदज्वरप्रदः ॥ ५० ॥
तद्विभागं यथास्वं च दोषलिङ्गैर्विभावयेत् ।
असाध्यायां तु हृन्मोहश्वासहिध्माशिरोरुजाः ॥ ५१ ॥
श्वेताः पीताः सिता रक्ताः पिटिकाः श्वयथूद्भवः ।
वेपथुर्वमथुर्दाहस्तृडान्ध्यं वक्रनासता ॥ ५२ ॥
श्यावौष्ठवक्त्रदन्तत्वं पृष्ठग्रीवावभञ्जनम् ।
पक्वजम्बुसवर्णं च दंशात्स्रवति शोणितम् ॥ ५३ ॥
सर्वापि सर्वजा प्रायो व्यपदेशस्तु भूयसा ।
तीक्ष्णमध्यावरत्वेन सा त्रिधा, हन्त्युपेक्षिता ॥ ५४ ॥
सप्ताहेन दशाहेन पक्षेण च परं क्रमात् ।
लूतादंशश्च सर्वोऽपि दद्रुमण्डलसन्निभः ॥ ५५ ॥
सितोऽसितोऽरुणः पीतः श्यावो वा मृदुरुन्नतः ।
मध्ये कृष्णोऽथवा श्यावः पर्यन्ते जालकावृतः ॥ ५६ ॥
विसर्पवांश्छोफयुतस्तप्यते बहुवेदनः ।
ज्वराशुपाकविक्लेदकोथावदरणान्वितः ॥ ५७ ॥
क्लेदेन यत्स्पृशत्यङ्गं तत्राऽपि कुरुते व्रणम् ।

श्वासदंष्ट्राशकृन्मूत्रशुक्रलालानखार्तवैः ॥ ५८ ॥
अष्टाभिरुद्गमत्येषां विषं वक्त्रैर्विशेषतः ।
लूता नाभेर्दशत्यूर्ध्वमूर्ध्वं वाऽधश्च कीटकाः ॥ ५९ ॥
तद्दूषितं च वस्त्रादि देहे पृक्तं विकारकृत् ।
दिनार्धं लक्ष्यते नैव दंशो लूताविषोद्भवः ॥ ६० ॥
सूचीव्यधवदाभाति ततोऽसौ प्रथमेऽहनि ।
अव्यक्तवर्णः प्रचलः किंचित्कण्डूरुजान्वितः ॥ ६१ ॥
द्वितीयेऽभ्युन्नतोऽन्तेषु पिटकैरिव वा चितः ।
व्यक्तवर्णो नतो मध्ये कण्डूमान् ग्रन्थिसन्निभः ॥ ६२ ॥
तृतीये सज्वरो रोमहर्षकृद्रक्तमण्डलः ।
शरावरूपस्तोदाढ्यो रोमकूपेषु सस्रवः ॥ ६३ ॥
महांश्चतुर्थे श्वयथुस्तापश्वासभ्रमप्रदः ।
विकारान् कुरुते तांस्तान् पञ्चमे विषकोपजान् ॥ ६४ ॥
षष्ठे व्याप्नोति मर्माणि सप्तमे हन्ति जीवितम् ।
इति तीक्ष्णं विषं मध्यं हीनं च विभजेदतः ॥ ६५ ॥
एकविंशतिरात्रेण विषं शाम्यति सर्वथा ।

[ अथ लूतादिविषप्रतिषेधः । ]

अथाशु लूतादष्टस्य शस्त्रेणादंशमुद्धरेत् ॥ ६६ ॥
दहेच्च जाम्बवौष्ठाद्यैर्न तु पित्तोत्तरं दहेत् ।
कर्कशं भिन्नरोमाणं मर्मसन्ध्यादिसंश्रितम् ॥ ६७ ॥
प्रसृतं सर्वतो दंशं न छिन्दीत दहेन्न च ।

१ 'सर्वतोदंश' इति पाठः.

लेपयेद्गन्धमगदैर्मधुसैन्धवसंयुतैः ॥ ६८ ॥
सुशीतैः सेचयेच्चानु कषायैः क्षीरिवृक्षजैः ।
सर्वतोऽपहरेद्रक्तं शृङ्गाद्यैः सिरयाऽपि वा ॥ ६९ ॥
सेकालेपास्ततः शीता बोधिश्लेष्मान्तकाक्षकैः ।
फलिनीद्विनिशाक्षौद्रसर्पिर्भिः पद्मकाह्वयः ॥ ७० ॥
अशेषलूताकीटानामगदः सार्वकार्मिकः ।
हरिद्राद्वयपत्तङ्गमञ्जिष्ठानतकेसरैः ॥ ७१ ॥
सक्षौद्रसर्पिः पूर्वस्मादधिकश्चम्पकाह्वयः ।
तद्वद्गोमयनिष्पीडशर्कराघृतमाक्षिकैः ॥ ७२ ॥
अपामार्गमनोह्वालदार्वीध्यामकगैरिकैः ।
नतैलाकुष्ठमरिचयष्ट्याह्वघृतमाक्षिकैः ॥ ७३ ॥
अगदो मन्दरो नाम तथाऽन्यो गन्धमादनः ।
नतरोध्रवचाकट्वीपाठैलापत्रकुङ्कुमैः ॥ ७४ ॥
विषघ्नं बहुदोषेषु प्रयुञ्जीत विशोधनम् ।
यष्ट्याह्वमदनाङ्कोल्लजालिनीसिन्दुवारकाः ॥ ७५ ॥
कफे श्लेष्माम्बुना पीत्वा विषमाशु समुद्धरेत् ।
शिरीषपत्रत्वङ्मूलफलं वाङ्कोल्लमूलवत् ॥ ७६ ॥
विरेचयेच्च त्रिफलानीलिनीत्रिवृतादिभिः ।
निवृत्ते दाहशोफादौ कर्णिकां पातयेद्व्रणात् ॥ ७७ ॥
कुसुम्भपुष्पं गोदन्तः स्वर्णक्षीरी कपोतविट् ।
त्रिवृतासैन्धवं दन्ती कर्णिकापातनं तथा ॥ ७८ ॥

---

१ 'निष्पीडाश्च' इति पाठः. २ 'समुद्वमेत्' इत्यरुणः.

मूलमुत्तरवारुण्या वंशनिर्लेखसंयुतम् ।
तद्वच्च सैन्धवं कुष्ठं दन्ती कटुकरोहिणी ॥ ७९ ॥
राजकोशातकीमूलं किणो वा मथितोद्भवः ।
कर्णिकापातसमये बृंहयेच्च विषापहैः ॥ ८० ॥
स्नेहकार्यमशेषं च सर्पिषैव समाचरेत् ।
विषस्य वृद्धये तैलमग्नेरिव तृणोलुपम् ॥ ८१ ॥

ह्रीबेरवैकङ्कतगोपकन्या-
मुस्ताशमीचन्दनटिण्टुकानि ।
शैवालनीलोत्पलवञ्जयष्टी-
त्वक्पद्मकुलीपमकराठमध्यम् ॥ ८२ ॥
रजनीघनसर्पलोचना-
कणशुण्ठीकणमूलचित्रकाः ।
वरुणागुरुबिल्वपाटली-
पिचुमन्दाभयशेलुकेसरम् ॥ ८३ ॥
बिल्वचन्दननतोत्पलशुण्ठी-
पिप्पलीनिचुलवेतसकुष्ठम् ।
शुक्तिशाकवरपाटलिभार्ङ्गी-
सिन्दुवारकरहाटवराङ्गम् [1] ॥ ८४ ॥

पित्तकफानिललूताः पानाञ्जननस्यलेपसेकेन ।
अगदवरा घ्नन्त्येताः कुमतीरिव वारयन्त्येते ॥ ८५ ॥

---

१ 'नाटवराङ्गम्' इति पाठः.

रोध्रं सेव्यं पद्मकं पद्मरेणुः
कालीयाख्यं चन्दनं यच्च रक्तम्।
कान्तापुष्प दुग्धिनीका मृणालं
लूताः सर्वा घ्नन्ति सर्वक्रियाभिः ॥ ८६ ॥"

---

## अष्टात्रिंशोऽध्यायः।

अथातो मूषिकालर्कविषप्रतिषेधं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः।

[ अथ मूषिकाविषप्रतिषेधः।]

"लालनश्चपलः पुत्रो हसिरश्चिक्किरोऽजिरः।
कषायदन्तः कुलकः कोकिलः कपिलोऽसितः ॥ १ ॥
अरुणः शबलः श्वेतः कपोतः पलितोन्दुरः।
छुच्छुन्दरो रसालाख्यो दशाष्टौ चेति मूषिकाः ॥ २ ॥
शुक्रं पतति यत्रैषां शुक्रदिग्धैः स्पृशन्ति वा।
यदङ्गमङ्गैस्तत्राङ्गे दूषिते पाण्डुतां गते ॥ ३ ॥
ग्रन्थयः श्वयथुः कोथो मण्डलानि भ्रमोऽरुचिः।
शीतज्वरोऽतिरुक् सादो वेपथुः पर्वभेदनम् ॥ ४ ॥
रोमहर्षः स्रुतिर्मूर्च्छा दीर्घकालानुबन्धनम्।
श्लेष्मानुबद्धबह्वाखुपोतकच्छर्दनं सतृट् ॥ ५ ॥
व्यवाय्याखुविषं कृच्छ्रं भूयो भूयश्च कुप्यति।
मूर्च्छाङ्गशोफवैवर्ण्यक्लेदशब्दाश्रुतिज्वराः ॥ ६ ॥

---

१ 'पत्रो' इति पाठः।

शिरोगुरुत्वं लालासृक्छर्दिश्चासाध्यलक्षणम् ।
शूनबस्तिं विवर्णौष्ठमाखुत्राभैर्ग्रन्थिभिश्चितम् ॥ ७ ॥
छुच्छुन्दरसगन्धं च वर्जयेदाखुदूषितम् ।

[ अलर्कादिविषविज्ञानम् । ]

शुनः श्लेष्मोल्बणा दोषाः संज्ञां संज्ञावहाश्रिताः ॥ ८ ॥
मुष्णन्तः कुर्वते क्षोभं धातूनामतिदारुणम् ।
लालावानन्धबधिरः सर्वतः सोऽभिधावति ॥ ९ ॥
स्रस्तपुच्छहनुस्कंधः शिरोदुःखी नताननः ।
दंशस्तेन विदष्टस्य सुप्तः कृष्णं क्षरत्यसृक् ॥ १० ॥
हृच्छिरोरुग्ज्वरस्तम्भतृष्णामूर्च्छोद्भवोऽनु च ।
अनेनान्येऽपि बोद्धव्या व्याला दंष्ट्राप्रहारिणः ॥ ११ ॥
कण्डूनिस्तोदवैवर्ण्यसुप्तिक्लेदज्वरभ्रमाः ।
विदाहरागरुक्पाकशोथग्रन्थिविकुञ्चनम् ॥ १२ ॥
दंशावदरणं स्फोटाः कर्णिका मण्डलानि च ।
सर्वत्र सविषे लिङ्गं विपरीतं तु निर्विषे ॥ १३ ॥
दष्टो येन तु तच्चेष्टा रुतं कुर्वन्विनश्यति ।
पश्यंस्तमेव चाकस्मादादर्शसलिलादिषु ॥ १४ ॥
योऽद्भ्यस्त्रस्येददष्टोऽपि शब्दसंस्पर्शदर्शनैः ।
जलसंत्रासनामानं दष्टं तमपि वर्जयेत् ॥ १५ ॥
आशुना दष्टमात्रस्य दंशं काण्डेन दाहयेत् ।
दर्पणेनाथवा तीव्ररुजा स्यात्कर्णिकाऽन्यथा ॥ १६ ॥

---

१ 'ज्वरस्तम्भरतृष्णा' इति पाठः.

दग्धं विस्रावयेद्दंशं प्रच्छितं च प्रलेपयेत् ।
शिरीषरजनीवक्रकुङ्कुमामृतवल्लिभिः ॥ १७ ॥
अगारधूममञ्जिष्ठारजनीलवणोत्तमैः ।
लेपो जयत्याखुविषं कर्णिकायाश्च पातनः ॥ १८ ॥
ततोऽम्लैः क्षालयित्वा तु तोयैरनु च लेपयेत् ।
पालिन्दीश्वेतकटभीबिल्वमूलगुडूचिभिः ॥ १९ ॥
अन्यैश्च विषशोफघ्नैः सिरां वा मोक्षयेद् द्रुतम् ।
छर्दनं नीलिनीक्वाथः शुकाख्याङ्कोल्लयोरपि ॥ २० ॥
कोशातक्याः शुकाख्यायाः फलं जीमूतकस्य च ।
मदनस्य च सञ्चूर्ण्य दध्ना पीत्वा विषं वमेत् ॥ २१ ॥
वचामदनजीमूतकुष्ठं वा मूत्रपेषितम् ।
पूर्वकल्पेन पातव्यं सर्वोन्दुरविषापहम् ॥ २२ ॥
विरेचनं त्रिवृन्नीलीत्रिफलाकल्क इष्यते ।
अञ्जनं गोमयरसो व्योषसूक्ष्मरजोन्वितः ॥ २३ ॥
कपित्थगोमयरसो मधुमानवलेहनम् ।
तण्डुलीयकमूलेन सिद्धं पाने हितं घृतम् ॥ २४ ॥
द्विनिशाकटभीरक्तायष्ट्याह्वैर्वाऽमृतान्वितैः ।
आस्फोतमूलसिद्धं वा पञ्चकापित्थमेव वा ॥ २५ ॥
सिन्दुवारनतं शिग्रुबिल्वमूलं पुनर्नवा ।
वचाश्वदंष्ट्राजीमूतमेषां क्वाथं समाक्षिकम् ॥ २६ ॥
पिबेच्छाल्योदनं दध्ना भुञ्जानो मूषिकार्दितः ।

---

१ 'प्रच्छिन्नं च' इति पाठः. २ 'त्वाऽनु तो' इत्यरुणः.

तक्रेण शरपुङ्खाया बीजं सञ्चूर्ण्य वा पिबेत् ॥ २७ ॥
अङ्कोल्लमूलकल्को वा बस्तमूत्रेण कल्कितः ।
पानालेपनयोर्युक्तः सर्वाखुविषनाशनः ॥ २८ ॥
कपित्थमध्यतिलकतिलाङ्कोल्लजटाः पिबेत् ।
गवां मूत्रेण पयसा मञ्जरीं तिलकस्य वा ॥ २९ ॥
अथवा सैर्यकान्मूलं सक्षौद्रं तण्डुलाम्बुना ।
कटुकालाबुविन्यस्तं पीत वाम्बु निशोषितम् ॥ ३० ॥
सिन्दुवारस्य मूलानि बिडालास्थि विषं नतम् ।
जलपिष्टोऽगदो हन्ति नस्याद्यैराखुजं विषम् ॥ ३१ ॥
सशेषं मूषिकविषं प्रकुप्यत्यभ्रदर्शने ।
यथायथं वा कालेषु दोषाणां वृद्धिहेतुषु ॥ ३२ ॥
तत्र सर्वं यथावस्थं प्रयोज्याः स्युरुपक्रमाः ।
यथास्वं ये च निर्दिष्टास्तथा दूषीविषापहाः ॥ ३३ ॥

[ अथालर्कविषप्रतिषेधः । ]

दंशं त्वलर्कदष्टस्य दग्धमुष्णेन सर्पिषा ।
प्रदिह्यादगदैस्तैस्तैः पुराणं च घृतं पिबेत् ॥ ३४ ॥
अर्कक्षीरयुतं चाऽस्य योज्यमाशु विरेचनम् ।
अङ्कोल्लोत्तरमूलाम्बु त्रिफलं सहविःपलम् ॥ ३५ ॥
पिबेत्सधत्तूरफलां श्वेतां वाऽपि पुनर्नवाम् ।
ऐकध्यं पलकं तैलं रूपिकायाः[1] पयो गुडः ॥ ३६ ॥
भिनत्ति विषमालर्कं घनवृन्दमिवानिलः ।

---

१ 'रूषिकायाः' इत्यरुणः.

समन्त्रं सौषधीरत्नं स्नपनं च प्रयोजयेत् ॥ ३७ ॥
चतुष्पाद्भिर्द्विपाद्भिर्वा नखदन्तपरिक्षतम् ।
शूयते पच्यते रागज्वरस्रावरुजान्वितम् ॥ ३८ ॥
सोमवल्कोऽश्वकर्णश्च गोजिह्वा हंसपादिका ।
रजन्यौ गैरिकं लेपो नखदन्तविषापहः ॥ ३९ ॥"

[ इति विषतन्त्रं षष्ठं समाप्तम् । ]

## एकोनचत्वारिंशोऽध्यायः ।

अथाऽतो रसायनाध्यायं व्याख्यास्यामः ।

इति ह स्माहुरात्रेयादयो महर्षयः ।

"दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः ।
प्रभावर्णस्वरौदार्यं देहेन्द्रियबलोदयम् ॥ १ ॥
वाक्सिद्धिं वृषतां कान्तिमवाप्नोति रसायनात् ।
लाभोपायो हि शस्तानां रसादीनां रसायनम् ॥ २ ॥
पूर्वे वयसि मध्ये वा तत्प्रयोज्यं जितात्मनः ।
स्निग्धस्य स्रुतरक्तस्य विशुद्धस्य च सर्वथा ॥ ३ ॥
अविशुद्धे शरीरे हि युक्तो रासायनो विधिः ।
वाजीकरो वा मलिने वस्त्रे रङ्ग इवाफलः ॥ ४ ॥
रसायनानां द्विविधं प्रयोगमृषयो विदुः ।
कुटीप्रावेशिकं मुख्यं वातातपिकमन्यथा ॥ ५ ॥
निर्वाते निर्भये हर्म्ये प्राप्योपकरणे पुरे ।

त्रिवृद्यां शुभे देशे त्रिगर्भां सूक्ष्मलोचनाम् ॥ ६ ॥
धूमातपरजोव्यालस्त्रीमूर्खाद्यविलङ्घिताम् ।
सज्जवैद्योपकरणां सुमृष्टां कारयेत्कुटीम् ॥ ७ ॥
अथ पुण्येऽह्नि सम्पूज्य पूज्यांस्तां प्रविशेच्छुचिः ।
तत्र संशोधनैः शुद्धः सुखी जातबलः पुनः ॥ ८ ॥
ब्रह्मचारी धृतियुतः श्रद्दधानो जितेन्द्रियः ।
दानशीलदयासत्यव्रतधर्मपरायणः ॥ ९ ॥
देवतानुस्मृतियुतः[1] युक्तस्वप्नप्रजागरः ।
प्रियौषधः पेशलवाक् प्रारभेत रसायनम् ॥ १० ॥
हरीतकीमामलकं सैन्धवं नागरं वचाम् ।
हरिद्रां पिप्पलीं वेल्लं गुडं चोष्णाम्बुना पिबेत् ॥ ११ ॥
स्निग्धः स्विन्नो नरः पूर्वं तेन साधु विरिच्यते ।
ततः शुद्धशरीराय कृतसंसर्जनाय च ॥ १२ ॥
त्रिरात्रं पञ्चरात्रं वा सप्ताहं वा घृतान्वितम् ।
दद्याद्यावकमाशुद्धेः पुराणशकृतोऽथवा ॥ १३ ॥
इत्थं संस्कृतकोष्ठस्य रसायनमुपाहरेत् ।
यस्य यद्यौगिकं पश्येत्सर्वमालोच्य सात्म्यवित् ॥ १४ ॥
पथ्यासहस्रं त्रिगुणधात्रीफलसमन्वितम् ।
पञ्चानां पञ्चमूलानां सार्धं पलशतद्वयम् ॥ १५ ॥
जले दशगुणे पक्त्वा दशभागस्थिते रसे ।
आपोथ्य कृत्वा व्यस्थीनि विजयामलकान्यथ ॥ १६ ॥

---

१ 'स्मृतौ युक्तो यु' इति पाठः.

विनीय तस्मिन्निर्यूहे योजयेत्कुडवांशकम् ।
त्वगेलामुस्तरजनीपिप्पल्यगुरुचन्दनम् ॥ १७ ॥
मण्डूकपर्णीकनकशङ्खपुष्पीवचाप्लवम् ।
यष्ट्याह्वयं विडङ्गं च चूर्णितं तुलयाधिकम् ॥ १८ ॥
सितोपलार्धभारं च पात्राणि त्रीणि सर्पिषः ।
द्वे च तैलात्पचेत्सर्वं तदग्नौ लेहतां गतम् ॥ १९ ॥
अवतीर्णं हिमं युञ्ज्याद्विंशैः क्षौद्रशतैस्त्रिभिः ।
ततः खजेन मथितं निदध्याद्घृतभाजने ॥ २० ॥
या नोपरुन्ध्यादाहारमेकं मात्राऽस्य सा स्मृता ।
षष्टिकः पयसा चाऽत्र जीर्णे भोजनमिष्यते ॥ २१ ॥
वैखानसा वालखिल्यास्तथा चाऽन्ये तपोधनाः ।
ब्रह्मणा विहितं धन्यमिदं प्राश्य रसायनम् ॥ २२ ॥
तन्द्राश्रमक्लमवलीपलितामयवर्जिताः ।
मेधास्मृतिबलोपेता बभूवुरमितायुषः ॥ २३ ॥
अभयामलकसहस्रं निरामयं पिप्पलीसहस्रयुतम् ।
तरुणपलाशक्षारद्रवीकृतं स्थापयेन्माण्डे ॥ २४ ॥
उपयुक्ते च क्षारे च च्छायासंशुष्कचूर्णितं योज्यम् ।
पादांशेन सितायाश्चतुर्गुणाभ्यां मधुघृताभ्याम् ॥ २५ ॥
तद्घृतकुम्भे भूमौ निधाय षण्माससंस्थमुद्धृत्य ।
प्राह्णे प्राश्य यथानलमुचिताहारो भवेत्सततम् ॥ २६ ॥
इत्युपयुञ्ज्याऽशेषं वर्षशतमनामयो जरारहितः ।

जीवति बलपुष्टिवपुःस्मृतिमेधाद्यन्वितो विशेषेण ॥ २७ ॥
नीरुजार्द्रपलाशस्य छिन्न शिरसि तत्क्षतम् ।
अन्तर्द्विहस्तं गम्भीरं पूर्यमामलकैर्नवैः ॥ २८ ॥
आमूलं वेष्टितं दर्भैः पद्मिनीपङ्कलेपितम् ।
आदीप्य गोमयैर्वन्यैर्निर्वाते स्वेदयेत्ततः ॥ २९ ॥

स्विन्नानि तान्यामलकानि तृप्त्या
खादेन्नरः क्षौद्रघृतान्वितानि ।
क्षीरं शृतं चाऽनु पिबेत्प्रकामं
तेनैव वर्तेत च मासमेकम् ॥ ३० ॥
वर्ज्यानि वर्ज्यानि च तत्र यत्ना-
त्स्पृश्यं च शीताम्बु न पाणिनाऽपि ।
एकादशाहेऽस्य ततो व्यतीते
पतन्ति केशा दशना नखाश्च ॥ ३१ ॥
अथाल्पकैरेव दिनैः सुरूपः
स्त्रीष्वक्षयः कुञ्जरतुल्यवीर्यः ।
विशिष्टमेधाबलबुद्धिसत्त्वो
भवत्यसौ वर्षसहस्रजीवी ॥ ३२ ॥

दशमूलबलामुस्तजीवकर्षभकोत्पलम् ।
पर्ण्यौ पिप्पलीश्रृङ्गीमेदातामलकीत्रुटिः ॥ ३३ ॥
जीवन्ती जोङ्गकं द्राक्षा पौष्करं चन्दनं शठी ।
पुनर्नवर्द्धिकाकोलीकाकनासामृताह्वयाः ॥ ३४ ॥

विदारीवृषमूलं च तदेकध्यं पलोन्मितम् ।
जलद्रोणे पचेत्पञ्चधात्रीफलशतानि च ॥ ३५ ॥
पादशेषं रसं तस्माद्यस्थीन्यामलकानि च ।
गृहीत्वा भर्जयेत्तैलघृताद्द्वादशभिः पलैः ॥ ३६ ॥
मत्स्यण्डिकातुलार्धेन युक्तं तल्लेहवत्पचेत् ।
स्नेहार्धं मधु सिद्धे तु तवक्षीर्याश्चतुःपलम् ॥ ३७ ॥
पिप्पल्या द्विपलं दद्याच्चतुर्जातं कणार्धिकम्[1] ।
अतोऽवलेहयेन्मात्रां कुटीस्थः पथ्यभोजनः ॥ ३८ ॥
इत्येष च्यवनप्राशो, यं प्राश्य[2] च्यवनो मुनिः ।
जराजर्जरितोऽप्यासीन्नारीनयननन्दनः ॥ ३९ ॥
कासं श्वासं ज्वरं शोषं हृद्रोगं वातशोणितम् ।
मूत्रशुक्राश्रयान् दोषान् वैस्वर्यं च व्यपोहति ।
बालवृद्धक्षतक्षीणकृशानामङ्गवर्धनः ॥ ४० ॥

मेधां स्मृतिं कान्तिमनामयत्व-
मायुःप्रकर्षं पवनानुलोम्यम् ।
स्त्रीषु प्रहर्षं बलमिन्द्रियाणा-
मग्नेश्च कुर्याद्विधिनोपयुक्तः ॥ ४१ ॥

मधुकेन तवक्षीर्या पिप्पल्या सिन्धुजन्मना ।
पृथग्लोहैः सुवर्णेन वचया मधुसर्पिषा ॥ ४२ ॥
सितया वा समा युक्ता समायुक्ता रसायनम् ।
त्रिफला सर्वरोगघ्नी मेधायुःस्मृतिबुद्धिदा ॥ ४३ ॥

---

१ 'कणाधितम्' इति पाठः. २ 'प्राश्यो यं' इति पाठः.

मण्डूकपर्ण्याः स्वरसं यथाग्नि
क्षीरेण यष्टीमधुकस्य चूर्णम् ।
रसं गुडूच्याः सहमूलपुष्प्याः
कल्कं प्रयुञ्जीत च शङ्खपुष्प्याः॥ ४४ ॥
आयुःप्रदान्यामयनाशनानि
बलाग्निवर्णस्वरवर्धनानि ।
मेध्यानि चैतानि रसायनानि
मेध्या विशेषेण तु शङ्खपुष्पी ॥ ४५ ॥
नलदं कटुरोहिणी पयस्या
मधुकं चन्दनसारिवोग्रगन्धाः ।
त्रिफला कटुकत्रयं हरिद्रे
सपटोलं लवणं च तैः सुपिष्टैः ॥ ४६ ॥
त्रिगुणेन रसेन शङ्खपुष्प्याः
सपयस्कं घृतनल्वणं विपाकम् ।
उपयुज्य भवेज्जडोऽपि वाग्मी
श्रुतधारी प्रतिभानवानरोगः ॥ ४७ ॥
पेष्यैर्मृणालबिसकेसरपत्रबीजैः
सिद्धं सहेमशकलं पयसा च सर्पिः ।
पद्मारविन्दमिति तत्प्रथितं पृथिव्यां
प्रभ्रष्टपौरुषबलप्रतिभैर्निषेव्यम् ॥ ४८ ॥

यस्मालकुन्ददलकेसरवह्निपकं
नीलोत्पलस्य तदपि प्रथितं द्वितीयम् ।
सर्पिश्चतुःकुवलयं सहिरण्यपत्रं
मेध्यं गवामपि भवेत्किमु मानुषाणाम् ॥४९॥
आर्द्रावचासैन्धवशङ्खपुष्पी-
मत्स्याक्षकब्रह्मसुवर्चलेन्द्र्यः ।
वैदेहिका च त्रियवाः पृथक् स्यु-
र्यवा सुवर्णस्य तिलो विषस्य ॥ ५० ॥
सर्पिषश्च पलमेकतः एत-
द्योजयेत्परिणते च घृताढ्यम् ।
भोजनं समधु वत्सरमेवं
शीलयन्नधिकधीस्मृतिमेधः ॥ ५१ ॥
अतिक्रान्तजराव्याधितन्द्रालस्यश्रमक्लमः ।
जीवत्यब्दशतं पूर्णं श्रीतेजःकान्तिदीप्तिमान् ॥ ५२ ॥
विशेषतः कुष्ठकिलासगुल्म-
विषज्वरोन्मादगरोदराणि ।
अथर्वमन्त्रादिकृताश्च कृत्याः
शाम्यन्त्यनेनातिबलाश्च वाताः ॥ ५३ ॥
शरन्मुखे नागबलां पुष्ययोगे समुद्धरेत् ।
अक्षमात्रं ततो मूलाच्चूर्णितात्पयसा पिबेत् ॥ ५४ ॥

लिह्यान्मधुघृताभ्यां वा क्षीरवृत्तिरनन्नभुक् ।
एवं वर्षप्रयोगेण जीवेद्वर्षशतं बली ॥ ५५ ॥

फलोन्मुखो गोक्षुरकः समूल-
श्छायाविशुष्कः सुविचूर्णिताङ्गः ।
सुभावितः स्वेन रसेन तस्मा-
न्मात्रां परां प्रासृतिकीं पिबेद्यः ॥ ५६ ॥
क्षीरेण तेनैव च शालिमश्नन्
जीर्णे भवेत्स द्वितुलोपयोगात् ।
शक्तः सुरूपः सुभगः शतायुः
कामी ककुद्मानिव गोकुलस्थः ॥ ५७ ॥

वाराहीकन्दमार्द्रार्द्रं क्षीरेण क्षीरपः पिबेत् ।
मासं निरन्नो मासं च क्षीराज्ञादो जरां जयेत् ॥ ५८ ॥
तत्कन्दश्लक्ष्णचूर्णं वा स्वरसेन सुभावितम् ।
घृतक्षौद्रप्लुतं लिह्यात्तत्पक्वं वा घृतं पिबेत् ॥ ५९ ॥
तद्वद्विदार्यतिबलाबलामधुकवायसीः ।
श्रेयसी श्रेयसी युक्ता पथ्याधात्रीस्थिरामृताः ॥ ६० ॥
मण्डूकीशङ्खकुसुमावाजिगन्धाशतावरीः ।
उपयुञ्जीत धीमेधावयःस्थैर्यबलप्रदाः ॥ ६१ ॥
यथास्व चित्रकः पुष्पैर्ज्ञेयः पीतसितासितैः ।
यथोत्तरं स गुणवान् विधिना च रसायनम् ॥ ६२ ॥
छायाशुष्कं ततो मूलं मासं चूर्णीकृतं लिहन् ।

---

१ 'स मेधावी वयः' इति पाठः.

सर्पिषा मधुसर्पिर्भ्यां पिबन् वा पयसा यतिः ॥ ६३ ॥
अम्भसा वा हिताश्नाशी शतं जीवति नीरुजः ।
मेधावी बलवान् कान्तो वपुष्मान् दीप्तपावकः ॥ ६४ ॥
तैलेन लीढो मासेन वातान् हन्ति सुदुस्तरान् ।
मूत्रेण श्वित्रकुष्ठानि पीतस्तक्रेण पायुजान् ॥ ६५ ॥
भल्लातकानि पुष्टानि धान्यराशौ निधापयेत् ।
ग्रीष्मे सङ्गृह्य हेमन्ते स्वादुस्निग्धहिमैर्वपुः ॥ ६६ ॥
संस्कृत्य तान्यष्टगुणे सलिलेऽष्टौ विपाचयेत् ।
अष्टांशशिष्टं तत्क्वाथं सक्षीरं शीतलं पिबेत् ॥ ६७ ॥
वर्धयेत्प्रत्यहं चानु तत्रैकैकमरुष्करम् ।
सप्तरात्रत्रयं यावत् त्रीणि त्रीणि ततः परम् ॥ ६८ ॥
आचत्वारिंशतस्तानि ह्रासयेद्वृद्धिवत्ततः ।
सहस्रमुपयुञ्जीत सप्ताहैरिति सप्तभिः ॥ ६९ ॥
यन्त्रितात्मा घृतक्षीरशालिषष्टिकभोजनः ।
तद्वत्त्रिगुणितं कालं प्रयोगान्तेऽपि चाचरेत् ॥ ७० ॥
आशिषो लभते पूर्वा वह्नेर्दीप्तिं विशेषतः ।
प्रमेहकृमिकुष्ठार्शोमेदोदोषविवर्जितः ॥ ७१ ॥
पिष्टस्वेदनमरुजैः पूर्णं भल्लातकैर्विजर्जरितैः ।
भूमिनिखाते कुम्भे प्रतिष्ठितं कृष्णमृल्लिप्तम् ॥ ७२ ॥
परिवारितं समन्तात्पचेत्ततो गोमयाग्निना मृदुना ।

---

१ 'लभतेऽपूर्वा' इत्यरुणः.

तत्स्वरसो यश्चयवते गृह्णीयात्तं दिनेऽन्यस्मिन् ॥ ७३ ॥
अमुमुपयुज्य स्वरसं मध्वष्टमभागिकं द्विगुणसर्पिः ।
पूर्वविधियन्त्रितात्मा प्राप्नोति गुणान्स तानेव ॥ ७४ ॥
पुष्टानि पाकेन परिच्युतानि
भल्लातकान्याढकसम्मितानि ।
घृष्टेष्टिकाचूर्णकणैर्जलेन
प्रक्षाल्य संशोष्य च मारुतेन ॥ ७५ ॥
जर्जराणि विपचेज्जलकुम्भे
पादशेषघृतगालितशीते ।
तद्रसं पुनरपि श्रपयेत
क्षीरकुम्भसहितं चरणस्थे ॥ ७६ ॥
सर्पिः पक्वं तेन तुल्यप्रमाणं
युञ्ज्यात्स्वेच्छं शर्कराया रजोभिः ।
एकीभूतं तत्खजक्षोभणेन
स्थाप्यं धान्ये सप्तरात्रं सुगुप्तम् ॥ ७७ ॥
तममृतरसपाकं यः प्रगे प्राशमश्नन्
अनु पिबति यथेष्टं वारि दुग्धं रसं वा ।
स्मृतिमतिबलमेधासत्त्वसारैरुपेतः
कनकनिचयगौरः सोऽश्नुते दीर्घमायुः ॥ ७८ ॥
द्रोणेऽम्भसां[1] व्रणकृतां त्रिशताद्विपक्वात्

---

१ 'म्भसो व्र' इति पाठः.

काथाढके पलसमैस्तिलतैलपात्रम् ।
निक्काविषाद्वयवरागिरिजन्मताक्ष्यैः
सिद्धं परं निखिलकुष्ठनिबर्हणाय ॥ ७९ ॥
सहामलकशुक्तिभिर्दधिसरेण तैलेन वा
गुडेन पयसा घृतेन यवसक्तुभिर्वा सह ।
तिलेन सह माक्षिकेण पललेन सूपेन वा
वपुष्करमरुष्करं परममेध्यमायुष्करम् ॥ ८० ॥

भल्लातकानि तीक्ष्णानि पाकीन्यग्निसमानि च ।
भवन्त्यमृतकल्पानि प्रयुक्तानि यथाविधि ॥ ८१ ॥
कफजो न स रोगोऽस्ति न विबन्धोऽस्ति कश्चन ।
यं न भल्लातकं हन्याच्छीघ्रमग्निबलप्रदम् ॥ ८२ ॥
वातातपविधानेऽपि विशेषेण विवर्जयेत ।
कुलत्थदधिसूक्तानि तैलाभ्यङ्गाग्निसेवनम् ॥ ८३ ॥
वृक्षास्तुवरका नाम पश्चिमार्णवतीरजाः ।
वीचीतरङ्गविक्षोभमारुतोद्धूतपल्लवाः[1] ॥ ८४ ॥
तेभ्यः फलान्याददीत सुपक्कान्यम्बुदागमे ।
मज्जा फलेभ्यश्चादाय शोषयित्वाऽवचूर्ण्य च ॥ ८५ ॥
तिलवत्पीडयेद्द्रोण्यां क्काथयेद्वा कुसुम्भवत् ।
तत्तैलं [2]संहृतं भूयः पचेदासलिलक्षयात् ॥ ८६ ॥
अवतार्य करीषे च पक्षमात्रं निधापयेत् ।
स्निग्धस्विन्नो हृतमलः पक्षादुद्धृत्य ततः ॥ ८७ ॥

---

१ 'मारुतोद्भूत' इति क्वचित्. २ 'संसृतं' 'सम्भृतं' इति पाठौ.

चतुर्थभक्तान्तरितः प्रातः पाणितलं पिबेत् ।
मन्त्रेणानेन पूतस्य तैलस्य दिवसे शुभे ॥ ८८ ॥
"मंजम्मार महावीर्य सर्वान् धातून् विशोधय ।
शङ्खचक्रगदापाणिस्त्वामाज्ञापयतेऽच्युतः ॥ ८९ ॥"
तेनास्योर्ध्वमधस्ताच्च दोषा यान्त्यसकृत्ततः ।
सायमस्नेहलवणां यवागूं शीतलां पिबेत् ॥ ९० ॥
पञ्चाहानि पिबेत्तैलमित्थं वर्ज्यानि वर्जयेत् ।
पक्षं मुद्गरसान्नाशी सर्वकुष्ठैर्विमुच्यते ॥ ९१ ॥
तदेव खदिरक्वाथे त्रिगुणे साधु साधितम् ।
निहितं पूर्ववत्पक्षं पिबेन्मासं सुयन्त्रितः ॥ ९२ ॥
तेनाभ्यक्तशरीरश्च कुर्वन्नाहारमीरितम् ।
अनेनाशु प्रयोगेण साधयेत्कुष्ठिनं नरम् ॥ ९३ ॥
सर्पिर्मधुयुतं पीतं तदेव खदिराद्विना ।
पक्षं मांसरसाहारं करोति द्विशतायुषम् ॥ ९४ ॥
तदेव नस्ये पञ्चाशद्दिवसानुपयोजितम् ।
वपुष्मन्तं श्रुतधरं करोति त्रिशतायुषम् ॥ ९५ ॥
पञ्चाष्टौ सप्त दश वा पिप्पलीर्मधुसर्पिषा ।
रसायनगुणान्वेषी समामेकां प्रयोजयेत् ॥ ९६ ॥
तिस्रस्तिस्रश्च पूर्वाह्णे भुक्त्वाग्रे भोजनस्य च ।
पिप्पल्यः किंशुकक्षारभाविता घृतभर्जिताः ॥ ९७ ॥
प्रयोज्या मधुसम्मिश्रा रसायनगुणैषिणा ।

---

१ 'मज्जासार' इति पाठः. २ 'स्तिलस्तु पू' इति पाठः.

क्रमवृद्ध्या दशाहानि दश पैप्पलिकं दिनम् ॥ ९८ ॥
वर्धयेत्पयसा सार्धं तथैवापनयेत्पुनः ।
जीर्णौषधश्च भुञ्जीत षष्टिकं क्षीरसर्पिषा ॥ ९९ ॥
पिप्पलीनां सहस्रस्य प्रयोगोऽयं रसायनम् ।
पिष्टास्ता बलिभिः पेयाः श्रृता मध्यबलैर्नरैः ॥ १०० ॥
तद्वच्च छागदुग्धेन द्वे सहस्रे प्रयोजयेत् ।
एभिः प्रयोगैः पिप्पल्यः कासश्वासगलग्रहान् ॥ १०१ ॥
यक्ष्ममेहग्रहण्यर्शःपाण्डुत्वविषमज्वरान् ।
घ्नन्ति शोफं वमिं हिध्मां प्लीहानं वातशोणितम् ॥१०२॥

बिल्वार्धमात्रेण च पिप्पलीनां
　पात्रं प्रलिम्पेत्पयसो निशायाम् ।
प्रातः पिबेत्तत्सलिलाञ्जलिभ्यां
　वर्षं यथेष्टाशनपानचेष्टः ॥ १०३ ॥
शुण्ठीविडङ्गत्रिफलागुडूची-
　यष्टीहरिद्रातिबलाबलाश्च ।
मुस्तासुराह्वागुरुचित्रकाश्च
　सौगन्धिकं पङ्कजमुत्पलानि ॥ १०४ ॥
धवाश्वकर्णासनवाकपत्र-
　सारास्तथा पिप्पलिवत्प्रयोज्याः ।
लोहोपलिप्ताः पृथगेव जीवे-
त्समाः शतं व्याधिजराविमुक्तः ॥ १०५ ॥

क्षीराञ्जलिभ्यां च रसायनानि
युक्तान्यमून्यायसलेपनानि ।
कुर्वन्ति पूर्वोक्तगुणप्रकर्ष-
मायुःप्रकर्षं द्विगुणं ततश्च ॥ १०६ ॥
असनखदिरयूषैर्भावितां सोमराजीं
मधुघृतशिखिपथ्यालोहचूर्णैरुपेताम् ।
शरदमवलिहानः पारिणामान् विकारान्
जयति मितहिताशी तद्वदाहारजातान् ॥ १०७ ॥
तीव्रेण कुष्ठेन परीतमूर्ति-
र्यः सोमराजीं नियमेन खादेत् ।
संवत्सरं कृष्णतिलद्वितीयां
स सोमराजीं वपुषाऽतिशेते ॥ १०८ ॥
ये सोमराज्या वितुषीकृताया-
श्चूर्णैरुपेतात्पयसः सुजातात् ।
उद्धृत्य सारं मधुना लिहन्ति
तक्रं तदेवानुपिबन्ति चान्ते ॥ १०९ ॥
कुष्ठिनः कुथ्यमानाङ्गास्ते जाताङ्गुलिनासिकाः ।
भान्ति वृक्षा इव पुनः प्ररूढनवपल्लवाः ॥ ११० ॥
शीतवातहिमदग्धतनूनां
स्तब्धभुग्नकुटिलव्यथितास्थ्नाम् ।

१ 'विकारांस्त्यजन्ति' इत्यरुणः.

भेषजस्य पवनोपहतानां
वक्ष्यते विधिरतो लशुनस्य ॥ १११ ॥
राहोरमृतचौर्येण लूनाद्ये पतिता गलात् ।
अमृतस्य कणा भूमौ ते रसोनत्वमागताः ॥ ११२ ॥
द्विजा नाश्नन्ति तमतो दैत्यदेहसमुद्भवम् ।
साक्षादमृतसम्भूतेर्ग्रामणीः स रसायनम् ॥ ११३ ॥
शीलयेल्लशुनं शीते वसन्तेऽपि कफोल्बणः ।
घनोदयेऽपि वातार्तः सदा वा ग्रीष्मलीलया ॥ ११४ ॥
स्निग्धशुद्धतनुः शीतमधुरोपस्कृताशयः ।
तदुत्तंसावतंसाभ्यां चर्चितानुचराजिरः ॥ ११५ ॥
तस्य कन्दान् वसन्तान्ते हिमवच्छकदेशजान् ।
अपनीतत्वचो रात्रौ[1] तिमयेन्मदिरादिभिः ॥ ११६ ॥
तत्कल्कस्वरसं[2] प्रातः शुचितान्तवपीडितम् ।
मदिरायाः सुरूढायास्त्रिभागेन समन्वितम् ॥ ११७ ॥
मद्यस्यान्यस्य तैलस्य मस्तुनः काञ्जिकस्य वा ।
तत्काल एव वा युक्तं युक्तमालोच्य मात्रया ॥ ११८ ॥
तैलसर्पिर्वसामज्जक्षीरमांसरसैः पृथक् ।
क्वाथेन वा यथाव्याधि रसं केवलमेव वा ॥ ११९ ॥
पिबेद्गण्डूषमात्रं प्राक् कण्ठनाडीविशुद्धये ।
प्रततं स्वेदनं चानु वेदनायां प्रशस्यते ॥ १२० ॥
शीताम्बुसेकः सहसा वमिमूर्च्छाययोर्मुखे ।

---

१ 'तीमयेत्' इति पाठः. २ 'तत्कल्कस्य रसं' इति क्वचित्.

शेषं पिबेत् क्रमापाये स्थिरतां गत ओजसि ॥ १२१ ॥
विदाहपरिहाराय परं शीतानुलेपनः ।
धारयेत्साम्बुकणिका मुक्ताः कर्पूरमालिकाः ॥ १२२ ॥
कुडवोऽस्य परा मात्रा तदर्धं केवलस्य तु ।
पलं पिष्टस्य तन्मज्ज्ञः सभक्तं प्राक् च शीलयेत् ॥१२३॥
जीर्णशाल्योदनं जीर्णे शङ्खकुन्देन्दुपाण्डुरम् ।
भुञ्जीत यूपैः पयसा रसैर्वा धन्वचारिणाम् ॥ १२४ ॥
मद्यमेकं पिबेत्तत्र मृद्प्रबन्धे जलान्वितम् ।
अमद्यपस्त्वारनालं फलाम्बु परिसिरिथकाम् ॥ १२५ ॥
तत्कल्कं वा समघृतं घृतपात्रे खजाहतम् ।
स्थितं दशाहादश्नीयात्तद्वद्वा वसया समम् ॥ १२६ ॥

विकञ्चुकप्राज्यरसोनगर्भान्
सशूल्यमांसान् विविधोपदंशान् ।
विमर्दकान् वा घृतशुक्तयुक्तान्
प्रकाममद्याल्लघु तुच्छमश्नन् ॥ १२७ ॥

पित्तरक्तविनिर्मुक्तसमस्तावरणावृते ।
शुद्धे वा विद्यते वायौ न द्रव्यं लशुनात्परम् ॥ १२८ ॥
प्रियाम्बुगुडदुग्धस्य मांसमद्याम्लविद्विषः ।
अतितिक्ष्णोरजीर्णं च रसोनो व्यापदे ध्रुवम् ॥ १२९ ॥
पित्तकोपभयादन्ते युञ्ज्यान्मृदु विरेचनम् ।
रसायनगुणानेवं परिपूर्णान्समश्नुते ॥ १३० ॥
ग्रीष्मेऽर्कतप्ता गिरयो जतुतुल्यं वमन्ति यत् ।

हेमादिषड्धातुरसं प्रोच्यते तच्छिलाजतु ॥ १३१ ॥
सर्वं च तिक्तकटुकं नात्युष्णं कटु पाकतः ।
छेदनं च विशेषेण लौहं तत्र प्रशस्यते ॥ १३२ ॥
गोमूत्रगन्धि कृष्णं गुग्गुल्वाभं विशर्करं मृत्स्नम् ।
स्निग्धमनम्लकषायं मृदु गुरु च शिलाजतु श्रेष्ठम् ॥१३३॥

व्याधिव्याधितसात्म्यं
समनुस्मरन् भावयेदयःपात्रे ।
प्राक् केवलजलधौतं
शुष्कं क्वाथैस्ततो भाव्यम् ॥ १३४ ॥

समगिरिजमष्टगुणिते निःक्वाथ्यं भावनौषधं तोये ।
तन्निर्यूहेऽष्टांशे पूतोष्णे प्रक्षिपेद् गिरिजम् ॥ १३५ ॥
तत्समरसतां यातं संशुष्कं प्रक्षिपेद्रसे भूयः ।
स्वैः स्वैरेवं क्वाथैर्भाव्यं वारान् भवेत्सप्त ॥ १३६ ॥
अथ स्निग्धस्य शुद्धस्य घृतं तिक्तकसाधितम् ।
त्र्यहं युञ्जीत गिरिजमेकैकेन तथा त्र्यहम् ॥ १३७ ॥
फलत्रयस्य यूषेण पटोल्या मधुकस्य च ।
[1]योगं योग्यं ततस्तस्य कालापेक्षं प्रयोजयेत् ॥ १३८ ॥
शिलाजमेवं देहस्य भवत्यत्युपकारकम् ।
गुणान् समग्रान् कुरुते सहसा व्यापदं न च ॥ १३९ ॥
एकत्रिसप्तसप्ताहं कर्षमर्धपलं पलम् ।
हीनमध्योत्तमो योगः शिलाजस्य क्रमान्मतः ॥ १४० ॥

१ 'योगयोग्य' इति पाठः.

संस्कृतं संस्कृते देहे प्रयुक्तं गिरिजाह्वयम् ।
युक्तं व्यस्तैः समस्तैर्वा ताम्रायोरूप्यहेमभिः ॥ १४१ ॥
क्षीरेणालोडितं कुर्याच्छीघ्रं रासायनं फलम् ।
कुलत्थान् काकमाचीं च कपोतांश्च सदा त्यजेत् ॥१४२॥

न सोऽस्ति रोगो भुवि साध्यरूपो
जत्वश्मजं यं न जयेत्प्रसह्य ।
तत्कालयोगैर्विधिवत्प्रयुक्तं
स्वस्थस्य चोर्जां विपुलां दधाति ॥ १४३ ॥

कुटीप्रवेशः क्षणिनां परिच्छदवतां हितः ।
अतोऽन्यथा तु ये तेषां सूर्यमारुतिको विधिः ॥ १४४ ॥
वातातपसहा योगा वक्ष्यन्तेऽतो विशेषतः ।
सुखोपचारा भ्रंशेऽपि ये न देहस्य बाधकाः ॥ १४५ ॥
शीतोदकं पयः क्षौद्रं घृतमेकैकशो द्विशः ।
त्रिशः समस्तमथवा प्राक् पीतं स्थापयेद्वयः ॥ १४६ ॥
गुडेन मधुना शुण्ठ्या कृष्णया लवणेन वा ।
द्वे द्वे खादन् सदा पथ्ये जीवेद्वर्षशतं सुखी ॥ १४७ ॥

हरीतकीं सर्पिषि सम्प्रताप्य
समश्नतस्तत्पिबतो घृतं च ।
भवेच्चिरस्थायि बलं शरीरे
सकृत् कृतं साधु यथा कृतज्ञे ॥ १४८ ॥

धात्रीरसक्षौद्रसिताघृतानि
हिताशनानां लिहतां नराणाम् ।
प्रणाशमायान्ति जराविकारा
ग्रन्था विशाला इव दुर्गृहीताः ॥ १४९ ॥

धात्रीकृमिघ्नासनसारचूर्णं
सतैलसर्पिर्मधुलोहरेणु ।
निषेवमाणस्य भवेन्नरस्य
तारुण्यलावण्यमविप्रणष्टम् ॥ १५० ॥

लोहं रजो वेल्लभवं च सर्पिः
क्षौद्रद्रुतं स्थापितमब्दमात्रम् ।
सामुद्रके बीजकसारकुम्भे
लिहन् बली जीवति कृष्णकेशः ॥ १५१ ॥

विडङ्गभल्लातकनागराणि
येऽश्नन्ति सर्पिर्मधुसंयुतानि ।
जरानदीं रोगतरङ्गिणीं ते
लावण्ययुक्ताः पुरुषास्तरन्ति ॥ १५२ ॥

खदिरासनयूषभाविताया-
स्त्रिफलाया घृतमाक्षिकप्लुतायाः ।
नियमेन नरा निषेवितारो
यदि जीवन्त्यरुजः किमत्र चित्रम् ॥ १५३ ॥

बीजकस्य रसमङ्गुलिहार्यं
शर्करामधुघृतं त्रिफलां च ।
शीलयत्सु पुरुषेषु जरत्ता
स्वागताऽपि विनिवर्तत एव ॥ १५४ ॥

पुनर्नवस्यार्धपलं नवस्य
पिष्टं पिबेद्यः पयसार्धमासम् ।
मासद्वयं तत्त्रिगुणं समां वा
जीर्णोऽपि भूयः स पुनर्नवः स्यात् ॥ १५५ ॥

मूर्वामृहत्यंशुमतीबलाना-
मुशीरपाठासनसारिवाणाम् ।
कालानुसार्यागुरुचन्दनानां
वदन्ति पौनर्नवमेव कल्पम् ॥ १५६ ॥

शतावरीकल्ककषायसिद्धं
ये सर्पिरश्नन्ति सिताद्वितीयम् ।
तान् जीविताध्वानमभिप्रपन्ना-
न्न विप्रलुम्पन्ति विकारचौराः ॥ १५७ ॥

पीताश्वगन्धा पयसार्धमासं
घृतेन तैलेन सुखाम्बुना वा ।
कृशस्य पुष्टिं वपुषो विधत्ते
बालस्य सस्यस्य यथा सुवृष्टिः ॥ १५८ ॥

दिने दिने कृष्णतिलप्रकुञ्चं
समश्नतां शीतजलानुपानम् ।
पोषः शरीरस्य भवत्यनल्पो
दृढीभवन्त्यामरणाच्च दन्ताः ॥ १५९ ॥

चूर्णं श्वदंष्ट्रामलकामृतानां
लिहन्ससर्पिर्मधुभागमिश्रम् ।
वृषः स्थिरः शान्तविकारदुःखः
समाः शतं जीवति कृष्णकेशः ॥ १६० ॥

सार्धं तिलैरामलकानि कृष्ण-
रक्षाणि सङ्क्षुद्य हरीतकीर्वा ।
येऽश्नुर्मयूरा इव ते मनुष्या
रम्यं परीणाममवाप्नुवन्ति ॥ १६१ ॥

शिलाजतुक्षौद्रविडङ्गसर्पि-
र्लोहाभयापारदताप्यभक्षः ।
आपूर्यते दुर्बलदेहधातु-
स्त्रिपञ्चरात्रेण यथा शशाङ्कः ॥ १६२ ॥

ये मासमेकं स्वरसं पिबन्ति
दिने दिने भृङ्गरजःसमुत्थम् ।
क्षीराशिनस्ते बलवीर्ययुक्ताः
समाः शतं जीवितमाप्नुवन्ति ॥ १६३ ॥

मासं वचामप्युपसेवमानाः
क्षीरेण तैलेन घृतेन वाऽपि ।
भवन्ति रक्षोभिरधृष्यरूपा
मेधाविनो निर्मलमृष्टवाक्याः ॥ १६४ ॥
मण्डूकपर्णीमपि भक्षयन्तो
भृष्टां घृते मासमनन्नभक्ष्याः ।
जीवन्ति कालं विपुलं प्रगल्भा-
स्तारुण्यलावण्यगुणोदयस्थाः ॥ १६५ ॥
लाङ्गलीत्रिफलालोहपलपञ्चाशतीकृतम् ।
मार्कवस्वरसे पिष्ट्या गुटिकानां शतत्रयम् ॥ १६६ ॥
छायाविशुष्कं गुटिकार्धमथा-
ऽपूर्वं समस्तामपि तां क्रमेण ।
भजेद्विरिक्तः क्रमशश्च मण्डं
पेयां विलेपीं रसकौदनं च ॥ १६७ ॥
सर्पिःस्निग्धं मासमेकं यतात्मा
मासादूर्ध्वं सर्वथा स्वैरवृत्तिः ।
वर्ज्यं यत्नात्सर्वकालं त्वजीर्णं
वर्षेणैवं योगमेवोपयुञ्ज्यात् ॥ १६८ ॥
भवति विगतरोगो योऽप्यसाध्यामयार्तः
प्रबलपुरुषकारः शोभते योऽपि वृद्धः ।

उपचितपृथुगात्रश्रोत्रनेत्रादियुक्तः
तरुण इव समानां पञ्च जीवेच्छतानि ॥ १६९ ॥

गायत्रीशिखिशिंशपासनशिवावेल्लाक्षकारुष्करान्
पिष्ट्वाष्टादशसङ्गुणेऽम्भसि घृतान् खण्डैः सहायोमयैः।
पात्रे लोहमये त्र्यहं रविकरैरालोडयन् पाचये-
दग्नौ चानु मृदौ सलोहशकलं पादस्थितं तत्पचेत् १७०

पूतस्यांशः क्षीरतोंऽशास्तथांशौ
भार्ङ्गीत्रिर्योस्ताद्भुौ वरायास्त्रयोंऽशाः।
अंशाश्चत्वारश्चेह हैयङ्गवीना-
देकीकृत्यैतत्साधयेत्कृष्णलौहे ॥ १७१ ॥

विमलखण्डसितामधुभिः पृथ-
ग्युतमयुक्तमिदं यदि वा घृतम्।
स्वरुचिभोजनपानविचेष्टितो
भवति ना पलशः परिशीलयन् ॥ १७२ ॥

श्रीमान्निर्धूतपाप्मा वनमहिषबलो
वाजिवेगः स्थिराङ्गः
केशैर्भृङ्गाङ्गनीलैर्मधुसुरभिमुखो
नैकयोषिन्निषेवी।
वाङ्मेधाधीसमृद्धः सुपटुहुतवहो
मासमात्रोपयोगाद्

धत्तेऽसौ नारसिंहं वपुरनलशिखा-
तप्तचामीकराभम् ॥ १७३ ॥
भर्तारं नारसिंहस्य व्याधयो न स्पृशन्त्यपि ।
चक्रोज्ज्वलभुजं भीता नारसिंहमिवासुराः ॥ १७४ ॥
भृङ्गप्रवालाननुनैव भृष्टान्
घृतेन यः खादति यन्त्रितात्मा ।
विशुद्धकोष्ठोऽसनसारसिद्ध-
दुग्धानुपस्तत्कृतभोजनार्थः ॥ १७५ ॥
मासोपयोगात् स सुखी जीवत्यब्दशतद्वयम् ।
गृह्णाति सकृदप्युक्तमविलुप्तस्मृतीन्द्रियः ॥ १७६ ॥
अनेनैव च कल्पेन यस्तैलमुपयोजयेत् ।
तानेवाप्नोति स गुणान् कृष्णकेशश्च जायते ॥ १७७ ॥
उक्तानि शक्यानि फलान्वितानि
युगानुरूपाणि रसायनानि ।
महानुशंसान्यपि चापराणि
प्राप्त्यादिकष्टानि न कीर्तितानि ॥ १७८ ॥
रसायनविधिभ्रंशाज्जायेरन् व्याधयो यदि ।
यथास्वमौषधं तेषां कार्यं मुक्त्वा रसायनम् ॥ १७९ ॥
सत्यवादिनमक्रोधमध्यात्मप्रवणेन्द्रियम् ।
शान्तं सद्वृत्तनिरतं विद्यान्नित्यरसायनम् ॥ १८० ॥
गुणैरेभिः समुदितः सेवते यो रसायनम् ।

स निर्वृतात्मा दीर्घायुः परत्रेह च मोदते ॥ १८१ ॥
शास्त्रानुसारिणी चर्या चित्तज्ञाः पार्श्ववर्तिनः ।
बुद्धिरस्खलिताऽर्थेषु परिपूर्णं रसायनम् ॥ १८२ ॥"

[ समाप्तं रसायनतन्त्रम् । ]

---

## चत्वारिंशोऽध्यायः ।

अथाऽतो वाजीकरणाध्यायं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"वाजीकरणमन्विच्छेत्सततं विषयी पुमान् ।
तुष्टिः पुष्टिरपत्यं च गुणवत्तत्र संश्रितम् ॥ १ ॥
अपत्यसन्तानकरं यत्सद्यःसम्प्रहर्षणम् ।
वाजीवाऽतिबलो येन यात्यप्रतिहतोऽङ्गनाः ॥ २ ॥
भवत्यतिप्रियः स्त्रीणां येन येनोपचीयते ।
तद्वाजीकरणं विद्धि देहस्योर्जस्करं परम् ॥ ३ ॥
धर्म्यं यशस्यमायुष्यं लोकद्वयरसायनम् ।
अनुमोदामहे ब्रह्मचर्यमेकान्तनिर्मलम् ॥ ४ ॥
अल्पसत्त्वस्य तु क्लेशैर्बाध्यमानस्य रागिणः ।
शरीरक्षयरक्षार्थं वाजीकरणमुच्यते ॥ ५ ॥
कल्यस्योदग्रवयसो वाजीकरणसेविनः ।
सर्वेष्वृतुष्वहरहर्व्यवायो न निवार्यते ॥ ६ ॥
अथ स्निग्धविशुद्धानां निरूहान्सानुवासनान् ।

घृततैलरसक्षीरशर्कराक्षौद्रसंयुतान् ॥ ७ ॥
योगविद्योजयेत्पूर्वं क्षीरमांसरसाशिनम् ।
ततो वाजीकरान् योगान् शुक्रापत्यविवर्धनान् ॥ ८ ॥
अच्छायः पूतिकुसुमः फलेन रहितो द्रुमः ।
यथैकश्चैकशाखश्च निरपत्यस्तथा नरः ॥ ९ ॥
स्खलद्गमनमव्यक्तवचनं धूलिधूसरम् ।
अपि लालाविलमुखं हृदयाह्लादकारकम् ॥ १० ॥
अपत्यं तुल्यता केन दर्शनस्पर्शनादिषु ।
किं पुनर्यद्यशोधर्ममानश्रीकुलवर्धनम् ॥ ११ ॥
शुद्धकाये यथाशक्ति वृष्ययोगान् प्रयोजयेत् ।
शरेक्षुकुशकाशानां विदार्या वीरणस्य च ॥ १२ ॥
मूलानि कण्टकार्याश्च जीवकर्षभकौ बलाम् ।
मेदे द्वे द्वे च काकोल्यौ शूर्पपर्ण्यौ शतावरीम् ॥ १३ ॥
अश्वगन्धामतिबलामात्मगुप्तां पुनर्नवाम् ।
वीरां पयस्यां जीवन्तीमृद्धिं रास्नां त्रिकण्टकम् ॥ १४ ॥
मधुकं शालिपर्णीं च भागांस्त्रिपलिकान् पृथक् ।
माषाणामाढकं चैतद्द्विद्रोणे साधयेदपाम् ॥ १५ ॥
रसेनाढकशेषेण पचेत्तेन घृताढकम् ।
दत्त्वा विदारीधात्रीक्षुरसानामाढकाढकम् ॥ १६ ॥
घृताच्चतुर्गुणं क्षीरं पेष्याणीमानि चावपेत् ।
वीरां स्वगुप्तां काकोल्यौ यष्टीं फल्गूनि पिप्पलीम् ॥ १७ ॥

द्राक्षां विदारीं खर्जूरं मधुकानि शतावरीम् ।
तत्सिद्धपूतं चूर्णस्य पृथक् प्रस्थेन योजयेत् ॥ १८ ॥
शर्करायास्तुगायाश्च पिप्पल्याः कुडवेन च ।
मरिचस्य प्रकुञ्चेन पृथगर्धपलोन्मितैः ॥ १९ ॥
त्वगेलाकेसरैः श्लक्ष्णैः क्षौद्राद्विकुडवेन च ।
पलमात्रं ततः खादेत् प्रत्यहं रसदुग्धभुक् ॥ २० ॥
तेनारोहति वाजीव कुलिङ्ग इव हृष्यति ।
विदारीपिप्पलीशालिप्रियालेक्षुरकाद्रजः ॥ २१ ॥
पृथक् स्वगुप्तामूलाच्च कुडवांशं तथा मधु ।
तुलार्धं शर्कराचूर्णात् प्रस्थार्धं नवसर्पिषः ॥ २२ ॥
सोऽक्षमात्रमतः खादेद्यस्य रामाशतं गृहे ।
आत्मगुप्ताफलान् क्षीरे गोधूमान् साधितान् हिमान् २३
माषान्वा सघृतक्षौद्रान् खादन् गृष्टिपयोऽनुपः ।
जागर्ति रात्रिं सकलामखिन्नः [1]खेदयेत्स्त्रियः ॥ २४ ॥
बस्ताण्डसिद्धे पयसि भावितानसकृत्तिलान् ।
यः खादेत्ससितान् गच्छेत्स स्त्रीशतमपूर्ववत् ॥ २५ ॥
चूर्णं विदार्या बहुशः स्वरसेनैव भावितम् ।
क्षौद्रसर्पिर्युतं लीढ्वा प्रमदाशतमृच्छति ॥ २६ ॥
कृष्णाधात्रीफलरजः स्वरसेन सुभावितम् ।
शर्करामधुसर्पिर्भिर्लीढ्वा योऽनु पयः पिबेत् ॥ २७ ॥
स नरोऽशीतिवर्षोऽपि युवेव परिहृष्यति ।

---

१ 'खेदयन्स्त्रियः' इति पाठः.

कर्षं मधुकचूर्णस्य घृतक्षौद्रसमन्वितम् ॥ २८ ॥
पयोऽनुपानं यो लिह्यान्नित्यवेगः स ना भवेत् ।
कुलीरशृङ्ग्या यः कल्कमालोड्य पयसा पिबेत् ॥ २९ ॥
सिताघृतपयोऽन्नाशी स नारीषु वृषायते ।
यः पयस्यां पयःसिद्धां खादेन्मधुघृतान्विताम् ॥ ३० ॥
पिबेद्बाष्कयणं चानु क्षीरं न क्षयमेति सः ।
स्वयङ्गुप्तेक्षुरकयोर्बीजचूर्णं सशर्करम् ॥ ३१ ॥
धारोष्णेन नरः पीत्वा पयसा रासभायते ।
उच्चटाचूर्णमप्येवं शतावर्याश्च योजयेत् ॥ ३२ ॥
चन्द्रशुभ्रं दधिसरं ससितं षष्टिकौदनम् ।
पटे सुमार्जितं भुक्त्वा वृद्धोऽपि तरुणायते ॥ ३३ ॥
श्वदंष्ट्रेक्षुरमाषात्मगुप्ताबीजशतावरीः ।
पिबन् क्षीरेण जीर्णोऽपि गच्छति प्रमदाशतम् ॥ ३४ ॥
यत्किंचिन्मधुरं स्निग्धं बृंहणं बलवर्धनम् ।
मनसो हर्षणं यच्च तत्सर्वं वृष्यमुच्यते ॥ ३५ ॥
द्रव्यैरेवंविधैस्तस्माद्दर्पितः प्रमदां व्रजेत् ।
आत्मवेगेन चोदीर्णः स्त्रीगुणैश्च प्रहर्षितः ॥ ३६ ॥
सेव्याः सर्वेन्द्रियसुखा धर्मकल्पद्रुमाङ्कुराः ।
विषयातिशयाः पञ्चशराः कुसुमधन्वनः ॥ ३७ ॥
इष्टा ह्येकैकशोऽप्यर्था हर्षप्रीतिकराः परम् ।
किं पुनः स्त्रीशरीरे ये सङ्घातेन प्रतिष्ठिताः ॥ ३८ ॥

नामापि यस्या हृदयोत्सवाय
यां पश्यतां तृप्तिरनाप्तपूर्वा ।
सर्वेन्द्रियाकर्षणपाशभूतां
कान्तानुवृत्तिव्रतदीक्षिता या ॥ ३९ ॥

कलाविलासाङ्गवयोविभूषा
शुचिः सलज्जा रहसि प्रगल्भा ।
प्रियंवदा तुल्यमनःशया या
सा स्त्री वृषत्वाय परं नरस्य ॥ ४० ॥

आचरेच्च सकलां रतिचर्यां
कामशास्त्रविहितामनवद्याम् ।
देशकालबलशक्त्यनुरोधा-
द्वैष्यतक्रममयोक्त्यविरुद्धाम् ॥ ४१ ॥

अभ्यञ्जनोद्वर्तनसेकगन्ध-
स्रक्पत्रवस्त्राभरणप्रकाराः ।
गान्धर्वकाव्यादिकथाप्रवीणाः
समस्वभावा वशगा वयस्याः ॥ ४२ ॥

दीर्घिका स्वभवनान्तनिविष्टा
पद्मरेणुमधुमत्तविहङ्गा ।
नीलसानुगिरिकूटनितम्बे
काननानि पुरकण्ठगतानि ॥ ४३ ॥

दृष्टिसुखा विविधा तरुजातिः
श्रोत्रसुखः कलकोकिलनादः ।
अङ्गसुखर्तुवशेन विभूषा-
चित्तसुखः सकलः परिवारः ॥ ४४ ॥
ताम्बूलमच्छमदिरा
कान्ता कान्ता निशा शशाङ्काङ्का ।
यद्यच्च किंचिदिष्टं
मनसो वाजीकरं तत्तत् ॥ ४५ ॥
मधु मुखमिव सोत्पलं प्रियायाः
कलरणना परिवादिनी प्रियेव ।
कुसुमचयमनोरमा च शय्या
किसलयिनी लतिकेव पुष्पिताग्रा ॥ ४६ ॥
देशे शरीरे च न काचिदार्ति-
रर्थेषु नाल्पोऽपि मनोविघातः ।
वाजीकराः सन्निहिताश्च योगाः
कामस्य कामं परिपूरयन्ति ॥ ४७ ॥
मुस्तापर्पटकं ज्वरे तृषि जलं मृद्भृष्टलोष्टोद्भवं
लाजाश्छर्दिषु, वस्तिजेषु गिरिजं, मेहेषु धात्रीनिशे, ।
पाण्डौ श्रेष्ठमयोऽभयाऽनिलकफे, प्लीहामये पिप्पली,
सन्धाने कृमिजा, विषे शुकतरु,र्मेदोनिले गुग्गुलुः, ॥४८॥

वृषोऽस्रपित्ते, कुटजोऽतिसारे,
भल्लातकोऽर्शःसु, गरेषु हेम ।
स्थूलेषु तार्क्ष्यं, कृमिषु कृमिघ्नं,
शोषे सुरा च्छागपयोऽनुमांसम्, ॥ ४९ ॥
अक्ष्यामयेषु त्रिफला, गुडूची
वातास्ररोगे, मथितं ग्रहण्याम् ।
कुष्ठेषु सेव्यः खदिरस्य सारः,
सर्वेषु रोगेषु शिलाह्वयं च ॥ ५० ॥
उन्मादं घृतमनवं शोकं मद्यं ऽपस्मृतिं[1] ब्राह्मी ।
निद्रानाशं क्षीरं जयति रसाला प्रतिश्यायम् ॥ ५१ ॥
मांसं कार्श्यं लशुनः प्रभञ्जनं स्तब्धगात्रतां स्वेदः ।
गुल्मअर्याः खपुरो नस्यास्स्कन्धांसबाहुरुजम् ॥ ५२ ॥
नवनीतखण्डमर्दितमौष्ट्रं मूत्रं पयश्च हन्त्युदरम् ।
नस्यं मूर्धविकारान् विद्रधिमचिरोत्थमस्रविस्रावः ॥ ५३ ॥
नस्यं कवलो मुखजान् नस्याञ्जनतर्पणानि नेत्ररुजः ।
वृद्धत्वं क्षीरघृते मूर्च्छां शीताम्बुमारुतच्छायाः ॥ ५४ ॥
समशुण्ठ्यार्द्रकमात्रा मन्दे वह्नौ श्रमे सुरा स्नानम् ।
दुःखसहत्वे स्थैर्ये व्यायामो गोक्षुरुर्हितः कृच्छ्रे ॥ ५५ ॥
कासे निदिग्धिका पार्श्वशूले पुष्करजा जटा ।
वयसः स्थापने धात्री त्रिफलागुग्गुलुर्व्रणे ॥ ५६ ॥

---

१ 'विसंस्मृतिं' इति पाठः.

बस्तिर्वातविकारान्
पैत्तान् रेकः कफोद्भवान् वमनम् ।
क्षौद्रं जयति बलासं
सर्पिः पित्तं समीरणं तैलम् ॥ ५७ ॥

इत्यध्यं यत्प्रोक्तं रोगाणामौषधं शमायालम् ।
तद्देशकालबलतो विकल्पनीयं यथायोगम् ॥ ५८ ॥

इत्यात्रेयादागमय्यार्थसूत्रं
तत्सूक्तानां पेशलानामतृप्तः ।
भेडादीनां सम्मतो भक्तिनम्रः
पप्रच्छेदं संशयानोऽग्निवेशः ॥ ५९ ॥

दृश्यन्ते भगवन् केचिदात्मवन्तोऽपि रोगिणः ।
द्रव्योपस्थातृसम्पन्ना वृद्धवैद्यमतानुगाः ॥ ६० ॥

क्षीयमाणामयप्राणा विपरीतास्तथापरे ।
हिताहितविभागस्य फलं तस्मादनिश्चितम् ॥ ६१ ॥

किं शास्ति शास्त्रमस्मि-
न्निति कल्पयतोऽग्निवेशमुख्यस्य ।
शिष्यगणस्य पुनर्वसु-
राचख्यौ कार्त्स्न्येतस्तत्त्वम् ॥ ६२ ॥

न चिकित्साऽचिकित्सा च तुल्या भवितुमर्हति ॥
विनापि क्रियया स्वास्थ्यं गच्छतां षोडशांशया ॥ ६३ ॥

आतङ्कपङ्कमग्नानां हस्तालम्बो भिषग्जितम् ।
जीवितं म्रियमाणानां सर्वेषामेव नौषधात् ॥ ६४ ॥
न ह्युपायमपेक्षन्ते सर्वे रोगा न चान्यथा ।
उपायसाध्याः सिध्यन्ति नाहेतुर्हेतुमान् यतः ॥ ६५ ॥
यदुक्तं सर्वसम्पत्तियुक्तयापि चिकित्सया ।
मृत्युर्भवति तत्रैवं नोपायेऽस्त्यनुपायता ॥ ६६ ॥
अप्येवोपाययुक्तस्य धीमतो जातुचित्क्रिया ।
न सिध्येद्दैववैगुण्यान्न त्वियं षोडशात्मिका ॥ ६७ ॥
कस्यासिद्धोऽग्नितोयादिः स्वेदस्तम्भादिकर्मणि ।
न प्रीणनं कर्शनं वा कस्य क्षीरगवेधुकम् ॥ ६८ ॥
कस्य माषात्मगुप्तादौ वृष्यत्वे नास्ति निश्चयः ।
विण्मूत्रकरणाक्षेपौ कस्य संशयितौ यवे ॥ ६९ ॥
विषं कस्य जरां याति मन्त्रतन्त्रविवर्जितम् ।
कः प्राप्तः कल्पतां पथ्याहते रोहिणिकादिषु ॥ ७० ॥
अपि चाकालमरणं सर्वसिद्धान्तनिश्चितम् ।
महतापि प्रयत्नेन वार्यतां कथमन्यथा ॥ ७१ ॥
चन्दनाद्यपि दाहादौ रूढमागमपूर्वकम् ।
शास्त्रादेव गतं सिद्धिं ज्वरे लङ्घनबृंहणम् ॥ ७२ ॥
चतुष्पाद्गुणसम्पन्ने सम्यगालोच्य योजिते ।
मा कृथा व्याधिनिर्घाते विचिकित्सां चिकित्सिते ॥ ७३ ॥

एतद्धि मृत्युपाशानामकाण्डे छेदनं दृढम् ।
रोगोत्रासितभीतानां रक्षासूत्रमसूत्रकम् ॥ ७४ ॥
एतत्तदमृतं साक्षाज्जगत्यायासवर्जितम् ।
याति हालाहलत्वं च सद्यो दुर्भाजनस्थितम् ॥ ७५ ॥
अज्ञातशास्त्रसद्भावान् शास्त्रमात्रपरायणान् ।
त्यजेद्दूराद्भिषक्पाशान् पाशान् वैवस्वतानिव ॥ ७६ ॥
भिषजां साधुवृत्तानां भद्रमागमशालिनाम् ।
अभ्यस्तकर्मणां भद्रं भद्रं भद्राभिलाषिणाम् ॥ ७७ ॥
इति तन्त्रगुणैर्युक्तं तन्त्रदोषविवर्जितम् ।
चिकित्साशास्त्रमखिलं व्याप्याथ परितः स्थितम् ॥ ७८ ॥
विपुलामलविज्ञानमहामुनिमतानुगम् ।
महासागरगम्भीरसङ्ग्रहार्थोपलक्षणम् ॥ ७९ ॥

अष्टाङ्गवैद्यकमहोदधिमन्थनेन
योऽष्टाङ्गसङ्ग्रहमहामृतराशिराप्तः ।
तस्मादनल्पफलमल्पसमुद्यमानां
प्रीत्यर्थमेतदुदितं पृथगेव तन्त्रम् ॥ ८० ॥

इदमागमसिद्धत्वात्प्रत्यक्षफलदर्शनात् ।
मन्त्रवत्सम्प्रयोक्तव्यं न मीमांस्यं कथञ्चन ॥ ८१ ॥
दीर्घजीवितमारोग्यं धर्ममर्थं सुखं यशः ।
पाठावबोधानुष्ठानैरधिगच्छत्यतो ध्रुवम् ॥ ८२ ॥

एतत्पठन् सङ्ग्रहबोधशक्तः
स्वभ्यस्तकर्मा भिषगप्रकम्प्यः ।
आकम्पयत्यन्यविशालतन्त्र-
कृताभियोगान्यदि तत्र चित्रम् ॥ ८३ ॥

यदि चरकमधीते तद्ध्रुवं सुश्रुतादि-
प्रणिगदितगदानां नाममात्रेऽपि बाह्यः ।
अथ चरकविहीनः प्रक्रियायामखिन्नः
किमिह खलु करोतु व्याधितानां वराकः ॥८४॥

अभिनिवेशवशादभियुज्यते
सुभणितेऽपि न यो दृढमूढकः ।
पठतु यत्नपरः पुरुषायुषं
स खलु वैद्यकमाद्यमनिर्विदः ॥ ८५ ॥

वाते पित्ते श्लेष्मशान्तौ च पथ्यं
तैलं सर्पिर्माक्षिकं च क्रमेण ।
एतद् ब्रह्मा भाषते ब्रह्मजो वा
का निर्मन्त्रे वक्तृभेदोक्तिशक्तिः ॥ ८६ ॥

अभिधातृवशात् किंवा द्रव्यशक्तिर्विशिष्यते ।
अतो मत्सरमुत्सृज्य माध्यस्थ्यमवलम्ब्यताम् ॥ ८७ ॥

ऋषिप्रणीते प्रीतिश्चेन्मुक्त्वा चरकसुश्रुतौ ।
भेडाद्याः किं न पठ्यन्ते तस्माद् ग्राह्यं सुभाषितम् ॥८८॥

हृदयमिव हृदयमेतत्सर्वायुर्वेदवाङ्मयपयोधेः ।
कृत्वा यच्छुभमाप्तं शुभमस्तु परं ततो जगतः ८९ ॥

इति श्रीसिंहगुप्तसूनुवाग्भटविरचितायामष्टाङ्गहृदय-
संहितायामुत्तरस्थानं समाप्तम् ॥

## समाप्तमिदमष्टाङ्गहृदयम् ॥

# अथ पारिभाषिकशब्दकोषः.



अ.

**अकल्पः**-रोगी.

**अकुप्यम्**-सुवर्णम्.

**अक्षिपाकः**-नेत्ररोगविकल्पः, स च शुष्क-अल्पशोफ-सशोफेति भेदैः त्रिधा (पृ. ६४९).

**अखलः**-वैद्यराट्.

**अगदः**-विषघ्नमौषधम्.

**अग्निदोषाः**-मन्द-तीक्ष्णादिजठराग्नेर्विकाराः.

**अग्निमान्द्यम्**-Dyspepsia

**अङ्गमर्दः**-शरीरे आघातसदृक्पीडा.

**अजपदम्**-चर्मकारशस्त्रं.

**अजीर्णाशनम्**-अपच्यमान आहारः.

**अतिप्रलापः**-Delirium.

**अतिप्रवृत्तिः**-मलादीनां अतिशयेनोत्सर्गः.

**अतिबला**-मुद्रा(चिकणा)-सदृशो वनस्पतिविशेषः.

**अतिसंसर्गः**-रेचकादीनामतिशयेन परिणमनं, इन्द्रियव्यापारस्य(कायिकादिकर्मणा) अतिरेकः, (व्यत्ययो वा.)

**अतिसारः**-Diarrhœa.

**अतिसारी**—अतिसाररोगी.

**अतिस्निग्धः**-स्नेहनकार्येण अतिरेकीभूतः (पृ. १०४).

**अधिपः**–तन्नामकं मर्म मूर्ध्न्यन्ते ( अग्रभागे ) वर्तते ( पृ. २१९ ).

**अधिष्ठानम्**–आश्रयस्थानम्.

**अध्यस्थिः** अस्थ्न्युपर्युद्भूयमानोऽस्थिमयः शोथ औन्नत्यं वा.

**अनुनादः**–सुस्पष्टध्वनिः.

**अनुलोमः**–स्वाभाविकदिशमनुवर्तमानः.

**अनुलोमनम्**–वातादीन्स्वस्वपन्थानं स्थानं प्रति वा नीयमानं; तत्क्रियासमर्थं वा औषधम्.

**अनुवासनं**– } **अनुवासनबस्ति** } गुदद्वारेण स्नेहयुतो दीयमानो बस्तिः.

**अनुवासितः**–उपर्युक्तबस्ति(पिचकारी)योजितः.

**अनूपः**–जलविपुलो वृक्षव्याप्तः प्रदेशः; महामृगजलधर–मत्स्यादयः प्राणिनो वा.

**अन्त्रम्**–Intestine.

**अन्त्रवृद्धिः**–Inguinal Hernia.

**अन्येद्युष्कः**–अनुदिनो शीतज्वरः.

**अन्वर्थकः**–शब्दार्थमनुसर्यमाणः.

**अपक्वः**–न पक्वतां प्राप्तः.

**अपतन्त्रकम्**-Hysteria.

**अपस्तम्भः**– } **अपलापा**– } हृदन्तर्गतसिरामर्मणी

**अप्रतिकार्यः**–औषधादियोजनया न प्रतिकर्तुं समर्थः–असाध्यः.

**अब्धातुः**–शरीरगतो जलमयधातुः जलांशो वा.

**अभया**–हरीतकी.

**अभिघातः**–सहसाघातो रुग् वा.

**अभिचारः**–मान्त्रिकं कर्म.

**अभिषुकम्**–फलविशेषः.

**अभिष्यन्दि**–नयनादिस्रोतस्सु राग–स्रावाद्युत्पादकम्.

**अभ्यङ्गः**–शरीरे तैलादिस्नेहेन अभ्यञ्जनं मर्दनं वा.

**अभ्यन्तरः**–अन्तर्गतः.

**अम्लपित्तम्**–Acidity.

**अम्लविपाकी**–कोष्ठे यस्याम्लविपाको भवति.

**अम्लवेतसम्**–अम्लफलविशेषः.

**अयोगः**–बस्त्यादीनां परिणामराहित्यम्.

**अरिष्टम्**–औषधं मद्यम्.

**अर्दितवायुः**–वक्त्रवक्रत्वधर्मा वातरोगः (Facial palsy).

**अर्धावभेदः**–Hemicrania (अर्धशिशी).

**अर्बुदम्**–Malignant Tumour.

**अर्मरोगः**–नेत्रे शुक्लात्कृष्णं प्रति प्रसार्यमाणो नेत्रविकारः (Pterygium).

**अर्मशेषः**–शस्त्रकर्मादवशिष्टं अर्म.

**अर्शः**–गुदेऽङ्कुराद्युत्पादको व्याधिः. (Piles, Hæmorrhoids.)

**अलाबुः**–कटुतुंबी.

**अल्पवीर्यः**–स्वल्पसत्त्वः.

**अवगाहः**– } जलादिषूपवेशनं.
**अवगाहनम्**– }

**अवम्यः**-वमनक्रियायां न युक्तः.

**अवलेहः**-लेहः, तत्सदृशं वा औषधम्.

**अवष्टम्भः**-मलादीनामवरोधः.

**अवष्टम्भकम्**-प्रतिरोधकम्.

**अविदाहि**-न दह्यमानम्.

**अवेध्याः**-वेधनक्रियाऽनर्हाः.

**अव्यक्तरसः**-वक्तुमशक्यं रुचिवैशिष्ट्यम्.

**अश्मरी**-Calculus.

**अष्ठीला**-Enlargement of Prostate.

**असात्म्यं**-विरुद्धाहारादि.

**असृग्दरः**-रक्तप्रदरनामा स्त्रीरोगः(तांबडी धुपणी).

**अस्थिभग्नम्**-Fracture.

**अस्रम्**-रक्तम्, स्त्रीणां मासिकमार्तवं वा.

## आ.

**आकुञ्चनम्**-संकोचः.

**आग्नेयम्**-यस्मिन्नग्नेरंशबहुलं तत्.

**आटोपः**-उदरे गुडगुडेति जायमानो ध्वनिः.

**आढकम्**-२५६ तोलकाः, प्रस्थचतुष्टयं वा.

**आतपसेवनम्**-सूर्यातपसेवनम्.

**आध्मानम्**-वाय्वादिना जठराध्मानम्. (Tympanitis, Metiorism.)

**आनाहः**-Constipation.

**आनूपः**-देशविशेषः; मत्स्यादयः प्राणिनो वा.

**आप्यम्**-जलाशविपुलं, जलसंबन्धि वा.

**आम**-दुष्टदोषाणां परस्परैरसम्मीलनोत्पन्नं द्रव्यं; अपक्वः अपक्वो दूषितो वा अन्नरसः (पृ. ८७).

**आमवातः**-Rhumatism

**आमाजीर्णम्**-बलास-(कफ)जन्यमजीर्णम्.

**आमातिसार**-Mucous-colitis

**आमाधिकम्**-आमातिरेकयुक्तम्.

**आमाशयः**-भक्षितान्नस्य प्रथमतः उदरे यस्थाने तस्य प्रवृत्तिस्तत्. (Stomach.)

**आर्तवम्**-स्त्रीणां प्रतिमासिको रजःस्रावः.

**आवरणम्**-आच्छादनम्.

**आवर्तः**-भ्रुवोरुपरिगतं मर्म (पृ. २१८).

**आवर्तकी**-दृष्टेश्चाञ्चल्यं (मोतिबिन्दुरोगः).

**आवृतः**-आवरणेन युतः; आच्छादितो वा.

**आशयः**-रक्ताद्याश्रयीभूतः शरीरस्थकोशः; अवकाशो वा.

**आशुकारी**-शीघ्रगतिकः (रोगः; विकारो वा.)

**आश्चोतनं**-नेत्रे द्रवौषधबिन्दुप्रक्षेपः.

**आसवम्**-मद्यम्.

**आसुतः**-(पृ. २९)

**आस्थापनः**-मलहरणशीलो बस्तिः; निरूहबस्तिः.

**आस्यपाकः**-मुखपाकनाम्नी वक्त्रविकृतिः.

**आस्रावः**-नेत्रविकारः. (पृ. ६२१).

इ.

**इङ्गुदी**–औषधिविशेषः ( हिंगणबेट )

**इत्कटः**–औषधिविशेषः.

**इन्द्रबस्तिः**–जानोः (अधस्तात्) पार्श्वदेशगतं मर्म.

**इन्द्रवारुणी**–औषधिविशेषः ( इंद्रावण ).

उ.

**उत्कारिका**–पिष्टविकृतिः ( पोळी, भाकर ).

**उत्क्लेशः**–वमनाभासः.

**उत्क्षेपः**–कर्णनेत्रयोर्मध्यगं मर्म.

**उत्तानम्**–नातिदूरस्थं त्वचः (Superficial).

**उत्सर्गः**–बहिर्निष्कासनम् ( विष्ठादि ).

**उत्सादनम्**–व्रणरोपणम्.

**उदकमेहः**–Diabetes Insipidus.

**उद्रेकः**–प्रकोपः.

**उद्वर्तनम्**–यस्यकस्याप्यौषधिकल्कस्य शरीरेऽभ्यञ्जनम्.

**उद्वेगः**–कोपातिरेकः, अतिवेगो वा.

**उन्दुकः**–मलाशयः ( Rectum ).

**उपचारः**–शुश्रूषा ( Nursing ).

**उपदंशः**-Soft Cancre.

**उपनाहनम्**–स्वेदविशेषः (पोटीस)( पृ.१०५ ).

**उपविषाणि**–नातितीव्रविषाणि.

**उपशयः**–रोगस्याल्पीभावः.

**उरःक्षतम्**–Pulmonary cavitation.

**उष्णवीर्यम्**–( पृ. ६५ ).

उन्मादः–Insanity.

ऊ.

ऊर्ध्वजत्रुगतः–हृदुपरिस्थभागजन्यः.

ऊर्ध्ववातः–श्वास-च्छर्द्यादिरूपेण वायोरूर्ध्वगतिः.

ऋ.

ऋक्षः–मृगजातिविशेषः (रोहीमृग).

ऋद्धिः– } वृष्यो वनस्पतिविशेषः.
ऋषभक– }

ए.

एककुष्ठम्–कुष्ठभेदः.

एलवालुकम्–सुगन्धिद्रव्यविशेषः.

एषणी–नाडीव्रणगत्यन्वेषणशस्त्रं; (सळई).

ऐ.

ऐन्द्री–एला; वनस्पतिविशेषः(नरवेल?) कर्कटी.

ओ.

ओजः–शरीरगतसप्तधातुसारः; शुक्रादेकादेव वा उत्पन्नं (Vital force.)

औ.

औपसर्गिकः–स्पर्शसंचारी (त्वग्दष्ट्यादिरोगाः); (पृ. ६३२) आघातश्च; रोगान्तरेऽवलम्बमानः.

औदकाः–जलसंबंधिनः (जन्त्वादयः).

औद्भिदम्–क्षारभूमिजन्यं लवणम्.

क.

कक्षादाहः–कक्षाजन्यः सदाहः शोफः (काखमांजरीसारखी सूज).

कच्छुः–चर्मरोगः (खरूज)

कणभः–कीटविशेषः.

**कण्डरा**-रज्जुसदृशं शुक्लं स्नायु.

**कदरम्**-Corn.

**कर्णनादः**-कर्णध्वनिः.

**कर्णपीठम्**-कर्णशष्कुली.

**कर्णपूरणम्**-कर्णे तैलादीनां(बिन्दुप्रमाणः)प्रक्षेपः.

**कर्णस्रोतः**-कर्णनलिका.

**कर्णिका**-व्रणजः शोफः.

**कर्शनं**-कार्श्यकर्मः लङ्घनं.

**कललम्**-नातिघनं शुक्ररजोमिश्रणात्मकं गर्भपूर्वस्वरूपम्.

**कला**-शरीरगता त्वक्.

**कल्कः**-द्रवाप्लुतं पिष्टमौषधम् (पृ. ५७०).

**कल्पः**-औषधीनां क्काथचूर्ण-गुटिकाद्याः प्रकाराः.

**कल्यः**-रोगरहितः; प्रभातः.

**कवलः**-कपोलौ कंठं च संचार्यो गण्डूषः (पृ.१२३)

**काकमाची**-ओषधिविशेषः (कांगोणी).

**काकोली**-जीवनीयौषधिविशेषः.

**काचः**-दृष्टिविकारः.

**कामला**-(Jaundice.)

**कासः**-Cough.

**किकिसानि**-ऊरुस्तनोदरे प्रसूतिजा वलिविशेषाः.

**किटिभम्**-कुष्ठरोगविशेषः.

**किट्टम्**-लोहमलः, मलः.

**किलाटः**-तक्रकूर्चिका, (ताकाची निवळी; खर्वस).

**किलासः**-कुष्ठभेदः.

**कुटीप्रावेशिकः**-रसायनसेवनविधिः (पृ.७८५)

**कुडवः**-चतुःपलानि (१६ तोलकाः.)

**कुष्ठतैलम्**-कुष्ठादिद्रव्यैः कृतं तैलम्. (पृ. ५१४)

**कूर्चा**-हस्तपादतलगता मांसरज्जुग्रन्थिः; कण्ठशिरयोर्मध्यगः मांसपिण्डाकारप्रदेशः.

**कूर्चिका**-तक्रदध्यादुपरिलभ्यो द्रवः (निवळी).

**कृच्छ्रसाध्यः**-कष्टसाध्यः.

**कृत्या**-मन्त्रसामर्थ्येनोत्पन्ना रोगोत्पादिका राक्षसीविशेषः.

**केम्बुकम्**-शाकविशेषः. (Like cabbage).

**कोद्रूः**-हरिकधान्यम्.

**कोविदारः**-श्वेतकांचनः.

**कोष्ठं**-सुगन्धिद्रव्यविशेषः; ('चोख' इति व्यवहारे).

**कोष्ठाङ्गानि**-कोष्ठगता अन्त्र-वस्त्याद्यवयवाः.

**क्रूरः**-शब्दोऽयं गुरुकोष्ठे उपयुज्यते.

**क्लान्तिः**-क्रमः; ग्लानिर्वा.

**क्लेदः**-द्रवांशः; जलांशश्च.

**क्लेदनम्**-द्रवीकरणम्.

**क्लेदनशक्तिः**-द्रवीकरणसामर्थ्यम्.

**क्लेदांशः**-जलांशः.

**क्लोम**-पिपासास्थानावरणम; श्वासनलिकेति केचित्.

**क्वाथः**-कषायः.

**क्षतविद्रधिः**-कर्णक्षतजो विद्रधिः.

**क्षारसूत्रम्**-क्षारलिप्तं सूत्रम् (रज्जुः).

**क्षीरकाकोली**-वृष्या जीवनीयौषधिः.

**क्षीरिवृक्षः**–वट-पिप्पल-वेतस-उदुम्बरादिदुग्धवन्तो वृक्षाः.

**क्षुद्बोधः**–क्षुधाप्रवृत्तिः.

## ख.

**खमीरम्**–धान्यकाथेऽम्लीकृते तदुपरिलभ्यः फेनसदृशः पदार्थः, किण्वं (सुराप्रकृतिः Yeast) इत्यभिधेयः.

**खरपाकः**–खरचिक्कणतां प्राप्तः पाकः (पृ. ५७१)

**खल्ली**–Muscular spasm of hand & feet.

## ग.

**गणान्नं**-सामुदायिकभोजनं

**गण्डमाला**, **अपची**– Scrofula, Tubercle glands.

**गरपीडितः**–कृत्रिमविषपीडितः.

**गर्भस्रावः**–Abortion.

**गलग्रहः**–कण्ठरोधः.

**गाढः**–दृढबन्धनम्.

**गात्रभेदः**–अंगपीडा.

**गात्रसादः**-हस्तपादशून्यत्वाभासः.

**गुरुः**–जडः.

**गुल्फौ**–पादघुटिके.

**गुल्मः**–Abdominal Tumour.

**गोफणाबंधः**–गोफणासदृशो बन्धः.

**ग्रहणी**–Chronic Diarrhœa, Sprue.

**ग्रहाः**–भूतानां बाधा; बालग्रहाः; मन्याग्रहसदृशं अवयवानां चलनवलनादिक्रियाभावत्वम्.

**ग्राहकः**–स्तम्भकः, मलबद्धकरः.

**ग्राही**–अवष्टम्भकः; स्तंभकश्च.

**च.**

**चन्द्रिका**-मयूरपिच्छगतनेत्राकारवच्चित्रविच्चित्रा.

**चर्मदलम्**–कुष्ठविशेषः.

**चिकित्सा**–व्याधिप्रतीकारः; रोगेषु औषधयोजना, वैद्यकाङ्गं च.

**चिरकारी**–चिरकालवर्तमानः (रोगः).

**चुक्रम्**-शु(सु)क्तम्,अम्लीकृतमासवम्; (शिरका)

**ज.**

**जङ्गमः**–प्राणिजन्यः.

**जतुमणिः**–आजन्मतोत्पन्ना चर्मकीलवदुन्नता मांसग्रन्थिः.

**जत्रु**–हृन्मध्यगतमस्थि.

**जाङ्गलः**–नातिवृक्षजलः प्रदेशः; मृग-विष्किर-प्रतुदवर्गत्रयगताः प्राणिनः.

**जीवकम्**–औषधिविशेषः.

**जीवंजीवकः**-पक्षिविशेषः.

**जीवनम्**– } जीवन-
**जीवनीयम्**– } क्रियाया-
मुत्तेजकम्.

**जीवन्ती**–ओषधिविशेषः (हरिणदोडी.).

**ड.**

**डिम्बः**–मलाशयादधोगतप्रदेशः.

**त.**

**तंद्रा**–स्वल्पनिद्रा (झांपड).

**तर्पणम्**–बृंहणम्, पुष्टीकरणम्; नेत्रे आज्यादिद्रवानां धारणं वा.

**तिक्तः**–कटुद्रव्याणि.

**तिर्यक्**–किञ्चिद्वक्रः.

**तीक्ष्णमूलविरेचनम्**-दन्ती (जेपाल)मूलादीनां रेचकः.

**तुम्रसेवनी**-सेवनीविशेषः.

**त्रिकम्**-पृष्ठवंशाधोभागः.

**त्रिवृतम्**-निशोत्तरम्.

**त्रिवृद्घृतम्**-, **त्रैवृतघृतम्**- } निशोत्तरादिसिद्धं घृतम्.

## द.

**दद्रुः**-चर्मरोगः (गजकर्ण).

**दन्तनिर्घातनम्**-मांसात् (शैथिल्यकरणेन) दन्तनिष्कासनयन्त्रम्.

**दन्ती**-जेपालभेदः (तीव्ररेचकम्).

**दारणम्**-क्षारोपलेपतः (स्फोटादीनां) विदारणम्.

**दीपकम्**-क्षुधोत्तेजकम्.

**दीपनम्**-, **दीपनीयम्**- } क्षुधोत्तेजनकर्म; जठराग्निप्रदीपनम्.

**दुष्टव्रणः**-शुद्धव्रणलक्षणरहितः.

**दूषिकम्**-मुखोपरिगतं श्यामचिह्न( लासें ).

**दूष्याः**-वातादिभिर्दूषिता धातु-मलादयः.

**दोपलम्**-दोषप्रकोपकम्.

**दोहदजन्यम्**-गर्भिण्यभिलाषाजनितम्.

**द्रवः**-जलादिद्रवपदार्थाः; द्रवत्वं वा.

**द्रवन्ती**-एरण्डवृक्षः.

**द्रोणः**-मानविशेष.(१०२४ तोलकाः)

**द्वन्द्वजः**-दोषद्वयादुत्पन्नः.

**द्विकम्**-युग्मसम्बंधि; द्वयं वा.

## न.

**नस्यम्**-नासिकाद्वारा प्रक्षिप्तमौषधम्.

**नागसर्षपः**-बीजविशेष (शिरसभेद).

**नाडीस्वेदः**-नलिकायन्त्रेण धान्येन वोष्मस्वेदः (पृ. १०५).

**नाभसं**-आकाशसम्बन्धि.

**नाभिः**-इन्द्रियविशेष ; शङ्खावर्तो वा.

**निदानम्**-रोगाणां हेतुर्लक्षणं वा, तद्विविच्यमानं वैद्यशास्त्रं वा

**निजः**-शारीरिककारणोत्थः

**निरामः** पक्वः; आमरहितः

**निरूढः**-निरूहबस्तियोजितः.

**निरूहणम्**-निरूहबस्तियोजनम्.

**निरूहबस्तिः**-मल-दोषादीनां बहिर्निष्कासने युक्तो बस्तिविशेषः (पिचकारी).

**निर्यासः**-वृक्षोत्थाः पिच्छा-धूपादिपदार्थाः.

**निःशूकं**-तुषरहितम्.

**नैगमेषः**-बालग्रहविशेषः.

## प.

**पञ्चसारः**-मधु-शर्करा-मृद्वीका-खर्जूर-परूषकाणां पेयविशेषः (सरबत).

**पणवम्**-चर्मवाद्यविशेषः.

**परिपाकः**-पक्वदशाप्राप्तिः.

**परिषेकः**- } **परिषेचनम्**- } क्वाथादिद्रवपदार्थानां मूर्ध्नि धारणं; शरीरे सेचनं वा.

**परिस्रावः**-पिच्छिलं स्रवणम्.

**पलम्**-४ तोलकाः.

**पाकः**-पूयोत्पत्तिः; परिपक्वता वा.

**पाचनम्**-पक्वक्रिया; पक्वतापादनशीलं औषधं.

**पाञ्चभौतिकम्**-पृथिवी-अप्-तेज-वायु-आकाशात्मकम्.

**पाटनम्**-भेदनं; विदारणं वा.

**पादचतुष्टयम्**-वैद्यकस्य चत्वारः पादाः ( भिषक्-रोगी-औषधं-दूतश्च).

**पानकम्**-पेयविशेषः (पन्हें).

**पानात्ययः**-मद्यस्यातिपानं तदुद्भूतो वा मदात्ययनामा विकारः.

**पामा**-चर्मरोगविशेषः (पंण) Eczema.

**पार्थिवम्**-मृत्तिकोद्भूतम्.

**पार्श्वसन्धिः**-कटिपार्श्वगं मर्म.

**पिचुकम्**-( सांखंड ).

**पिच्छा**-वृक्षोत्थं चिक्कणद्रव्यं (गोंद); मुखाद्युद्भूयमानश्चिक्कणस्रावो वा ( Mucus ).

**पिच्छाबस्तिः**-पिच्छासदृशचिक्कणद्रव्यनिर्मितं बस्त्यौषधम्. (पृ.४०९)

**पिच्छिलम्**-चिक्कणम्.

**पिटिका**-मधुमेहादिविकारजन्यः पिडकाविशेषः.

**पिण्डस्वेदः**-(पृ.५५१टि.)

**पित्तलम्**-पित्तकारकम्.

**पिष्टकम्**-अर्मभेदः ( अक्ष्णोरुपरि वृद्धं मांसम् ).

**पीडनम्**-यस्योपलेपेन

स्फोटादिष्वंतराकर्षणकारकमौषधम्.

**पीलुः**-(अक्रोडवृक्ष).

**पुटपाकः**-(पृ० १४२).

**पुंसवनम्**-पुरुषसंतत्युत्पादको विधिरौषधं वा.

**पूतिशुक्रम्**-दुष्टं शुक्रं (वीर्यदोषः).

**पेशी** मांसरज्जुः(Muscle).

**पोथकी**-Granulation (खुपऱ्या).

**प्रकुञ्चः**-४ तोलकाः.

**प्रच्छानम्**-शृङ्गयोजनं.

**प्रतिलोमम्**-विपरीतमार्गगम्.

**प्रतिलोमनम्**-विपरीतमार्गप्रापणम्.

**प्रतिश्यायः**-Catarrah or Cold in the nose.

**प्रतिवापः**-घृतादिद्रवपदार्थाना पक्वक्रियायां पाचितः; पाके वा चूर्णप्रक्षेपः.

**प्रतिसारणम्**-जिव्हादिकेषु शुष्कार्द्रौषधयोर्लेपः घर्षणं वा (पृ. १३४).

**प्रदरः**-तन्नामकः स्त्रीरोगः (लाल किंवा सफेत धुपणी).

**प्रधमनम्**-नस्यभेदः (चूर्णस्य नलिकादिद्वारा नासिकायां धमनं).

**प्रमाथि**- दोषपूरितस्रोतस्सु प्रविश्य स्वतीक्ष्णतया दोषाणां द्रवीकरणेन स्रोतोमुखोद्घाटकारकमौषधं.

**प्रमेहाः**-Diseases of the urine.

**प्रमेहपिटिका**-Carbuncle.

**प्रलेपकः**-जीर्णज्वरभेदः.

**प्रवाहिणी वली**–गुदवलित्रयेऽत्यन्तर्गता वली.

**प्रवृत्तिः**–बहिर्निष्कासनं, मलादीनां उत्सर्गः.

**प्रसादः**–सत्त्वांशः.

**प्रसादनपुटपाक** (१४२)

**प्रसृतम्**–८ तोलकाः.

**प्रसेकः**–मुखे लालास्रावः.

**प्रस्थः**–६४ तोलकाः.

**प्रादेशिकः**–एकदेशीयः.

**प्रीणनम्**–तृप्तिकरमौषधम्

**प्लीहा**–Spleen.

### फ.

**फणी**–घ्राणमार्गद्वयस्य पार्श्वगे श्रोत्रवर्त्मगे मर्मणी.

**फलकोशः**–अंडकोशः.

**फलवर्तिः**–रेचकौषधलिप्ता वर्तिः.

**फिरङ्गोपदंशः**–Syphillis.

### ब.

**बद्धगुदोदरम्**–Intestinal obstruotion,

**बस्तिः**–मूत्राशयः.

**बस्तिकर्म**–बस्तियोजनं.

**बृहत्यादिगणः**–सिंही-व्याघ्री-द्विपर्णी-गोक्षुरयुतः

**बृहत्यौ**–स्तनमूलार्जवभागगते सिरे.

**बृहत्त्वम्**–स्थूलत्वम्.

**बृंहणम्**–पुष्टिकारकम्, पोषणं वा.

**बृंहणबस्तिः**-पौष्टिकबस्तिः.

**बृंहणात्मकं**–पोषणांशविशिष्टम्.

**ब्राह्मरसायनम्**–हरीतक्यवलेहः (पृ. ७८७).

### भ.

**भगन्दरम्**–Fistula in Ano.

**भल्लातकावलेहः**–अमृतरसपाकः ( पृ.७१५ ).

**भेदकम्** } मलद्रवकारि,
**भेदनम्** } सारकं वा.

**भ्रमः**–Giddiness.

## म.

**मक्कल्लशूलः**–प्रसूत्यनंतरजः शूलः ( वायगोळा ) (After pains).

**मंडलम्**–दद्रूवद्वर्तुलाकारत्वग्विकारः.

**मंडूरम्**–लोहमलः ( कीट ).

**मणिबन्धः**–बाहुमर्म.

**मधुरगणः**–घृतादिमधुरपदार्थाः ( पृ. ६८ )

**मनोवहस्रोतः**–मनोव्यापारप्रवर्तका नाडी.

**मंथः**–सर्पिषान्वितसक्तुपिष्टस्योष्णोदकेन पानं.

**मन्यास्तम्भः**–मन्याया वातादिना ग्रहः.

**मषः**–कृष्णचिन्हं, 'मसा' इति लोके. (Mole).

**मसूरिका**–Small-pox.

**मस्तु**–दध्युपरिलभ्यं वारि.

**महास्रोतः**-मुखाद्गुदद्वारावधि विद्यमाना महानलिका (Alimentary Canal).

**महाकुष्ठम्**–Leprosy.

**मात्रा**–औषधग्रहणे मानं ( Dose ).

**मात्राबस्तिः**–स्नेहपानकनिष्टप्रमाणसदृशमानः स्नेहबस्तिः (पृ. १२२).

**माषपर्णी**–( रानउडीद ).

**मिथ्यायोगः**–दुरुपयोगः, विपरीतो वा ( पृ. ३ ).

**मिश्रकघृतं**–स्नेहविशेषः.

**मूढगर्भः**–Difficult labour. ( पृ. १९७ ).

मूढवायुः–स्तब्धो वायुः.

मूत्रकृच्छ्रम्–Strangu-ary, Painful Mict-urition.

मूत्रशुक्रम्–मूत्रेण सह रेतसो गमनम्.

मूत्रहरीतकी–गोमूत्रपक्का हरीतकी (पृ.)

मूर्छा–Cyncope.

मूती–पोट्ली ( पुरचुंडी ).

मूत्रजठरम्–Distended bladder.

मूत्रजवृद्धि–Hydrocele.

मूत्राघातः–Obstructed micturition.

मूर्धतैलं–अभ्यंगादिप्रकारचतुष्टयेन मूर्ध्नि तैलधारणविधिः ( पृ. १२५ ).

मूर्धविरेचनम्–तीक्ष्णनस्यन नासिकाजलस्रुतिकरं.

मेदः–Fat, ( चर्बी, मांदें ).

मेदस्करम्–मेदोजनकम्.

मेदस्वी–मेदयुक्तः.

मेदा–बृंहणं वृक्षमूलम्.

मेदुरमांसम्–मेदोबहुलं मांसम्.

मेदोर्बुदम्–मेदोजन्यो रोगविशेषः ( अवाळू ).

मेदोवृद्धिः–Obesity.

मेधा–धारणाशक्तिः.

मेध्यं–बुद्धिवर्धकम्.

मेहः–मूत्राधिक्ययुतो विंशतिधा मूत्रदोषः, प्रमेहः.

मोचरसः–शाल्मलीपिच्छा

मोहः–स्मृतिभ्रंशः.

### य.

यकृत्–( Liver ).

यवागूः–षड्भागजले तन्दुलैः कृता पक्वपेया.

**यापनम्**—औषधैरसाध्यरोगस्य तावन्निग्रहः.

**यापनबस्तिः**—यापनकर्मशीलो बस्तिः.

**याप्यः**—यावदौषधोपक्रमं स्वास्थ्यशीलोऽसाध्यरोगः.

**यूषः**—धान्यक्वाथसारः.

**योगः**—विविधौषधानामेकीकरणम्.

**योगवाहि**—येन पदार्थेन सहानुशीलितस्तदनुरूपकार्यकरः.

**योनिव्यापदः**-Diseases of Vagina.

## र.

**रक्तार्शः**—सरक्तोऽर्शः.

**रक्षोघ्नम्**—भूतपिशाचादिनाशकम्.

**रजः**—चूर्णम्, स्त्रीणामार्तवं; आर्तवस्रावः.

**रसाः**—मधुरादिषड्रसाः, मांसस्य वा रसः ( सुरवा ).

**रसांजनम्**—रसवंती.

**रसायनी**—रसादिधातूनां सौष्ठवोत्पादिका.

**राजसः**—रजोगुणजः, विषयलोलुपो वा.

**रिष्टम्**—आगामिमृत्युनिदर्शकं चिन्हम्.

**रूक्षणम्**—शरीरस्य स्निग्धतापहारकम्.

**रोचकम्**—रुचिप्रदम्.

**रोपणं**—व्रणपूरकम्.

**रोमावर्तः**—विद्धे सद्यःप्राणहरं शिरोगतं मर्म.

## ल.

**लघुपंचमूलः**—बृहत्यादिगणः.

**लंघितः**–लंघनक्रियायोजितः.

**लट्वा**-पक्षिविशेषः (कवडा).

**लाजकक्षा**–कक्षायां लाजासदृशपिटिकोत्पत्तिः (पृ. ७३६).

**लीनः**–प्रच्छन्नोऽवष्टब्धो वा

**लूता**–ऊर्णनाभिः (कोळी).

**लेखनम्**–शोथादीनां द्रवीकरणम्.

**लोहितम्**–सव्यजंघामूलगं मर्म.

## व.

**वटकम्**–तोलकार्धकम्.

**वटादिगणः**–न्यग्रोधादिगणः (पृ. ९९).

**वयःस्थापनम्**–तारुण्यस्थापकं आयुर्वर्धकं वा.

**वर्त्मरोगाः**–नेत्रवर्त्मगना रोगाः.

**वर्ध्मरोगाः**–अंत्रवृद्धिजन्या अंडवृद्ध्यादयः.

**वर्मिमुखः**–वर्मिमत्स्यमुखसदृशमंदंशः (चिमटा)

**वली** वार्धक्यजास्त्वग्रेखाः.

**वाजीकरणम्**-सवीर्यवृद्धि कामोत्तेजकमौषधम्.

**वाट्यमंडः** / **वाट्यमंथः** } भर्जितयवपिष्टमंडः.

**वातरक्तम्**–सन्धिवातसदृशः पादजो रोगः (Gout.).

**वातातपिकः**-रसायनसेवनविधिविशेषः(पृ. ७८६)

**वातानुलोमनं**–वातस्य स्वस्थानं प्रति प्रापकं (औषधं).

**वाताभितापः**–वातजन्यो मस्तकशूलः.

**वाताष्ठीला**-उदरे ग्रन्थिविशेषोत्पादको वातरोगः.

**वातोत्तरः**-वाताधिक्ययुतः.

**वान्तः**-वमनौषधयोजितः

**वामकम्**-वमनकारि.

**वायव्यम्**-वायुविशिष्ट; तत्संबंधि वा.

**वारुणी**-श्वेतसुरा(Toody)

**वासाघृतम्**-(पृ. ३५४)

**विकलः**-बलरहितः.

**विकाषि** } **विकाषिता** } शरीरस्याङ्गमर्दसंधिशिथिलत्वादिशीलम्.

**विचर्चिका**-चर्मरोगविशेषः (पैण).

**वेपथुः**-Paralysis Agitans.

**विदारिका**-कक्षांऽडसंध्यादिजा ग्रंथिः.

**विदाहः**-विपाकः, पक्वत्वं च.

**विदाहि**-कंठविदाहि.

**विद्रधिः**-Absess.

**विद्रुतम्**-द्रवीभूतम्.

**विधुरे**-कर्णपृष्ठयोरधस्ताश्रिते मर्मणी.

**विपादिका**- } **विपादी**- } करपादादौ त्वक्स्फुटनशीलो रोगः.

**विबंधः**-प्रतिरोधः.

**विमार्गगामी**-व्युत्पथगः.

**विम्लापनम्**-ग्रंथ्यादीनां जीरणम्.

**विरिक्तः**-विरेचनौषधयोजितः.

**विरेचनम्**-रेचकम्.

**विलेपी**-पेयाविशेषः (आटवल).

विशदम्—पारदर्शकं, शुद्धम्.

विषमाग्निः—क्वचित् पचनकारी क्वचिदपचनकार्यग्निः.

विषमाशनम्—विषमाहारः, अकाले वा आहारः.

विषमूषिका—विषघ्नो वनस्पतिविशेषः. ( बकाणानिंब ).

विषूचिका—महामारी, (Cholera).

विष्टब्धम्—अवष्टंभयुक्तमजीर्णम्.

विसर्गकालः-दक्षिणायनं; यस्मिन्सूर्यः जीव-वनस्पतिषु बलं वितरति.

विसर्पः—

विस्फोटः—त्वग्विकारविशेषः ( पृ. ३१४)

वीर्यम्—द्रव्यगतं शीतोष्णादिकारणं तत्त्वं, रेतः शक्तिर्वा.

वृक्कौ—मूत्रपिंडौ.

वृद्धि-Scrotal Enlargement.

वृषणः—अंडः.

वृष्यम्—वाजीकरणं, कामोत्तेजकं च.

वेगावरोधः—मलमूत्रादीनामावेगे तन्निरोधः.

वैकल्यम्—बलहीनता.

वैकृतम्—अशुभम्.

व्यंगम्—मुखोपरिगतं श्याමवर्णं चिन्हम् ( वांग ).

व्यधः—सिरादीनां वेधः.

व्यवायि—पचनं विना शरीरप्रसरणशीलमौषधम्.

**व्योषादिविरेचनं**-कल्पस्थानोक्तास्त्रिकटुयुता निशोत्तरगुटिका:.

**व्रणरोपकम्**-व्रणपूरणशीलम्.

**व्रणशुक्रम्**-सव्रणं शुक्रम्, क्षतरूपमक्षिगतं शुक्रं (Ulser of Cornea).

**श.**

**शकृत्**-मलः.

**शंखः**-कर्णनेत्रयोः किंचिदुपरिगतं मर्म.

**शंखनाभिः**-शंखावर्तः.

**शंखपुष्पी**-वार्षिकी वनस्पतिः.

**शतघृतम्**-शतधा धौतं घृतम्.

**शतघ्नी**-गलरोगविशेषः; (पृ. ६७९) शस्त्रं च.

**शमः**-दोषाणां शमनं विम्लापनं वा.

**शमनम्**-दोषाणां समस्थितिप्रापकं तच्छीलं वौषधं.

**शरभः**-मृगविशेषः.

**शरावसंपुट**-भांडद्वयकृतः

**शर्करा**-मूत्रद्वारेण-सूक्ष्मा दृषदाकारधातुः.

**शर्करार्बुदम्**-क्षुद्ररोगविशेषः (पृ. ७३७).

**शलाका**-श्लक्ष्णा नेत्रौषधयोजिनी.

**शल्यम्**-शरीरोत्पन्नो बहिरन्तःप्रविष्टो वा रुगुत्पादकः पदार्थः (Foreign body)

**शशाङ्ककिरणम्**-कर्पूरनाडिकानामकं पक्वान्नम्.

**शाखाः**-करचरणादिकाः शरीरस्य चत्वारो भागाः.

**शांडाकी**-(पृ.२९).

**शाबरम्**- } लोध्रविशेषः.
**शाबरलोध्रम्.** }

**शारीरम्**-शरीररचनानिदर्शकमायुर्वेदशास्त्रम्, ( Anatomy ).

**शिग्र्वादिनस्यम्**-शिग्रुबीजादिजन्यतैलं(पृ.६७३).

**शिरःशूलः**-Headache.

**शिरोबस्तिः**-शिरसि (चर्मादिभिः) स्नेहधारणविशेषः ( पृ. १३५).

**शिरोभितापः**-मस्तकशूलः.

**शिरोविरेचनम्**-तीक्ष्णौषधप्रयोगेण नासिकातो जलनिःस्रवणकरम्.

**शीतवीर्यः**- ( पृ. ६४)

**शीतादः**-Spongy gums.

**शुक्तम्**-सूक्तम्.(शिर्का).

**शुक्रम्**-नेत्रगतो वा शुक्रप्रदेशः.

**शुक्रम्**-Cornial Ulcer.

**शुक्रलम्**-रेतोवर्धकम्.

**शुक्राश्मरी**-शुक्रजन्या मूत्रग्रंथिः.

**शुष्कार्शः**-रक्तस्रावविहीनमर्शः.

**शूकः**-जलजन्तुः; जलमंडूकसदृशो विषजन्तुर्वा.

**शूकधान्यम्**-गोधूमादि सतुषं धान्यम्.

**शूल्यमांसम्**-लोहशलाकाभर्जितं मांसम्.

**शृंगं**-विषाणं, (तुंबडी).

**शृंगाटकम्**-मूर्ध्र्युपरिस्थं मर्मचतुष्टयम्.

**शोथः**-शोफः(Swelling)

**शोधनम्**-रेचनवमनादिना शुद्धिः.

**शोफः**-शोथः ( सूज ).

**श्यामा**-कृष्णं श्यामोत्तरं.

श्रावणी-ओषधिविशेषः.

श्लीपदम्-Elephantiasis.

श्लेष्मा-कफः, बलासः.

श्वासः-Dyspnœa.

श्वित्रम्-शुक्लं कुष्टम्.

## स.

सततः-अहोरात्रे कालद्वयमनुवर्तको ज्वरः.

सद्योव्रणः-Traumatic Wound.

संकरादिस्वेदः-पिंडस्वेदादि ( बाफारा ).

सकीर्णाशनम्-समशनं, पथ्याऽपथ्याहाराणां सेवनं.

संघातः-तालूपरि वृद्धं मांसम् (पृ. ६०७).

संज्ञा-ज्ञानं, भानं वा.

सद्योव्रणः-आघातजन्यो व्रणः.

संततः-सततं समाहारी-व्याप्योऽविसर्गी ज्वरः.

संधावः-ताम्रादितीक्ष्णपदार्थयुक्तं नेत्रौषधम्.

संधिः-शरीरावयव-कालादीनां संधिः.

सन्निपातः-वात-पित्त-कफादीनामेककालिकः कोपः क्षयो वा.

सन्न्यासः-तीव्रो मूर्च्छाभेदः. (Apoplexy, Catalepsy).

संप्राप्तिः-दोषै रोगोत्पत्तिप्रकारः.

सम्यग्योगः-रेचक-वमनादीनां सम्यक्परिणमनं.

सरलनिर्यासः-सरलदेवदारोस्सुगन्धि पिच्छा.

सर्पिर्गुडः-घृतयुक्तगुटिकाः

**सर्षपपिटिकाः**-शिश्नोपर्युद्भूयमानाः सर्षपमानाः पिटिकाः.

**संव्यूहनं**-स्विष्टस्थानप्रापणं ऊर्ध्वीकरणं वा.

**संशोधनम्**-रेचन-वमनादिना ( दोषबहिर्निष्कासनं ) देहशुद्धिः.

**संसर्गः**-दोषद्वयस्य परस्परं संयोगः.

**संसर्गी**-वमन-विरेचनानंतरं पेयादिपानरूपको विधिः ( पृ. ११२ ).

**संसृष्टः**-संसर्गीभूतः.

**संस्कारः**-क्रियाविशेषः.

**संस्तरस्वेदः**-( पृ. ५५१ ).

**सहचरतैलं**-सहचरादि- ( कोहांटी ) जन्यतैलम् ( पृ. ५२८ ).

**सहजः**-आजन्मतोद्भूतः.

**सात्म्यम्**-अविरुद्धम्, औषधादिभी रोगोपशमः.

**सान्द्रत्वम्**-घनत्वम्.

**सान्निपातिकः**-त्रिदोषा- (वात पित्त-कफा)त्मकः.

**सारः**-सत्त्वांशः.

**सिध्म**-Cloasma (शिबें).

**सीधु**-इक्षुजन्यं मद्यम्.

**सीमंतः**-मूर्ध्निगता सेवनी.

**सुकुमारकतैलम्**-रसायनम् ( पृ. ४६२ ).

**सूतिकारोगः**-Peurperal fever.

**सुषिरं**-दंतरोगः(पृ.६७६).

**सूक्ष्मम्**-सूक्ष्मस्रोतस्स्वन्तः प्रविश्य स्रोतोबंधमोक्षकरं.

**सेकः**-सिंचनं, परिषेकः.

**सौवीरम्**-अम्लीकृतो यवपक्वपेयाविशेषः.

**स्तब्धः**–गतिरहितः.

**स्तंभः**–स्तब्धत्वं.

**स्तंभकः**–मलमूत्राद्यव-ष्टंभकः.

**स्तंभनं**–स्वेदनविपरीतं कर्म; मलाद्युपरोध्यौषध, तद्गुणं वा द्रव्यं.

**स्तैमित्यं**–आर्द्रवस्त्रावगुंठित-वत् शीतत्वार्द्रत्वाऽऽभासः.

**स्थगिकाबंधः**–शिश्न वृषणां गुष्ठादौ परितः पट्टबंधनं.

**स्थपनी**–भ्रूवोर्मध्यगं मर्म.

**स्थावरं**–वृक्ष-वनस्पत्याद्युद्भूतं.

**स्नेहः**–तैल-सर्पिरादीनि.

**स्नेहनं**–शरीरे स्नेहशीलनं.

**स्नेहनपुटपाकः**–मूर्ध्न्यौषधधारणविधिविशेषः.

**स्नेहपाकः**–तैल घृत-लेह्यादीनां पाकविधिः.

**स्नेहपानं**–घृतादिस्नेहपानं.

**स्पर्शहानिः**–लिंगरोगभेदः (पृ. ७४५).

**स्रावः**–रक्त-पूयादिस्रुतिः.

**स्रोतः**-शब्दोऽयं सिराऽन्त्र-नासादिछिद्रपूपयुज्यते; रक्तवाहिनी; नलिका.

**स्वरघ्नः**–गलरोगविशेषः.

**स्वरभ्रंशः**– } कंठध्वनि-
**स्वरभङ्गः**– } ग्रहः.

**स्वरसः**–सद्यःसमुद्धृता-द्रौषधेः क्षुण्णः पटपीडितो रसः.

**स्विन्नः**–स्वेदविधिप्रयुक्तः.

**सूक्तम्**–शुक्तं, (शिरका).

**स्वेदः**–घर्मोद्गमः.

**हताधिमन्थः**–नेत्ररोगविशेषः (पृ. ६४८).

**हनुग्रहः**–हनोः स्तंभः.

**हनुस्रंशः**-हनुसंधिविश्लेषः.

**हपुषादिघृतं**–हपुषादि–(शेरणी) घृतं (पृ.४६४).

**हिध्मा**–हिक्का, (उचकी).

**हिमः**–शीतकषायः (पृ. ५७०).

**हीनयोगः**–रेचकादीनां मानान्न्यूनं परिणमनं.

**हृद्ग्रहः**–हृदये स्तब्धता.

**हृद्व्रणः**–विद्रधिः.

**हृल्लासः**–कंठांतर्विदाहः.

**हृषीकम्**–कर्मेन्द्रियं, ध्वजो वा.

**हृष्टः**–काकभेदः, हर्षयुक्तो वा.

**हेतिः**–अग्निज्वाला, शस्त्रभेदः, सूर्यप्रभा च.